नमः श्री-अनुयोगाचार्येभ्यः प्रज्ञांशश्रीमद्विजयदानेभ्यः ।

श्री वीरसमाजग्रन्थरत्नं तृतीयम (३)



श्रीमच्छिवशर्मसूरीश्वरसन्दृब्धं श्रीमच्चक्रेश्वराचार्यप्रणीतभाष्यमलधारीयश्री-
हेमचन्द्राचार्यविहितवृत्तियुतं ।

# श्रीबन्धशतकप्रकरणम् ।






## लघुभाष्यं च

---

सकलतपोधनचूडामणिश्रीमन्मणिविजयगणिशिष्यरत्नमहातपस्विसमाम्भोधिपरमपूज्यश्रीमद्विजयसिद्धिसूरीश्वरोपदिष्टश्री-
राजनगरवास्तव्यश्रेष्ठिवर्य श्री दलपतभाइ भगुभाइ पत्नी गंगाबाई श्रेष्ठिवर्यश्रीहठीभाइ सुपुत्र उमाभाई पुत्र
पनालालकृतद्रव्यसाहाय्येन प्रकाशकः राजनगरस्थो वीरसमाजः

इद पुस्तकं राजनगर ( अमदावाद ) मध्ये शाह केशवलाल दलसुखभाई श्रीवीरसमाजसेक्रेटरी इत्यनेन
श्रीवीरसमाजीयश्रीवीरशासनप्रीन्टींगप्रेसमध्ये मुद्रयित्वा प्रकाशितम्.

वीरसंवत् २४५० आत्मसंवत् २८ सन १९२३ विक्रमसंवत् १९८०

पूज्यपाद-परमगुरु-श्रीमद्विजयकमलसूरीश्वरेभ्यो नमः

## ॥ श्रीशतकप्रकरणप्रस्तावना ॥

---

" इहानन्तभवभ्रमणनिबन्धनमहामोहसन्ततिसलिलगहने गिरिशाधिव्याधिनक्रचक्रातिरौद्रे जातिजरामरणमनन्तमहोर्मिभीमे गम्भीरापारसंसारवाराशिधौ निमज्जता पुरुषेण प्रवणं यानपात्रमिव संप्राप्य श्रीसर्वज्ञधर्मान्वितं मनुष्यजन्म परोपकारे यतितव्यम् । तस्यैव सकलधर्मसारत्वेन यथोक्तमनुष्यजन्मफलत्वात्, उक्तं च-

" संक्षेपात् कथ्यते धर्मो, जनाः किं विस्तरेण वः ? । परोपकारः पुण्याय, पापाय परपीडनम् ॥ १ ॥ "

स चोपकारः परमार्थतो जिनवचनोपदेश एव, तस्यैवानन्तभवोपचितक्लेशविच्छेदहेतुत्वादिति जिनवचनोपदेशेनैवोपकर्तव्याः प्राणिनः । स च जिनवचनोपदेशो यद्यप्युपदेष्टव्यभेदादनेकधा, तथापि कर्मणः सकलदुःखमूलत्वात्तत्स्वरूपमेव यत्नतो ज्ञापनीयम् । ज्ञापिते हि सकलदुःखमूले कर्मण्यवगततत्स्वरूपाः प्राणिनः तदपगमार्थं यत्नमाधाय परमनिर्वृतिमधिगच्छन्तीति निश्चित्य, बहुविस्तराऽतिगम्भीरकर्मप्रकृतिप्राभृतादिग्रन्थोक्तकर्मस्वरूपावगाहनाऽसमर्थानां तथाविधायुर्बलमेधादिसामग्रीविकलानां साम्प्रतसाधूनामनुग्रहकाम्यया समधिगतश्रुतजलधिपारैरनेकवादसमरविजयिभिः श्रीशिवशर्मसूरिभिः संक्षिप्ततरं सुखावबोधं च गाथाशतपरिमाणनिष्पन्नं यथार्थनामकं शतकाख्यं प्रकरणमभ्यधायि " इति तु व्याख्याकर्तृभिर्मलधारगच्छीयश्रीमद्धेमचन्द्रसूरिभिरेव प्रकाशितम्, अत एव सान्वर्थाभिधेयस्य संक्षिप्ततरस्य सुखावबोधस्य दृष्टिवादनामकद्वादशाङ्गात्

समुद्धृतित्वेन सारभूतस्य चास्य प्रकरणरत्नस्य के पारमेश्वरप्रवचनपरमार्थवेदिनः प्रणेतारः ? किमर्थं चास्य प्रणयनम् ? इत्यादिप्रश्नपरम्पराया नास्त्यवकाशलेशोऽपि । परं पूज्यप्रवराश्चेमे कदेमं मानवलोकम्-विशेषतया जैनसमाजम्-अनन्यसाधारणेन स्वकीयजीवनेनोपाकृषत ? इत्ययं प्रश्नस्त्ववर्दंतयोपतिष्ठते, तथाऽपि साधनाभावात् नालंभूष्णुरहमेनं समाधातुम । सामान्येन पूर्वधरकालस्य वीरसमानां सहस्रत्वात् तदन्तरालभाविन इति तु निर्विवादं, विशेषेण दृष्टिवादपाठ्यभ्यर्थनया श्रुतकेवलिकालः स्यात्, स च वीरसमानां शतद्वय्येवेति निर्णयं स्यात (?) अभिजनादिज्ञाने तु न साधनमिति निरुपायः "चोद्दससविहाओ सवाओ पुवगयाओ कहेसि ' इति वचनमपि तेषां प्रभूणां सकलश्रुतधरत्वद्योतकम् ।

यद्यप्यस्मिन् प्रकरणरत्ने गाथानां सप्ताधिकशतमानस्य दृश्यमानत्वेन भवत्येतत् शङ्कास्थानं यदुत " गाथाशतपरिमाणनिष्पन्नं यथार्थनामकं शतकाख्यं प्रकरणं " इत्येतत् कथनं कथङ्कारं सत्यतामञ्चति ? परं तन्न युज्यते, यतस्तस्य प्रथमा गाथाऽभिधेयाऽभिधायिका, द्वितीया तृतीया च द्वारप्रतिपादिका, गुणस्थानेषु योगानां मतान्तरद्योतिका त्रयोदशी गाथा त्वन्यकर्तृका यद्वा स्वकर्तृकापि मतान्तरेण गुणस्थानेषु योगानां प्रतिपादकत्वेन पृथक्तया न गणनीया, अन्तिमाः तिस्रश्च क्रमशः ग्रन्थोपसंहार-स्वौद्धत्यपरित्याग-ग्रन्थप्रयोजनादिप्रतिपादिकाः सन्ति, अतोऽस्य सान्वर्थाख्यायां नास्त्येव यत्किंचिदपि शङ्कास्थानम । व्यवहारतो वा पञ्चाशके यथा न्यूनाधिकगाथासंभवेऽपि पञ्चाशकाख्या अष्टके षोडशकेऽपि तत्तदाख्या तथाऽत्र

" किं परिकम्म-सुत्त पढमाणुओग-पुवगय-चूलिगामइयातो सवाओ दिट्ठिवायाओ कहेसि ? न इत्युच्यते, पुवगयाओ । किं उप्पायपुव-अग्गेणिय जाव लोगबिंदुसाराओत्ति एयाओ चोद्दसविहाओ सवाओ पुवगयाओ कहेसि ?, न

इत्युच्यते, अग्गेणियातो बीयाओ पुव्वातो । किं अट्ठवत्थुपरिमाणाओ अग्गेणियपुव्वातो सव्वातो कहेसि ? न इत्युच्यते, पुव्वंते अवरंते धुवे अधुवे एत्थं खणलद्धीणामपंचमं वत्थुं, तातो पंचमातो वत्थुतो कहेमि । किं सव्वातो वीसइपाहुडपमाणमेत्तातो कहेसि ? न इत्युच्यते, तस्स पंचमस्स वत्थुस्स चउत्थं पाहुडं कम्मपगडीनामधेज्जं ततो कहेमि। तस्स चउवीसं अणुओगदाराइं भवन्ति, तंजहा– ' कइ (केवइ) १ वेदणा (वेदण) २ फासे ३ कम्मं ४ पगडी य ५ बंधण ६ णिबंधे ७। पक्कम ८ उवक्कमु ९ दए १० (मुवक्कम उदए १०) मोक्खे ११ पुण संकमे १२ लेस्सा १३॥ १॥ लेसाकम्मे १४ लेसापरिणामे १५ तह य सायमस्साते १६ । दीहे हस्से १७ भवधारणीय १८ तह पोग्गला अत्ता १९ ॥ २ ॥ णिहत्तमणिहत्तं च २० णिकाइयमणिकाइयं २१ च कम्मठिती २२ । पच्छिमखन्धे २३ अप्पाबहुगं च २४ सव्वत्थओ ( चउवीसमत्था उ ) ॥ ३ ॥ " त्ति, किं सव्वतो चउवीसाणुओगदारमइयातो कहेसि ? न इत्युच्यते, तस्स छट्ठमणुओगदारं बंधणंति ततो कहेमि। तस्स चत्तारि भेदा, तंजहा– बंधो बंधगो बंधणीयं बंधविहाणंति, किं सव्वातो चउव्विहाणुओगदारातो कहेसि ? न इत्युच्यते, बंधविहाणंति चउत्थमणुओगदारं ततो कहेमि। तस्स चत्तारि विभागा, तंजहा–पगइबंधो ठितिबन्धो अणुभागबंधो पदेसबंधोत्ति मूलुत्तरपगइभेयभिन्नो, ततो चउव्विहातोवि किंचि किंचि समुद्धरिय समुद्धरिय भणामि। " इत्यनेन चूर्णिकारचरणानामुल्लेखेनेत्येतत्तु स्पष्टमेवावसीयते यदुत परिकर्म–सूत्र–प्रथमानुयोग–पूर्वगत–चूलिकामयो हि दृष्टिवादो द्वादशमङ्गं, तस्मिन्नपि चतुर्दशपूर्वमयपूर्वगतविभागे अष्टवस्तुसमन्वितं श्रीसप्ततिकाभाष्यटीकाकारवचनानुसारेण च चतुर्दशवस्तुसमन्वितं च द्वितीयमग्रायणीयाख्यं पूर्वमस्ति, तत्रापि क्षणलब्धि नाम पञ्चमं वस्तु–प्रस्तुतप्रकरणव्याख्याप्रणेतारस्तु प्रणिधिकल्पाख्यं पञ्चमं वस्त्विति, तस्मि-

ऽपि कर्मप्रकृतिनामकं चतुर्थं प्राभृतं श्रुतविशेषरूपम्, तस्मिन्नपि बन्धनाभिधं षष्ठमनुयोगद्वारं, तत्रापि चतुर्थं बन्धविधानाख्यमनुयोगद्वारं, तस्य प्रकृतिबन्धादिकाश्चत्वारो भेदाः, तेभ्यश्चतुर्भ्योऽपि भेदेभ्यः किंचित् २ सारभूतं समुद्धृत्य समुद्धृत्य रचितमिदं प्रकरणरत्नमेभिः पूर्वधरपूज्यपादैः ।

इदं प्रकरणरत्नं दृष्टिवादनिबन्धनमिति तु साक्षात् ग्रन्थकृद्वचनात् चूर्णिकारवचनाच्च सुस्पष्टम् । एवत् दृष्टिवादनिबन्धनमित्येव न किंतु " × × सारजुत्ताओ । वोच्छं वइवइयाओ गाहाओ दिट्ठिवायाओ ॥ १ ॥ " इति ग्रंथकृद्वचनात् " दृष्टिवादो द्वादशमङ्गं तस्मात्, दृष्टिवादे हि द्वितीयमग्रायणीयाख्यं पूर्वमस्ति, तत्रापि प्रणिधिकल्पाख्यं पञ्चमं वस्तु, तस्मिन्नपि कर्मप्रकृतिप्राभृत नाम चतुर्थं प्राभृतं श्रुतविशेषरूपम्, तत्रापि यत्कर्मप्रकृतिबन्धनलक्षणं द्वारं, तस्मादुद्धृत्यैता गाथा अहं वक्ष्ये इति भावार्थः । " इति व्याख्यातृवचनाच्चास्मिन् प्रकरणरत्ने यत् गाथानां शतकं तत्र सैद्धान्तिको महान् भागो दृष्टिवादसत्क एवेति निश्चीयते । अनेन संसारवारांनिधौ तरीकल्पां श्रीजिनमूर्तिं जिनपूजां च ये निषेधयन्ति तेषां लुम्पकमतीनां यश्च कश्चिदेदंयुगीनः पण्डितंमन्योऽन्धचक्रवर्त्ती " चैत्यं जिनौकस्तद्बिम्बम् " इत्यादि प्रमाणान्यप्रमत्य 'वस्तुगत्या चैत्यशब्दो नास्ति जिनमूर्त्यादिवाचको नास्ति च श्रीजिनपूजा सूत्रविहिता', इत्यादिकं प्रलपति तस्य च मुखबन्धो विधीयते, यत एतस्मिन् प्रकरणरत्ने—

" अरहन्त सिद्ध चेइय तव सुय गुरु साहु संघपडणीओ । बन्धइ दंसणमोहं अणन्तसंसारिओ जेणं ॥ १८ ॥ "

पाणवहाईसु रओ जिणपूआमोक्खमग्गविग्घकरो । अज्जेइ अन्तराय न लहइ जेणिच्छियं लाभं ॥ २६ ॥ "

इति गाथायुग्मेन स्पष्टतया ज्ञापितमेतत् यदुत चैत्यस्यापि प्रत्यनीकोऽवर्णवादाद्यनिष्टनिर्वर्त्तको जीवो येन बद्धेनानन्तसंसारिको भवति तद्दर्शनमोहं-मिथ्यात्वमोहनीयं कर्म बध्नाति, जिनपूजाविघ्नकरश्चार्जयति-निर्वर्त्तयति पञ्चमकारमप्यन्तरायं कर्म।

यद्विषयवर्णनमस्मिन् प्रकरणरत्नेऽस्ति नव्यशतके-पञ्चमकर्मग्रन्थे च नास्ति तत् प्रदर्श्यते-

"द्वाषष्टिमार्गणास्थानेषु चतुर्दश जीवस्थानानि, चतुर्दशजीवस्थानेषूपयोगाः योगाश्च, द्वाषष्टिमार्गणास्थानेषु गुणस्थानानि, गुणस्थानेषूपयोगाः योगाश्च, गुणस्थानेषु सामान्येन चत्वारो बन्धप्रत्ययाः, अष्टानां कर्मणां विशेषप्रत्ययाः, अष्टानां मूलप्रकृतीनां बन्धोदयोदीरणास्थानानि गुणस्थानेषु बन्धोदयोदीरणास्थानानां संवेधश्च, मूलोत्तरप्रकृतयः, गुणस्थानेषूत्तरप्रकृतिबन्धस्वामित्वं, मार्गणासु बन्धस्वामित्वम्, उत्तरप्रकृतिषु च मिथ्यात्वाद्याश्चत्वारः प्रत्ययाः।" परमुक्ता एते षडशीतौ

अथ च यद्विषयवर्णनं नव्यशतके वर्त्ततेऽत्र च न वर्त्तते तत् प्रकाश्यते-

"ध्रुवबन्धोदयसत्तापरावर्त्तप्रकृतयः सप्रतिपक्षाः, उत्तरप्रकृतीनां जघन्योत्कृष्टस्थितिः, एकेन्द्रियादिषु स्थितिप्रतिपादनम्, अबाधाकालः, एकस्मिन् मुहूर्त्ते क्षुल्लकभवप्रमाणम्, गुणस्थानेषु स्थितिबन्धः, एकेन्द्रियादिस्थितिबन्धानामल्पबहुत्वम्, सान्तरबन्धस्य निरन्तरबन्धस्य चोत्कृष्टेतरकालमानम्, वर्गणास्वरूपम्, गुणश्रेणयः, गुणस्थानानां जघन्यमुत्कृष्टं चान्तरालम्, पल्योपमस्वरूपम्, पुद्गलपरावर्त्तस्वरूपम्, श्रेणिद्वयं चेति।" अन्यत्रैतदर्थस्य दृश्यत्वाद् नात्रोल्लेखः।

चतुर्दशानां पूर्वाणामग्रायणी(ग्रेणीयं)नामकद्वितीयपूर्वान्तर्गतविंशतिप्राभृतप्रमाणपञ्चमवस्तुनः सकाशाच्चतुर्थीचतुर्विंशल-

नुयोगद्वारमयात्थर्मवृत्याख्यात्माभूतात् समुद्धरितत्वेन दृष्टिवादनिबन्धनः सकलकार्मिकग्रन्थचूडामणीभूतः कर्मप्रकृतिनामा प्राचीनप्रबन्धोऽप्येभिरेव पूर्वधरपूज्यैः प्रणीतो वर्त्तते, तस्मिन् बन्धनसङ्क्रमणोद्वर्त्तनोदीरणोपशमनानिधत्तिनिकाचनात्मकं करणाष्टकमुदयः सत्ता चेति प्रकरणदशकं विद्यते, तत्र च यद्बन्धननामकं करणं तत् तदैव सुज्ञातं भवति यदेदं प्रकरणं परिशीलितं स्यादिति त एव पूज्यपादा बन्धनकरणोपसंहारे प्ररूपयन्ति, तथाच तत्पाठः—

" एवं बंधणकरणे परूविए सह हि बंधसयगेण । बंधविहाणाभिगमो सुहमभिगंतुं लहुं होइ ॥ १०२ ॥ "

अनेनास्य प्रकरणरत्नस्यातीवोपयोगित्वं परमोपकारित्वं च परिस्फुटतयाऽवसीयते । अतीवोपयोगितया परमोपकारितया च प्रतिष्ठितस्यास्य प्रकरणरत्नस्योपरि चेत् न स्यात् माने बहुवचनं " तच्चूर्णीनामतिगम्भीरत्वात् " इति वचनादनेकाः चूर्णयः कृता आसीरन्, परं ताः केनापि कारणेन व्यवच्छिन्नाः, केवलमेका लघुचूर्णिः दृश्यते, सा च पूर्वसूरिप्रणीता आराध्यपाद–अनुयोगाचार्य्य–गुरुगुरुवर्य–श्रीमद्दानविजयगणिवरसदुपदेशसंस्थापित–राजनगरस्थ–श्रीवीरसमाजेन स्वकीयप्रथमग्रन्थरत्नतया पूर्वमेव प्रकाशिता । तस्यां द्वादशतमपत्रस्य प्रथमपृष्ठेऽष्टमपङ्क्तौ " वेउव्विय ( आहारग ) दुगसहिया " इति मुद्रितं परं तदशुद्धं जातं, तत्स्थाने मूलपाठ एव सम्यग् । एवमवक्तव्यबन्धाधिकारे एकोनचत्वारिंशत्तमपत्रद्वितीयपृष्ठे पञ्चदशतमपङ्क्तौ (चारित्त) इत्यपि निष्प्रयोजनमेव जातम् । तथाऽत्रश्रीमद्गुणरत्नसूरिरचिता–अवचूरिरपि विद्यते, कर्तृनामरहिते चतुर्विंशतिगाथाप्रमिते द्वे भाष्ये अपि वर्तेते । तयोरेकं भाष्यं गुरुवर्य्यैः कृत्वा नूतनं टिप्पनकं निवेशितमस्य ग्रन्थस्य प्रान्तभागे । एकं तु बृहद्भाष्यं, श्रीचक्रेश्वरसूरिविरचितं तचास्मिन्नेव मुद्रितम् । अत्र मुद्रितस्य बृहद्भाष्यस्य प्रणेतारः श्रीमन्तश्चक्रेश्वरसूरयः केषां कृपापरीतचे-

तसां गुरुवर्याणां शिष्यभावं प्रतिपन्नाः ? कस्मिंश्च समये किमर्थं चैतद्भाष्यं विरचितवन्तः ? इत्यादिकं ज्ञातुं समीहा चेत्? अवलोकनीयं तस्यैवान्तिममार्यापञ्चकम्। तच्चेदम्-

" सिरिवद्धमाणगणहर-सीसेहि विहारुगेहि सुहबोहं । एयं सिरिचक्केसरसूरीहिं सयगगुरुभासं ॥ १९ ॥

गुणहरगुणधरनामगनिययविणेयस्स वयणओ रइयं । सुयणे सुणंतु जाणंतु बुहजणा तह विसोहिंतु ॥ २० ॥

सत्तनवरुद्दमि य वच्छरम्मि विक्कमनिवाउ वट्टंने । कत्तियचउमासदिणे गोल्लसणे विसयविसेनयरे ॥ २१ ॥

दहिवद्दमी सिरिसिद्धरायभूवइपसायगेहस्स । अन्नलदेवनिवइणो सुहरज्जे वट्टमाणम्मि ॥ २२ ॥

निप्फत्तिमुवगयमिणं ता नंदउ जाव सिद्धिसुहमूले । तियलोकपायडजसो जिणवरधम्मो जए जयइ ॥ २३ ॥ "

श्रीउदयप्रभसूरिसन्दब्धं षड्विंशतिश्लोकन्यूनसहस्रपरिमितं टिप्पनकमपि वर्त्तेत इति प्राच्यकर्मग्रन्थप्रस्तावनायामुक्तम्।

अथास्य व्याख्याकर्त्तारोऽनुयोगद्वारविशेषावश्यकभाष्यादिवृत्तिकरणतो विख्यातकीर्तयोऽप्यविख्यातेतिवृत्ताः श्रीमन्तः श्रीहर्षपुरीय ( अपरनाम मलधार ) गच्छीयश्रीमदभयदेवसूरिशिष्याः श्रीमद्धेमचन्द्रसूरय इति त्वेतत्प्रस्तुतप्रकरणवृत्तिप्रशस्तिमान्तर्गतिनाऽनेन काव्यपञ्चकेनावगम्यते-

" आज्ञा यस्य नरेश्वरैरपि शिरस्यारोप्यते सादरं, यं दृष्ट्वापि मुदं व्रजन्ति परमं प्रायोऽतिदुष्टा अपि ।

यद्वक्त्राम्बुधिनिर्यदुज्ज्वलवचःपीयूषपानोद्यतै-र्गीर्वाणैरपि दुग्धसिन्धुमथने तृप्तिर्न लेभे जनैः ॥ ६ ॥

कृत्वा येन तपः सुदुष्करतरं विश्वं प्रबोध्य प्रभो-स्तीर्थं सर्वविदः प्रभावितमिदं तैस्तैः स्वकीयैर्गुणैः ।

शुक्लीकुर्वदशेषविश्वकुहरं, भव्यैर्निबद्धस्पृहं, यस्याशास्वनिवारितं विचरति, श्वेतांशुगौरं यशः ॥७॥
यमुनाप्रवाहविमलश्रीमन्मुनिचन्द्रसूरिसम्पर्कात् । अमरसरितेव सकलं, पवित्रितं येन भुवनतलम् ॥८॥
विस्फूर्जत्कलिकालदुस्तरतमःसन्तानलुप्तस्थितिः, सूर्येणेव विवेकभूधरशिरस्यासाद्य येनोदयम् ।
सम्यग्ज्ञानकरैश्चिरन्तनमुनिक्षुण्णः समुद्योतितो, मार्गः सोऽभयदेवसूरिरभवत्तेभ्यः प्रसिद्धो भुवि ॥९॥
तच्छिष्यलवप्रायै-रगीतार्थैरपि शिष्टजनतुष्ट्यै । श्रीहेमचन्द्रसूरिभि-रियमनुरचिता शतकवृत्तिः॥ १० ॥"

एभिश्च पारमेश्वरप्रवचनपानपीवरैः प्रवचनतत्त्वनिरूपणप्रवणैः पूज्यप्रवरैः कस्मिन् काले पावितेयं भारतभूमिः ? इति जिज्ञासायां जातायां एभिरेव विरचितस्य विशेषावश्यकविवरणस्य प्रशस्तौ स्थापिताभ्यां–

"तच्छिष्यलवप्रायैरगीतार्थैरपि शिष्टजनतुष्ट्यै । श्रीहेमचन्द्रसूरिभिरियमनुरचिता प्रकृतवृत्तिः ॥ १० ॥
शरदां च पञ्चसप्तत्यधिकैकादशशतेष्वतीतेषु । कार्तिकसितपञ्चम्यां श्रीमज्जयसिंहनृपराज्ये ॥ ११ ॥"

इत्येताभ्यां पद्याभ्यां स्पष्टतयाऽवसीयते यदुतैभिः पूज्यैर्विक्रमार्कीयद्वादशशताब्यामेव पवित्रितेयं भारतभूमिः ।

सिद्धान्ततत्त्वनिरूपणप्रवणाः सहृदयहृदयहारिणः के के ग्रन्था आराध्यपादैरेभिः संदृब्धा ? इति जिज्ञासायामपि प्रदर्शयितुं ग्रन्थनिर्माणप्रयोजनमेभिरेव सूरिपुरंदरैः समुल्लिखितः सविस्तरो गद्यमयोल्लेख एव समालोकनीयः, तस्मिन् ग्रन्थनामप्रदर्शनपरो य उल्लेखः स चायम्–

"××× ततो मया तस्य परमपुरुषस्योपदेशं श्रुत्वा विरचय्य झटिति निवेशितमावश्यकटिप्पनिकाभिधानं

सद्भावनामञ्जूषायां नूतनफलकम्, ततोऽपरमपि शतकविवरणनामकम्, अन्यदप्यनुयोगद्वारवृत्तिसंज्ञितम्, ततोऽप-
रमप्युपदेशमालासूत्राभिधानम्, अपरं तु तद्वृत्तिनामकम्, अन्यच्च जीवसमासविवरणनामधेयम्, अन्यत्तु भवभा-
वनासूत्रसंज्ञितम्, अपरं तु तद्विवरणनामकम्, अन्यच्च झटिति विरचय्य तस्याः सद्भावनामञ्जूषाया अङ्गभूतं निवेशितं
नन्दिटिप्पनकनामधेयं नूतनदृढफलकम्। एतैश्च नूतनफलकैर्निवेशितैः वज्रमयीव संजाताऽसौ मञ्जूषा तेषां पापानाम-
गम्या। ततस्तैरतीवच्छलघातितया संचूर्णयितुमारब्धं तद्द्वारकपाटसंपुटम्। ततो मया ससंभ्रमेण निपुणं तत्प्रतिविधानो-
पायं चिन्तयित्वा विरचयितुमारब्धं तद्द्वारपिधानहेतोर्विशेषावश्यकविवरणाभिधानं वज्रमयमिव नूतनकपाटसंपुटम्।"

एतत्संशोधनक्रियायां च संशोधकपूज्यैः कृतेऽपि विशेषप्रयत्ने वृत्तिसत्कं पुस्तकद्वयं भाष्यसत्कं त्वेकमेव समासादि-
तम्। एकं शान्ततपोमूर्त्तिश्रीमद्विजयसिद्धिसूरीश्वरसत्कमशुद्धं, द्वितीयं च मुनिश्रीचतुरविजयद्वारा पट्टनाख्यपत्तनश्रीसंघ-
सत्कं शुद्धप्रायं च। भाष्यसत्कं तु प्रवर्त्तकश्रीमत्कान्तिविजयसत्कमशुद्धतरतमं च। अत एव वृत्तभङ्गयुतं भाष्यं मदीयगुरुवर्यैः
प्रायेण टीकानुसारेणैव संशोधितं तत्र च संभव्येव दोषसद्भावोऽतः संशोधनीयमेव तत् शेमुषीशालिशेखरैरिति समीहन्ते
ते पूज्यपादाः।

अथाऽस्य प्रतिकृतिसंशोधनं तु कर्मप्रकृत्यादिशास्त्ररत्नरत्नाकरकल्पैर्मदीयगुरुवरैः सच्चारित्रपवित्रगात्रश्रीमद्विजयसि-
द्धिसूरीश्वराणां साहाय्येनैवाकारि। मुफाणां संशोधनेऽपि न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरशिष्यरत्नमहामहोपाध्याय-
श्रीमद्वीरविजयविनेयावतंस-सिद्धान्तरत्नरत्नाकरकल्प-मदीयगुरुगुरुवर्य्यअनुयोगाचार्य्य-श्रीमद्-दानविजयगणिनः, सर्वज्ञ-

सिद्धान्तसन्निहितहृदयश्रीमद्विजयसिद्धिसूरीश्वरशिष्यरत्न-स्वकीयदेशनाशक्त्याऽवर्जितसकलभव्यनिवह-पंन्यासपदपरिमण्डित-श्रीमन्मेघविजयगणयः, मुख्यतया पठनपाठनरसिकमदीयगुरवश्चायासमाभेजुः।

एभिः पण्डितप्रकाण्डैः पूर्वोक्तपुस्तकत्रितयाधारेण महता प्रयासेन च संशोधितेऽप्यस्मिन् प्रकरणरत्ने छद्मस्थानां स्वाभाविकेन प्रमाददोषेणाक्षरयोजकदोषेण दृष्टिदोषेण वा कथंचिदशुद्धं कृतं जातं वा भवेत्तत् संशोधनीयं विपश्चिदपश्चिमैः संसूचनीयं च कृपया यदशुद्धं विज्ञायते तद् येन द्वितीयसंस्करणे संस्क्रियेतेति प्रार्थ्यते-

| | |
|---|---|
| महीदपुरम्,<br>संवत् १९८० आश्विन-शुक्लतृतीया | आराध्यपाद-पंन्यासश्रीमद्दानविजयगणिशिष्यरत्नमुनिसत्तमश्री-<br>प्रेमविजयगणिवरपादारविन्दमधुव्रतो, मुनि-रामविजयः। |

---

॥ ॐ अर्हम् ॥

॥ न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरिभ्यो नमः ॥

परमर्षिश्रीमच्छिवशर्मसूरिप्रवरविरचितं मलधारगच्छीयश्रीमद्धेमचन्द्रसूरिविरचितव्याख्यया

श्रीचक्केसरसूरिविरचितभाष्येण च समलंकृतं

# श्रीशतकप्रकरणम् ॥

टी० जयत्यभिमतसमृद्धिहेतुः शमी समाधिक्षतकर्मबीजः । सुरेन्द्रवन्द्यः स्फुटवस्तुवादी मुनीश्वरः श्रीजिनवर्द्धमानः ॥ १ ॥

मतिसरितां जलनिधयो निखिलविनिर्दिष्टकर्मपरिणतयः । श्रुतसागरपारदृशो जयन्ति गणधारिणः सर्वे ॥ २ ॥

एकैकमपि श्रुत्वा वाक्यं यस्यास्तकर्ममलपटलैः । शिवपदमनन्तजीवैर्लेभे तज्जयति जिनवचनम् ॥ ३ ॥

इहानन्तभवभ्रमणनिबन्धनमहामोहसन्ततिसलिलगहने विविधाधिव्याधिनक्रचक्रातिरौद्रे जातिजरामरणप्रबन्धमहोर्मिभीमे

गम्भीरापारसंसारवारान्निधौ निमज्जता पुरुषेण प्रवणं यानपात्रमिव संप्राप्य श्रीसर्वज्ञधर्मान्वितं मनुष्यजन्म परोपकारे यति-

तव्यम् । तस्यैव सकलधर्मसारत्वेन यथोक्तमनुष्यजन्मफलत्वात्, उक्तं च—" संक्षेपात्कथ्यते धर्मो, जनाः किं विस्तरेण

नः । परोपकारः पुण्याय, पापाय परपीडनम् ॥ १ ॥ स चोपकारः परमार्थतो जिनवचनोपदेश एव, तस्यैवानन्तभवोप-

चिन्तक्लेशविच्छेदहेतुत्वादिति जिनवचनोपदेशेनैवोपकर्त्तव्याः प्राणिनः । स च जिनवचनोपदेशो यद्यप्युपदेष्टव्यभेदादनेकधा, तथापि कर्मणः सकलदुःखमूलत्वात्तत्स्वरूपमेव यत्नतो ज्ञापनीयम् । ज्ञापिते हि सकलदुःखमूले कर्मण्यवगततत्स्वरूपाः प्राणिनः तदपगमार्थं यत्नमाधाय परमनिर्वृतिमधिगच्छन्तीति निश्चित्य, बहुविस्ताराऽतिगम्भीरकर्मप्रकृतिप्राभृतादिग्रन्थोक्तकर्मस्वरूपावगाहनासमर्थानां तथाविधायुर्बुद्धिमेधादिसामग्रीविकलानां साम्प्रतसाधूनामनुग्रहकाम्यया समधिगतश्रुतजलधितत्त्वैरनेकवादसमरविजयिभिः श्रीशिवशर्मसूरिभिः संक्षिप्ततरं सुखावबोधं च गाथाशतपरिमाणनिष्पन्नं यथार्थनामकं शतकाख्यं प्रकरणमभ्यधायीति । इदं च यद्यपि पूर्वचूर्णिकारैरपि व्याख्यातम्, तथापि तच्चूर्णीनामतिगम्भीरत्वादस्मादृशां दुरधिगमत्वाच्च गुरुभ्यः समधिगतार्थस्यात्मसंस्मृतयेऽल्पधियामनुग्रहार्थं च मन्दमतिनापि मया व्याख्यायते । अत्र चेयमादिगाथा—

भा० चउबन्धपुओगविहीदुवारचउविणयवयणपङ्कमला । उदए चउतीसुत्तमपयडीजुत्ता जयन्तु जिणे ॥ १ ॥ सयगम्मि कम्मगन्थे, सुत्तपयाइं अफासइत्ताणं कयवि विसमपयाइं, फासित्ता किञ्चिमेत्ताइं ॥ २ ॥ विरएमि सयगभासं, सयत्थियहिं च तस्स भावत्थो । भावेयव्वो सम्मं, सुत्तं परिभावयंतेहिं ॥ ३ ॥ एत्थ य गाहापत्थावणाउ पइअक्खरं च परिकहणं । पाएण नत्थि पयडं भावत्थं पुण निसामेह ॥ ४ ॥ तत्थ य विग्घविणायगुत्तसंतए मिट्ठविहियसमयस्स । परिवाल्गणाय पत्थुयगन्थकइअगाहदुगमाह ॥ ५ ॥

अरहन्ते भगवन्ते अणुत्तरपरक्कमे पणमिऊणं । बन्धसयगे निबद्धं संगहमिणमो पवक्खामि ॥
सुणह इह जीवगुणसन्निएसु ठाणेसु सारजुत्ताओ । वोच्छं कइवइयाओ गाहाओ दिट्ठिवायाओ ॥ १ ॥ ॥ १ ॥

टी० 'सुणह' त्ति शृणुत यूयमिति गम्यते, शिष्यामन्त्रणं चैतत् 'इह' त्ति अस्मिन्नन्तस्तत्त्ववर्त्तिनि शतकप्रकरणे, यदहं 'वक्ष्ये' भणिष्यामि तच्छृणुत यूयमिति सोपस्कारमुत्तरेण संबन्धः। किं तद्भणिष्यत इत्याह—'गाहाओ' त्ति गीयन्ते प्रतिपाद्यन्ते अर्था आभिरिति गाथाः; कियत्यः पुनस्ता इत्याह–'कइवइयाओ' त्ति प्रायः संक्षिप्तरुचित्वात्साम्प्रतश्रोतृणां तत्प्रवर्त्तकमिदं वचः कियतीरपि वक्ष्ये न बह्वीरिति भावः। पुनस्ता एव विशिष्यन्ते 'सारजुत्ताओ' त्ति, सारः सकलक-र्मविचारनिष्यन्दभूतोऽतिव्यापकतया प्रधानो योऽर्थ इति गम्यते, तेन युक्ता इति। केषु विषयेषु पुनस्ता भणिष्यन्त इत्याह–'जीवगुणसन्निएसु' 'ठाणेसु' त्ति तिष्ठन्ति जीवा गुणा वा एष्विति स्थानानि स्वरूपभेदलक्षणानि तेषु, कथंभूतेष्वित्याह–'जीवगुणसन्निएसु' त्ति अत्र संज्ञितशब्दस्य प्रत्येकमभिसंबन्धस्ततश्च जीव इति गुण इति च संज्ञा संजाता एषामिति नारकादि दर्शनादि, तत्प्रत्यये जीवसंज्ञितानि गुणसंज्ञितानि चेति। तेषु स्थानेष्वित्यपि प्रत्येकमभिसंबध्यते। ततश्चेदमुक्तं भवति, जीवसंज्ञितेषु स्थानेषु सूक्ष्मैकेन्द्रियादिलक्षणेषु, गुणसंज्ञितेषु च स्थानेषु मिथ्यादृष्ट्यादिस्वरूपेषु विषयेषु एता गाथा भणिष्यामीति। कुतः पुनरेता अभिधास्यन्त इत्याह–'दिट्ठिवायाओ' त्ति दृष्टिवादो द्वादशमङ्गं तस्मात्, दृष्टिवादे हि द्वितीयमग्रायणीयाख्यं पूर्वमस्ति। तत्रापि प्रणिधिकल्पाख्यं पञ्चमं वस्तु। तस्मिन्नपि कर्मप्रकृतिप्राभृतं नाम चतुर्थं प्राभृतं श्रुतविशेषरूपम्। तत्रापि यत्कर्म-प्रकृतिबन्धनलक्षणं द्वारं, तस्मादुद्धृत्यैता गाथा वक्ष्ये इति भावार्थः। एतेन चात्मनः स्वमनीषिका परिहृता भवति, शास्त्रस्य च गौरवमापादितं भवति। भवति ह्याधारविशेषादाधेयस्य गुणप्रकर्षविशेषो, जलादेरिव क्षित्याद्याधारविशेषादिति। जीव-स्थानगुणस्थानविषये दृष्टिवादाद्या गाथा अहं वक्ष्ये ता यूयं शृणुतेति पिण्डार्थः। अत्र च शृणुतेति शब्दो मङ्गलवाचित्वादादौ

विनिर्दिष्टः। एतदभिधेयस्य श्रवणस्य श्रुतरूपत्वाच्छ्रुतस्य च ज्ञानपञ्चकान्तःपातित्वात्तस्य च भावनन्दित्वेन मङ्गलत्वाभिधानादिति। मङ्गलपरिगृहीतानि च शास्त्राणि निर्विघ्नेन परिसमाप्यन्ते, शिष्यप्रशिष्यपरम्परया च प्रतिष्ठामुपगच्छन्तीति। 'वोच्छं कइवइयाओ गाहाओ' इत्यादिना तदभिधेयनिर्देशः कृतः, उक्तस्वरूपगाथानामत्र प्रकरणेऽभिधास्यमानत्वादिति। प्रयोजनं तु प्रकरणकर्तृश्रोत्रोरनन्तरपरम्परभेदाच्चिन्तनीयम्। तत्र प्रकरणकर्तुरनन्तरं सत्त्वानुग्रहः प्रयोजनम्, श्रोतुश्च प्रस्तुतप्रकरणार्थपरिज्ञानम्। परम्परप्रयोजनं तु द्वयोरपि परमपदप्राप्तिरिति। इदं तु प्रयोजनं साक्षादनुक्तमपि सामर्थ्याद्गम्यते, प्रक्रान्तप्रकरणस्य परममुनिप्रणीतदृष्टिवादान्तर्गतत्वाख्यानेन यथोक्तप्रयोजनसाधकत्वसूचनादिति। संबन्धस्तु सिद्धान्तानुसारिणां शास्त्रोत्थानकथनादिकोऽनेकधाभिप्रेतः। तत्रेह दृष्टिवादाद्गाथा वक्ष्ये इतिवचनाच्छास्त्रोत्थानलक्षणः संबन्धः कथितो द्रष्टव्यः। तर्कानुसारिणां तूपायोपेयलक्षणः संबन्धः, तत्र वचनरूपापन्नं प्रकरणमिदमुपायः, प्रकरणार्थस्तूपेय इत्यर्थाद्गम्यते, अनेन च मङ्गलाद्यभिधानेन सकलशास्त्रकृतां प्रवृत्तिरनुसृता भवति, तथा च तैरुक्तम्—"प्रेक्षावतां प्रवृत्त्यर्थमभिधेयप्रयोजने। मङ्गलं चैव शास्त्रादौ. वाच्यमिष्टार्थसिद्धये ॥ १ ॥" इतिगाथार्थः ॥ १ ॥ अत्र च—अरहन्ते भगवन्ते, अणुत्तरपरक्कमे पणमिऊणं। बन्धसयगे निबद्धं, संगहमिणमो पवक्खामि ॥ १ ॥ (इतीयं) गाथा आदौ दृश्यते, सा च पूर्वचूर्णिकारैरव्याख्यातत्वात् प्रक्षेपगाथेति लक्ष्यते, सुगमा च। नवरं कर्मप्रकृतिप्राभृतादुद्धृत्य संग्रहमेनमल्पास्तरचगृहीतं प्रवक्ष्यामि। कथंभूतम्? इत्याह—'निबद्धम्' आरोपितम्, क्व? इत्याह 'बन्धशतके' प्रस्तुतप्रकरणे इदं हि शतगाथानिष्पन्नत्वाच्छतकोऽभिधीयते, बन्ध एव चात्र विस्तरेणाभिधास्यते अतो बन्धप्रधानः शतको बन्धशतकस्तस्मिन्नित्यर्थः ॥ १ ॥ इहानन्तरगाथायां सारयुक्ता

गाथा वक्ष्य इति प्रतिज्ञातम्, कीदृशाधिकारयुक्ताः पुनरेता इति प्रश्नयाशङ्क्य तासामर्थाधिकारसंग्रहार्थं द्वारगाथाद्वयमाह—

भा० एत्थ य अरहंते इहं आइमगाहा उ अन्नकइरइया। सुणह इह दुइयगाहा इह पत्थुयकविकया नेया ॥ ६ ॥ एत्था-भिधेयमंगलसंबंधपयोयणाइ समईर ऊहेयव्वाइ दुहेहि चुन्निओ वित्तिओ वा वि ॥ ७ ॥ सारजुया वोच्छं गाहाओ जं सुत्तयं तहिं तासिं। अत्थाहिगारकहणं दुवारगाहादुगं आह ॥ ८ ॥

उवओगाजोगविही, जेसु अ ठाणेसु जत्तिया अत्थि। जप्पचइओ बन्धो, होइ जहा जेसु ठाणेसु ॥ २ ॥
बन्धं उदयमुदीरणविहिं च तिन्हं पि तेसिं संजोगं। बन्धविहाणे य तहा किंचि समासं पवक्खामि ॥ ३ ॥

टी० अत्र विधिशब्दो भेदवचनः, प्रत्येकं च योज्यते। 'उवओगा' इत्याकारश्चालाक्षणिकस्ततश्चोपयोगभेदा योगभेदाश्च येषु स्थानेषु जीवस्थानगुणस्थानलक्षणेषु प्रत्येकं यावन्तः सन्ति तेऽत्र प्रकरणेऽभिधास्यन्त इति। प्रथमगाथायां क्रियाध्याहारो द्रष्टव्यः। चकारस्य भिन्नक्रमत्वाद्यत्प्रत्ययश्च बन्धो मिथ्यात्वाविरतिकषाययोगानां कर्माष्टकस्यापि सामान्यबन्धहेतूनां मध्ये कैर्बन्धहेतुभिः कस्मिन् गुणस्थाने बन्धः संभवतीत्यप्यत्राभिधास्यते। 'होइ जह' त्ति स एव बन्धः प्रत्येकं ज्ञानावरणादिकर्मणां ज्ञानप्रत्यनीकतादिभिर्विशेषहेतुभिर्यथाभवतीत्येतदभिधास्यते। 'जेसु ठाणेसु' त्ति गाथाचरमावयवो द्वितीयगाथया सम्बध्यते। येषु स्थानेषु गुणस्थानलक्षणेषु यावान्संभवति तं सम्भविनं बन्धविधिमुदयविधिमुदीरणाविधिं च 'प्रवक्ष्यामि' भणिष्यामीति संबन्धः, अत्रापि विधिशब्दो भेदवचनः प्रत्येकसम्बन्धश्च। तथा त्रयाणामपि तेषां प्रत्येकोक्तानां बन्धोदयोदीरणाविधीनां च संयोगं एतावतीः कर्मप्रकृतीर्बध्नंस्तद्बन्धसमकालमेतावतीर्वेदयत्युदीरयति चेत्यादिलक्षणं प्रवक्ष्यामीतीहापि क्रिया सम्बन्धः।

'बन्धविहाणे य' त्ति बन्धविधाने च बन्धभेदे च प्रकृतिस्थित्यनुभागप्रदेशलक्षणे, 'समासं' संक्षेपं कञ्चिद्वक्ष्यामीतियोगः। 'तह' त्ति यथा कर्मप्रकृतिप्राभृतादिग्रन्थेषूक्तं तथेत्यर्थः। इतिगाथाद्वयाक्षरार्थः। साम्प्रतं भावार्थः प्रत्यवयवमुच्यते 'उवओग' त्ति उपयोजनमुपयोगो बोधरूपो जीवव्यापार इत्यर्थः। कर्मणि वा घञ्। उपयुज्यते वस्तुपरिच्छेदं प्रति व्यापार्यते य इत्युपयोगः। करणे वा उपयुज्यतेऽर्थपरिच्छेदं प्रति जीवोऽनेनेत्युपयोगः। सर्वत्र जीवस्वतत्त्वभूतो बोध एवोपयोगो मन्तव्यः। स च ज्ञेयभेदात् द्विधा, साकारोऽनाकारश्च। सामान्यविशेषात्मकं हि सकलं ज्ञेयं वस्तु, कथम्? इति चेदुच्यते, दूरादेव हि शालतालतमालबकुलाशोकचम्पकादिविशिष्टव्यक्तिरूपतयाऽनवधारितं तरुनिकरमवलोकयतः सामान्येन वृक्षमात्रप्रतीतिजनकं यदपरिस्फुटं किमपि रूपं चकास्ति तत्सामान्यरूपम्, यत्पुनः तस्यैव निकटीभूतस्य शालतालादिव्यक्तिरूपतयाऽवधारितं तमेव तरुनिकरमुत्पश्यतो विशिष्टव्यक्तिप्रतीतिजनकं परिस्फुटं रूपमाभाति तद्विशेषरूपमिति प्रतिप्राणि प्रसिद्धप्रमाणाबाधितप्रतीतिद्वयवशात्प्रतिवस्तु सामान्यविशेषरूपद्वयात्मकत्वं भावनीयम्। कथम्? एकस्य सामान्यविशेषात्मकत्वमित्यादि तु न चर्च्यते, ग्रन्थविस्तरभयादन्यत्र सुचर्चितत्वाच्चेति। तत्र विशेषरूपग्राहकः साकारोपयोगः सह विशिष्टाकारेण वर्तत इतिकृत्वा, सामान्यरूपविषयस्त्वनाकारोपयोगः सामान्याकारयुक्तत्वे सत्यपि विशिष्टव्यक्त्याकाररहितत्वादिति। एवं च सत्यत्रैव वक्ष्यमाणस्वरूपाणि पञ्चज्ञानानि मतिश्रुतावधिमनःपर्यायकेवलाख्यानि, त्रीणि चाज्ञानानि मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानाख्यानि विशेषरूपग्राहित्वात्साकारोपयोगरूपाणीति साकारोपयोगोऽष्टधा। तथा चक्षुषा दर्शनं सामान्यार्थग्रहणरूपं चक्षुर्दर्शनम्। तथाऽचक्षुषा चक्षुर्वर्ज्यशेषेन्द्रियचतुष्टयेन मनसा च दर्शनं सामान्यार्थग्रहणमेवाचक्षुर्दर्शनम्। एवमवधिनाऽवधिर्वा केवलेन केवलमेव वा दर्शनं

यथोक्तस्वरूपमवधिदर्शनं केवलदर्शनं च। एतानि चत्वार्यपि दर्शनानि सामान्यार्थग्राहित्वादनाकारोपयोगरूपाणीत्यनाकारोपयोगश्चतुर्द्धा भवति। तथा च सत्युपयोगः सामान्येन द्वादशधा सिद्धः। 'जोग' त्ति योजनं योगो जीवस्य वीर्यं शक्तिरुत्साहः पराक्रमश्चेष्टा परिस्पन्द इतियावत्। युज्यते धावनवल्गनादिक्रियासु व्यापार्यते य इति वा योगो, युज्यते सम्बध्यते धावनवल्गनादिक्रियया जीवोऽनेनेति वा योगो निर्दिष्टस्वरूप एव। स च मनोवाक्काययोगभेदात्रिधा। तद्यथा काययोगेन मनःप्रायोग्यवर्गणाभ्यो गृहीत्वा मनोयोगेन मनस्त्वेन परिणमितानि वस्तुचिन्ताप्रवर्त्तकानि द्रव्याणि मन इत्युच्यते, तेन मनसा सहकारिकारणभूतेन योगो मनोयोगो, मनोविषयो योगो वा मनोयोगः १। तथा उच्यत इति वाग्, भाषापरिणामापन्नः पुद्गलद्रव्यसमूह इत्यर्थः, तथा वाचा सहकारिकारणभूतया योगो वाग्योगः, वाग्विषयो वा योगो वाग्योगः २। तथा चीयत इति काय औदारिकादिस्तेन सहकारिकारणभूतेन योगः काययोगः, कायविषयो वा योगः काययोगः ३। एवं च त्रिविधोऽपि पुनः पञ्चदशधा भिद्यते। तत्र मनोयोगस्तावच्चतुर्द्धा। तद्यथा—सन्तो मुनयः पदार्था वा तेषां यथासङ्ख्यं मुक्तिप्रापकत्वेन यथावस्थितस्वरूपचिन्तनेन च हितः सत्यः, "अस्ति जीवः सदसद्रूपो देहमात्रव्यापक" इत्यादियथावस्थितवस्तुविकल्पनपर इत्यर्थः, सत्यश्चासौ मनोयोगश्च सत्यमनोयोगः। आह—ननु योगः परिस्पन्दक्रियारूप उक्तस्तस्य कथं सत्यादिव्यपदेशः सम्भवति तथाप्रतीतेरेवाभावात्, सत्यं, तथापि सत्यमनोविज्ञानजनकत्वान्मनोयोगस्यापि सत्यत्वमुच्यते, कारणे कार्यधर्मोपचारादित्येवमन्यत्रापि भावनीयम् १। तथा सत्यविपरीतोऽसत्यो "नास्ति जीव एकान्तसद्रूपो वे" त्याद्ययथावस्थितवस्तुचिन्तनपर इत्यर्थः। असत्यश्चासौ मनोयोगश्चेत्यसत्यमनोयोगः २। तथा सत्यश्चासावसत्यश्चेति कृताकृतादिवत् कर्मधारयः,

सत्योपलक्षितमसत्यं यत्र स तथेति बहुव्रीहिर्वा, सत्यासत्यश्चासौ मनोयोगश्चेति सत्यासत्यमनोयोगः। इह भवखदिरपलाशादिमिश्रेषु बहुष्वशोकवृक्षेष्वशोकवनमेवेदमिति यदा विकल्पयति तदा प्रस्तुतमनोयोगविषयता, अयं हि विकल्पस्तत्राशोकवृक्षाणां सद्भावात्सत्यो, अन्येषामपि धवादीनां तत्र सद्भावादसत्य इति भवति सत्यासत्यमनोयोगविषय इति ३। तथा न विद्यते सत्यं यत्र स भवत्यसत्यो, न विद्यते मृषा यत्र स भवत्यमृषोऽसत्यश्चासावमृषश्चेति पूर्ववत्कर्मधारयः, सचासौ मनोयोगश्चेत्यसत्यामृषमनोयोगः। इह विप्रतिपत्तौ सत्यां वस्तुप्रतिष्ठाशया सर्वज्ञमतानुसारेण यद्विकल्प्यते प्रोच्यते वा यथा–"अस्ति जीवः सदसद्रूप" इत्यादि। तत्किल सत्यं परिभाषितं आराधकत्वात्। यत्तु विप्रतिपत्तौ सत्यां वस्तुप्रतिष्ठाशया सर्वज्ञमतोत्तीर्णं किञ्चिद्विकल्प्यते प्रोच्यते वा यथा–"नास्ति जीव एकान्तनित्यो वे"त्यादि, तदसत्यमिति परिभाषितम्, विराधकत्वात्। यत्पुनर्वस्तुप्रतिष्ठाशामन्तरेण स्वरूपमात्रप्रतिपादनपरं व्यवहारपतितं किञ्चिद्विकल्प्यते प्रोच्यते वा यथा–"हे देवदत्त! घटमानय, गां देहि मह्यमि"त्यादि, तदेतत्स्वरूपमात्रप्रतिपादनपरं व्यावहारिकं विकल्पज्ञानं वचनं वा, न सत्यं नापि मृषा किन्त्वसत्यामृषमिति परिभाषितमतो भवति प्रस्तुतासत्यामृषमनोयोगस्य वक्ष्यमाणासत्यामृषवाग्योगस्य च विषय इति ४। तदेवं मनोयोगश्चतुर्द्धा व्याख्यातः, एतद्व्याख्यानेन च वाग्योगोऽपि चतुर्विधो व्याख्यात एव द्रष्टव्यः। प्रायो मनोविकल्पितस्यैव वाग्विषयत्वात्तथापि स्थानाशून्यार्थं किञ्चिद्व्याख्यायते–सतां हिता सत्या, सा चासौ वाक्चेति सत्यवाक्, तया सहकारिकारणभूतया योगः सत्यवाग्योगः। अथवा वचनगतं सत्यत्वं तत्कार्यत्वाद्योगेऽप्युपचर्यते, ततश्च सत्यश्चासौ वाग्योगश्चेत्यपि मन्तव्यं, शेषभावार्थस्तु सत्यमनोयोगवद्वक्तव्यः, १। तथा सत्याद्विपरीता असत्या, सा चासौ वाक् चेत्यसत्यवाक् तया योगोऽसत्यवाग्योगः २। तथा सत्या चासावसत्या चेत्यादि

पूर्ववत्कर्मधारयो बहुव्रीहिर्वा, सा चासौ वाक् चेति तया योगः सत्यासत्यवाग्योगः ३ । तथा न विद्यते सत्यं यत्र सोऽसत्यो, न विद्यते मृषा यत्र सोऽमृषः, असत्यश्चासावमृषश्चेत्यसत्यामृषः स चासौ वाग्योगश्चेत्यसत्यामृषवाग्योगः, शेषं तु मनोयोग-वत्सर्वं वाच्यमिति ४ । अत्र च तृतीयचतुर्थौ मनोयोगौ वाग्योगौ च परिस्थूरव्यवहारनयमतेन द्रष्टव्यौ । शुद्धनयानां तु मनोज्ञानं वचनं वा सर्वमदुष्टविवक्षापूर्वकं सत्यम् । अज्ञानादिदूषिताशयपूर्वकं त्वसत्यम् । उभयानुभयरूपं तु नास्त्येव, सत्या-सत्यराशिद्वयेऽन्तर्भावादिति भावनीयम् । काययोगस्तु सप्तधा—औदारिकौदारिकमिश्रवैक्रियवैक्रियमिश्राहारकाहारकमिश्र-कार्मणकाययोगभेदात् । तत्रोदारं प्रधानं उदारमेवौदारिकम् । प्राधान्यं चेह तीर्थकरगणधरशरीरापेक्षया वेदितव्यम्, ततोऽन्य-स्यानुत्तरसुरशरीरस्याप्यनन्तगुणहीनरूपत्वात् । अथवा उदारं सातिरेकयोजनसहस्रमानत्वाच्छेषशरीरेभ्यो बृहत्प्रमाणमुदा-रमेवौदारिकमिति । बृहत्त्वं चास्य भवधारणीयसहजशरीरापेक्षया मन्तव्यम्; अन्यथा ह्युत्तरवैक्रियं लक्षयोजनमानमपि लभ्यत इति । औदारिकमेव चीयमानत्वात्कायस्तेन सहकारिकारणभूतेन तद्विषयो वा योग औदारिककाययोगः १ तथा औदारिकं मिश्रं यत्र कार्मणेनेति गम्यते स भवत्यौदारिकमिश्रः । उत्पत्तिदेशे ह्यनन्तरागतो जीवः प्रथमसमये कार्मणेनैवाहारयति, ततः परमौदारिकस्याप्यारब्धत्वादौदारिकेण कार्मणमिश्रेणाहारयति, उक्तं च निर्युक्तिकृता—

"जोएण कम्मएणं आहारेई अणन्तरं जीवो । तेण परं मीसेणं जाव शरीरस्स निप्फत्ती ॥ १ ॥" इत्यौ-दारिकमिश्रश्चासौ कायश्च तेन योग औदारिकमिश्रकाययोगः ॥ २ ॥ तथा विविधा विशिष्टा वा क्रिया विक्रिया,

१ योगेन कार्मणेनाह्रियतेऽनन्तरं जीवः । तेन परं मिश्रेण यावत् शरीरस्य निष्पत्तिः ॥ १ ॥

तस्यां भवं वैक्रियं, विशिष्टं कुर्वन्ति तदिति वा निपातनाद्वैक्रियं तदेव कायस्तेन योगो वैक्रियकाययोगः ३। तथा वैक्रियं मिश्रं यत्र कार्मणेनेति गम्यते स वैक्रियमिश्रः। अयं तु देवनारकाणामपर्याप्तावस्थायां मन्तव्यः। तथा बादरपर्याप्तकवायोः पञ्चेन्द्रियतिर्यङ्मनुष्याणां च वैक्रियलब्धिमतां वैक्रियं कृत्वा, तत्परित्यज्य पुनरौदारिकं स्वीकुर्वतामौदारिकेणापि मिश्रं वैक्रियमवाप्यत इति। अथ यथा अत्र वैक्रियमौदारिकेण मिश्रमतो वैक्रियमिश्रमिति व्यपदिश्यते, तथौदारिकमपि वैक्रियेण मिश्रमित्यौदारिकमिश्रमित्यपि कस्मान्नोच्यत इति चेत्? तदयुक्तम्, यतो हन्त प्रधानेनैव व्यपदेशो भवति वैक्रियपरित्यागकाले च बहुव्यापारत्वात्तदेव प्रधानमिति तेनैव व्यपदेशः, अत एव हि वाय्वादीनां वैक्रियमिश्रताव्यपदेशः। औदारिके हि स्थिता अमी वैक्रियमारभन्ते, ततश्च प्रारम्भकत्वेन बहुव्यापारत्वादौदारिकं प्रधानमिति तेनैव व्यपदेश औदारिकमिश्रमिति। अन्ये तु वैक्रियारम्भकाल एवामीषां वैक्रियमिश्रं प्रतिपद्यन्ते, प्रारभ्यमाणत्वेन वैक्रियस्य प्राधान्यविवक्षया तेनैव व्यपदेशमिच्छन्तीतिभावस्तदलं प्रसङ्गेन, विस्तरार्थिना प्रज्ञापनाटीकैव निरीक्षणीयेति। वैक्रियमिश्रश्चासौ कायश्च तेन योगो वैक्रियमिश्रकाययोगः ४। तथा चतुर्दशपूर्वविदा तथाविधकार्योत्पत्तौ विशिष्टलब्धिवशादाह्रियते निर्वर्त्यते इत्याहारकम्, अथवा आह्रियन्ते गृह्यन्ते तीर्थङ्करादिसमीपे सूक्ष्मा जीवादयः पदार्था अनेनेत्याहारकं तदेव कायस्तेन योग आहारककाययोगः ५। तथा आहारकं मिश्रं यत्रौदारिकेणेति गम्यते स आहारकमिश्रः स एव कायस्तेन योग आहारकमिश्रकाययोगः, यदा सिद्धप्रयोजनश्चतुर्दशपूर्वविदाहारकं परित्यज्यौदारिकोपादानाय प्रवर्त्तते तदौदारिकेण मिश्रमाहारकं प्राप्यते बहुव्यापारत्वेन प्रधानत्वादाहारकेण व्यपदेश इतिभावः। अन्ये तस्यापि प्रारम्भकाल एवाहारकमिश्रं प्रतिपद्यन्ते प्रारभ्यमाणत्वेनाहारकस्य प्राधान्यविवक्षया तेनैव व्यपदेश-

मिच्छन्तीति हृदयम् ६। तथा कर्मैव कार्मणम्, अथवा कर्मणो विकारः कार्मणम्, उक्तंच–" कम्मविवागो कम्मणमट्ठविहवि-चित्तकम्मनिप्फन्नं। सव्वेसिं सरिराणं कारणभूयं मुणेयव्वं ॥ १ ॥ " कार्मणमेव कायस्तेन योगः कार्मणकाययोगः ७। तदेवं पञ्चदशापि योगाः प्ररूपिताः। विधानं विधिरिति विधिशब्दो भेदवचनः प्रत्येकं योज्यते, स च योजित एव। एते चोपयोगविधयो योगविधयश्च येषु जीवगुणस्थानकेषु अभिधास्यन्ते, तेषां भावार्थोऽनन्तरमेव वक्ष्यत इति नेह प्रतन्यते। ' अत्थि ' त्ति पदमेकवचनान्तमपि प्राकृतशैल्या बहुवचनान्तत्वेन योजितम्। ' जप्पच्चओ बन्धो ' त्ति ये प्रत्यया यस्य बन्धस्य स तथा तेऽपि बन्धस्य सामान्यप्रत्यया मिथ्यात्वाविरतिकषाययोगलक्षणाः सभावार्था अनन्तरं वक्ष्यत इति। ' होइ जह ' त्ति इत्यत्र स एव बन्धो विशेषहेतुभिर्ज्ञानप्रत्यनीकतादिभिर्यथा भवति, तथा ' पडणीयमन्तराए ' इत्यादिना सभावार्थं वक्ष्यते। ' जेसु ठाणेसु ' त्ति एतदनन्तरगाथया योजितमेव। साम्प्रतं बन्धादीनां भावार्थ उच्यते–तत्र मिथ्यात्वादिभिर्बन्धहेतुभिरञ्जनचूर्णपूर्णसमुद्गकवन्निरन्तरं पुद्गलनिचिते लोके कर्मयोग्यवर्गणापुद्गलैरात्मनो वह्न्ययःपिण्डवदन्योन्यानुगमपरिणामात्मकः सम्बन्धो बन्धः। तेषामेव यथा स्वस्थितिबद्धानां कर्मपुद्गलानामपवर्तनादिकरणविशेषतः स्वभावतो वोदयसमयप्राप्तानां विपाकवेदनमुदयः। तेषामेव कर्मपुद्गलानामकालप्राप्तानामुदयावलिकातीतानां जीवसामर्थ्यविशेषादुदयावलिकायां प्रवेशनमुदीरणा, शेषयोजना कृतैव। ' बन्धविहाणे य ' त्ति बन्धस्य विधानं भेदः प्रकृत्यादिलक्षणः। अत्र च मोदकदृष्टान्तं

१ कर्मविपाकः कार्मणमष्टविधविचित्रकर्मनिष्पन्नम्। सर्वेषां शरीराणां कारणभूतं ज्ञातव्यम् ॥ १ ॥ २ ' गाथायां ' इत्यपि. ३ अतीतानां रहितानामित्यर्थः

वर्णयन्ति। यथा वातापहर्तृद्रव्यनिष्पन्नो मोदकः प्रकृत्या वातमपहरति। पित्तापहर्तृद्रव्यनिष्पन्नः पित्तम्। श्लेष्मापहर्तृद्रव्यनिष्पन्नः श्लेष्माणमित्यादि। स्थित्या तु स एव कश्चिद्दिनमेकमवतिष्ठते, अपरस्तु दिनद्वयमन्यस्तु त्रयं यावन्मासादिकमपि कालं कश्चिदवतिष्ठते, ततः परं विनश्यति। स एवानुभागेन स्निग्धमधुरस्वलक्षणेन कश्चिदेकगुणानुभावो भवत्यपरस्तु द्विगुणानुभावोऽन्यस्तु त्रिगुणानुभाव इत्यादि। प्रदेशाः कणिकादिद्रव्यप्रमाणरूपास्तैः प्रदेशैः स एव कश्चिदेकप्रसृतिप्रमाणोऽपरस्तु प्रसृतिद्वयमानोऽन्यस्तु प्रसृतित्रयमान इत्यादि। एवं कर्मापि ज्ञानावारकादिपुद्गलैर्निष्टत्तं प्रकृत्या किञ्चिज्ज्ञानमावृणोति किञ्चिद्दर्शनं किञ्चित्तु सुखदुःखे जनयतीत्यादि, स्थित्या तु तदेव त्रिंशत्सागरोपमकोटाकोट्यादिकालावस्थायि भवति। अनुभागतस्तु तदेवैकस्थानिकद्विस्थानिकतीव्रमन्दादिकरसयुक्तम्। प्रदेशतस्तु तदेवाल्पबहुप्रदेशनिष्पन्नं स्यादिति। एष च प्रकृत्यादिस्वभावश्चतुर्विधोऽपि कर्म्मण उपादानकाल एव बध्यत इति बन्धश्चतुर्विधः सिद्धो भवति। स च कर्म्मप्रकृतिप्राभृतादिग्रन्थेषु विस्तरेणोक्त इह तु संक्षेपतोऽभिधास्यते। अत एवोक्तं बन्धविधाने समासं संक्षेपं प्रवक्ष्यामीति। इह च जीवसिद्ध्यधीनत्वादुत्तरोत्तरयोगबन्धप्रत्ययादिधर्म्मकलापसिद्धेः पूर्वं जीवस्य लक्षणं वक्तव्यम्। तच्चोपयोग एवेति पूर्वमुपयोगस्य ग्रहणम्, तल्लक्षणोऽपि च जीवो मनोवाक्कायैरेव सर्वचेष्टाः करोतीति तदनन्तरं योगग्रहणम्, योगाश्चोपशान्तमोहादिषु केवला अपि कर्म्मबन्धहेतुत्वं व्याप्नुवन्ति, मिथ्यादृष्ट्यादिषु पुनर्मिथ्यात्वादिसामान्यबन्धप्रत्ययसहाया इति तदनन्तरं सामान्यबन्धप्रत्ययग्रहणम्, सामान्यं च विशेषेऽवतिष्ठत इति तदनन्तरं विशेषकर्मबन्धप्रत्ययोपादानम्, तैश्च सामान्यविशेषप्रत्ययैर्जीवः कर्म बध्नातीति तदनन्तरं बन्धस्तस्मिंश्च सत्युदयो भवतीति तदनन्तरमुदयस्तस्मिंश्च सत्युदीरणा भवतीति तदनन्तरमुदीरणा

सामान्योक्तश्च बन्धः पुनर्विशेषतश्चिन्त्यत इति तदन-
वन्धर्दयश्च पृथक् सिद्धाः संयोगतश्चिन्त्यत इति तदनन्तरं संयोगः । सामान्योक्तश्च वन्धः पुनर्विशेषतश्चिन्त्यत इति तदन-
न्तरं वन्धविधानमिति । अत्राह कश्चित्, ननु यथा सामान्येन वन्धविधिमभिधाय पुनर्भेदतोऽसौ वक्ष्यते, एवमुदयोदीरणे
अपि कस्मात् न वक्ष्येते ? सत्यमेतत्किन्तु वद्धमेवोदयादिविपयीभवतीति वन्धस्य प्रधानत्वाद्बहुवक्तव्यत्वाच्च तस्यैव भेदतो-
ऽभिधानमित्यदोष इति गाथाद्वयार्थः ॥ २ ॥ ३ ॥ इह प्रथमगाथायां जीवगुणसंज्ञितेषु स्थानेषु गाथा वक्ष्यत इत्युक्तम् । तथा
द्वितीयगाथायामप्युपयोगविधयो येषु स्थानेषु जीवगुणस्थानलक्षणेषु यावन्तः सम्भवन्ति तेऽत्राभिधास्यन्त इत्युक्तम्, तत्र किं
स्वरूपाणि कियति च तावज्जीवस्थानानि भवन्ति, येषु गाथाभिरुपयोगादयोऽभिधास्यन्त इत्याह—

भा० एत्थ विवक्खावसओ दाराणेवं परूवणा दुविहा । संभवइ नव दुवालस–भेएहिं तत्थ नव एवं ॥९॥ ठाणेसु जेसु
जेसुं ठाणेसुं गुण–रूवेसुं वन्धउदउ-
नियगुण–रूवेसुवओगदुगमेयं । जप्पच्चइओ वइयं होइ जहा तुरिययं होइ ॥ १० ॥
दीरणया । एए तिगमिस्सणे सत्त हुंति तिन्हंपि तेसिं पि ॥ ११ ॥ संजोगो इइ अट्ठमं वन्धविहाणे य नवमयं होइ । वारस-
दारविवक्खा नवमे दारम्मि चउह कए ॥ १२ ॥ पयइट्ठीअणुभाग–प्पएसभेएहि होइ अह एसिं । दाराणां इय कमभणण–का-
रणं सुणह इणमो त्ति ॥ १३ ॥ नत्थ सुदुत्तरभवजलहिपडियरयणं व दुल्लहं लद्धुं । मणुयत्तं खेत्तसुहगुरुधम्मसवणाइसामग्गी ॥
॥ १४ ॥ विउसेणं जइयव्वं मोक्खकए सोवि होइ कम्मखया । सो पुण वन्धावगमे वन्धावगमो जियायत्तो ॥ १५ ॥ जीवा
उवयोगाईहिं लक्खियव्व त्ति तो भणइ पढमं । उवओगातो तल्लक्खणो त्ति जीवोत्थ सव्वाओ ? ॥ १६ ॥ किरियाओ जोगेहिं
कुणइ तओ जोगभणणमह तेवि २ । सामन्नवन्धपच्चयजुत्ता तेसिं अओ भणणं ३ ॥ १७ ॥ ते पुण विसेसवन्धप्पच्चयसहियत्ति होइ

तब्भणणं ४ । तेहिं जियाण कम्माण होइ बन्धो त्ति तं भणइ ५ ॥ १८ ॥ तम्मि उदयो ६ दीरण ७ तओ य तिन्हं पि तेसि संयोगो ८ । सामन्नभणियमत्थं पुणो विसेसेण भणियव्वं ॥ १९ ॥ इय कारणओ पगइं ९ ठी १० अणुभाग ११ पएसओ १२ चउहा । बन्धं भणइ तओ इह वारस दारा इमे हुन्ति ॥ २० ॥ पंजलनाएण इहं पढिज्जमाणासु दारगाहासु । नव चेव दुवाराइं लक्खिज्जन्ती पुणो विवरे ॥ २१ ॥ चउहा कयम्मि हुन्ती बन्धविहाणस्स वारस दुवारा । अह पढमे दारदुगे किंचि-विसेसं पवक्खामि ॥ २२ ॥ उवओगा जोगविहि त्ति दारदुगमेत्थ सुत्तगारेण । अट्ठहिं ठाणेहिं इगारसहिं गाहाहिं भणियन्ति ॥ २३ ॥ तहि पढमे जियठाणा १ दुइए ठाणम्मि मग्गणेसु जिया २ । जीवेसु उवओगा तइयट्ठाणे ३ तह जिएसु ॥ २४ ॥ जोगा य त्तिया तुरियम्मि ठाणम्मि ४ पंचमम्मि पुणो । गुणठाणगाइ ५ तह मग्गणेसु गुणठाणगा छट्ठे ६ ॥ २५ ॥ सत्तमयम्मि गुणेसुं उवओगा हुन्ति ७ तह गुणेसु विय । जोगा पदंसिया अट्ठमम्मि ठाणम्मि ८ इह सुत्ते ॥ २६ ॥ इह जियगुणठाणगए उवओगदुगेत्ति एगमेवेयं । उवओगाभिहदारं एवं जोगे दुगेण वि ॥ २७ ॥ जोगभिहाणं दारं एगं चिय एत्थ होइ विन्नेयं । उवओगजोगवसओ जीवगुणा जं दुगं भणियं ॥ २८ ॥ जियगुणअणन्तरे जं पच्छा वा मग्गणाइ भणियाइं । दुसु ठाणेसुं ताइ वि दारत्तेणं न नेयाणि ॥ २९ ॥ एवमुवओगजोगा दारदुगं वन्नियं समेयं पि । अहुणा वन्नियदारकमेण निसुणेह भावत्थं ॥ ३० ॥ इह उवओगा जोगा ठाणेसुं जीवगुणसरूवेसु । भणियव्वा तहि पढमं जीवट्ठाणाणिमाणेह ॥ ३१ ॥

एगिन्दिएसु चत्तारि, होन्ति विगलिन्दिएसु छच्चेव । पञ्चिन्दिएसुवि तहा, चत्तारि हवन्ति ठाणाणि॥४॥

टी० इह जीवन्ति जीविष्यन्ति इति जीवाः, तिष्ठन्ति जीवा एष्विति स्थानानि जीवानां स्थानानि जीवस्थानानि,

सूक्ष्मैकेन्द्रियस्थानादीनि तानि पुनश्चतुर्दशैव, यतो नैतेभ्यो बहिः संसारिणो जीवाः केऽपि वर्तन्त इति । कथं पुनश्चतुर्दशैवेति चेदुच्यते । 'एगिन्दिएसु चत्तारि होन्ति' त्ति एकं स्पर्शनलक्षणमिन्द्रियं येषां ते एकेन्द्रियास्तेषां चत्वारि स्थानानि भवन्ति । तद्यथा एकेन्द्रिया द्विविधाः, सूक्ष्मनामकर्मोदयात्सूक्ष्माः, सर्वलोकव्यापिनः पृथिव्यादयः, बादरनामकर्मोदयाद्बादराः, लोकदेशवर्तिनस्ते । एवं पुनरपि सूक्ष्मा द्विविधाः, पर्याप्ता अपर्याप्ताश्च, बादरा अपि द्विविधाः, पर्याप्ता अपर्याप्ताश्च । तदेवमेकेन्द्रियाश्चतुर्विधा अतस्तेषां स्थानान्यपि चत्वारि भवन्ति, प्रतिविशिष्टतत्स्वरूपस्यैव स्थानशब्दवाच्यत्वादिति । पर्याप्तिस्वरूपं चेहैव वक्ष्यते । 'विगलिन्दिएसु छच्चेव' त्ति विकलान्यसम्पूर्णानीन्द्रियाणि येषां ते विकलेन्द्रियाः । एवोऽवधारणे, चः पुनरर्थे, स च भिन्नक्रमो विकलेन्द्रियेषु पुनः षडेव स्थानानि भवन्ति । कथमिति चेदुच्यते—विकलेन्द्रियास्त्रिविधाः द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियाश्चेति । पुनः प्रत्येकं पर्याप्तापर्याप्तभेदात्षोढा भवन्त्यतस्तत्स्वरूपभूतानि स्थानान्यपि षडेव तेषु भवन्तीति । पञ्च इन्द्रियाणि येषां ते पञ्चेन्द्रियास्तेष्वपि 'तथा' तेनैव प्रकारेण प्रसिद्धस्वरूपेण चत्वारि भवन्ति स्थानानि । केन प्रकारेण ? उच्यते, पञ्चेन्द्रिया द्विविधाः, संज्ञिनोऽसंज्ञिनश्च । पुनः प्रत्येकं पर्याप्तापर्याप्तभेदात्त एव चतुर्विधा इति तत्स्वरूपनिर्वृत्तानि स्थानान्यपि तेषु चत्वारि भवन्तीति । सर्वाण्यपि चतुर्दश जीवस्थानानीति गाथार्थः ॥ ४ ॥ एवं स्वरूपतो भेदतश्चोक्तानि जीवस्थानानि, सामान्यत उक्तमपि च वस्तु विशेषधर्मविचारणामन्तरेण न सम्यग्निश्चेतुं शक्यते, अतस्तान्येव विशेषधर्मनिश्चयार्थं गत्यादिमार्गणास्थानेषु मृग्यन्ते । यथा कानि क्व विद्यन्त इत्याह—

भा० एगिन्दिएसु गाहा ते हि सुहुमियरअपज्जपज्जत्ता । चउभेया एगिंदी विगलदुभेया अपज्जियरा ॥ ३२॥ पंचिंदिएसु

चउरो ठाणा सन्नी तहेव असन्नी । अपज्जत्ता पज्जत्ता एवं चउदस जियट्ठाणा ॥ ३३ ॥

**तिरियगतीए चोद्दस हवन्ति सेसासु जाण दो दो उ । मग्गणठाणेसेवं, नेयाणि समासठाणाणि ॥ ८ ॥**

टी० तत्र मार्गणास्थानानि तावद्गत्यादीनि चतुर्दश भवन्ति, उक्तंच " गइइन्दिए य काए, जोए वेए कसाय नाणे य । संजमदंसणलेसा, भवसम्मे सन्नि आहारे ॥ १ ॥" एतेषु च जीवादयः पदार्थाः सर्वेपि प्रायो मृग्यन्तेऽन्विष्यन्ते विचार्यन्त इति यावदित्येतानि मार्गणास्थानान्युच्यन्ते । इयं च सूत्रेऽपि दृश्यते; परं प्रक्षेपगाथेति लक्ष्यते, चूर्णिकारैरव्याख्यातत्वादिति । तत्र गम्यत इति गतिः, सा चतुर्विधा, नरकगतिस्तिर्यग्गतिर्मनुष्यगतिर्देवगतिश्चेति । एतासु मध्ये तिर्यग्गतौ चतुर्दशापि जीवस्थानानि भवन्ति । यतस्तस्यामेकेन्द्रिया विकलेन्द्रियाः, संज्ञ्यसंज्ञिपञ्चेन्द्रियाश्च सभेदाः प्राप्यन्तऽतस्तद्गतानि चतुर्दशापि जीवस्थानानि लभ्यन्त इति भावः । 'सेसासु जाण दो दो उ ' त्ति तुः पुनरर्थे, स च भिन्नक्रमः, शेषासु पुनस्तिसृषु नारकमनुष्यदेवगतिषु 'जानीहि' अवगच्छ द्वे द्वे संज्ञिपञ्चेन्द्रियपर्याप्तापर्याप्तलक्षणे जीवस्थानके, शेषाणि तु न लभ्यन्ते, एकेन्द्रियादीनां तत्राभावादिति । अत्र चापर्याप्तो द्विधा सम्भवति । लब्ध्या करणेन च, तत्र योऽपर्याप्तक एव मरिष्यति न पुनः पर्याप्तीः समर्थयिष्यति स लब्ध्यपर्याप्तकः, यः पुनः करणानि शरीरेन्द्रियादीनि न तावन्निवर्त्तयति निवर्त्तयिष्यति च पुरस्तान्नापर्याप्तक एव मरिष्यति स करणापर्याप्तक उच्यते । तत्र नरकदेवगत्योरपर्याप्तकः करणेन गृह्यते, न लब्ध्या, लब्ध्यपर्याप्तकस्य तत्रोत्पत्तेरेवाभावात्,मनुष्यगतौ पुनरुभयथापि लभ्यत इति । अत्राह कश्चित्, ननु मनुष्यगतावसञ्ज्ञिपञ्चेन्द्रियापर्याप्तकमनुष्यलक्षणं तृतीयमपि जीवस्थानकं लभ्यते तत्कस्मान्नेहोक्तमिति सत्यम्, लभ्यते केवलं विशिष्टमनुष्यकार्याकरणात्संक्लिष्टत्वाच्च । तिर्य-

ग्रहणेन गृहीतोऽसावित्येके, अपर्याप्तक एवासौ कालं करोतीत्यल्पकालभावित्वान्न विवक्षित इत्यन्ये, तत्त्वं तु केवलिनो विद-
न्तीति। तदेवमाद्ये गतिद्वारे जीवस्थानानि साक्षादभिधाय, शेषेष्वतिदिशन्नाह—' मग्गणठाणेसेवं नेयाणि समासठाणाणि ' त्ति।
(समासः) संक्षेपस्तस्य स्थानानि समासस्थानानि। इह यैः स्वल्पैरपि स्थानैर्बहवोऽपि पदार्थाः संक्षिप्योच्यन्ते, तानि सामान्येन
समासस्थानान्यभिधीयन्ते। अत्र तु प्रस्तावात्समासस्थानत्वेन जीवस्थानान्यभिप्रेतानि। चतुर्दशभिरप्यमीभिरनन्तानामपि
जीवानां संक्षिप्याभिधानात्, ततश्चेदमुक्तं भवति–गतौ चिन्तितत्वादर्यापत्त्या शेषेष्विन्द्रियादिषु मार्गणस्थानेष्वेवमुक्तप्रकारेण
ज्ञेयानि, यानि यत्र सम्भवन्ति तानि च तत्र स्वबुद्ध्याज्ञातव्यानि समासस्थानानि जीवस्थानानीत्यर्थः। इत्थमतिदिष्टान्यप्यमूनी-
न्द्रियादिमार्गणाद्वारेषु विनेयजनानुग्रहार्थं संक्षेपतश्चिन्त्यते॥ 'इन्दिए' त्ति, इन्द्रो जीवस्तेन निर्वर्तितानीन्द्रियाणि स्पर्शनरसनघ्राण-
चक्षुःश्रोत्राणि पञ्च, तत्र स्पर्शनेन्द्रिये चतुर्दशापि जीवस्थानानि लभ्यन्ते सकलभूतग्रामव्यापकत्वात्तस्य, रसनेन्द्रिये त्वेकेन्द्रिय-
सम्भवानि चत्वारि वर्जयित्वा शेषाणि दश जीवस्थानानि लभ्यन्ते, एकेन्द्रियेषु तस्याभावाद्, द्वीन्द्रियादिषु च सर्वत्र भावादिति,
घ्राणेन्द्रिये त्वेकेन्द्रियद्वीन्द्रियसम्भवीनि षड्वर्जयित्वा शेषाण्यष्टौ लभ्यन्ते, एकेन्द्रियद्वीन्द्रियेषु तस्याभावादन्यत्र तु सर्वत्र भावादिति,
चक्षुरिन्द्रियेषु चतुरिन्द्रियपञ्चेन्द्रियसम्बन्धीनि षड् लभ्यन्ते, न शेषाणि, शेषजीवेषु तस्याभावादेतेषु तु भावादिति, श्रवणेन्द्रिये
पञ्चेन्द्रियसम्बन्धीनि चत्वारि जीवस्थानानि प्राप्यन्ते, न शेषाणि, शेषजीवेषु तस्याभावात्पञ्चेन्द्रियेषु तु भावादिति॥ 'काए'
त्ति, चीयमानत्वात्कायः। पृथिव्यप्तेजोवायुवनस्पतित्रसकायभेदात्षोढा। तत्राद्येषु पञ्चसु कायेष्वेकेन्द्रियसम्बन्धीनि चत्वारि
जीवस्थानानि प्राप्यन्ते, त्रसकाये त्वेकेन्द्रियसम्भवीनि चत्वारि वर्जयित्वा शेषाणि द्वीन्द्रियादिसम्बन्धीनि दश लभ्यन्ते, द्वीन्द्रि-

यादीनामेव त्रसत्वादिति ॥ 'जोए' त्ति, योगो मनोवाकाययोगभेदात्संक्षेपतस्त्रिधा, तत्र मनोयोगे संज्ञिपञ्चेन्द्रियपर्याप्तक-लक्षणमेकं जीवस्थानमवाप्यते, तत्रैव मनसः सद्भावादिति, वाग्योगे तु पर्याप्तद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियसंज्ञिप-ञ्चेन्द्रियलक्षणानि पञ्च जीवस्थानानि लभ्यन्ते, न शेषाणि, तेषु वाग्योगाभावादिति, काययोगे तु चतुर्दशापि जीवस्थानानि लभ्यन्ते सर्वजीवस्थानव्यापकत्वात्तस्य ॥ 'वेदे' त्ति, वेद्यते इति वेदः, स्त्रीपुंनपुंसकभेदात्त्रिधा तत्र स्त्रीपुरुषवेदयोःपर्याप्तापर्या-प्तकसंज्ञ्यसंज्ञिपञ्चेन्द्रियलक्षणानि चत्वारि चत्वारि जीवस्थानानि लभ्यन्ते, अपर्याप्तकश्चात्र करणेन गृह्यते, न लब्ध्या, लब्ध्य-पर्याप्तकस्य सर्वस्यैव नपुंसकत्वादिति । अन्यच्च यदत्रासंज्ञिनि स्त्रीपुंसाभिधानं तत्कार्मग्रन्थिकमतेनैव द्रष्टव्यम् । सैद्धान्तिकानां त्वसंज्ञिपर्याप्तोऽपर्याप्तो वा नपुंसक एव, तथा च प्रज्ञप्तिः 'ते¹ णं भन्ते? असन्निपञ्चेन्द्रियतिरिक्खजोणिया जीवा किं इत्थीवेयगा पुरिसवेयगा नपुंसगवेयगा? गोयमा! नो इत्थिवेयगा नो पुरिसवेयगा नपुंसगवेयगा'। मनुष्या असंज्ञिनस्तु लब्ध्यपर्याप्तका एव भवन्तीत्यतस्ते निर्विवादं नपुंसका एवेत्यलंप्रसङ्गेन। नपुंसकवेदे तु चतुर्दशापि जीवस्थानानि प्राप्यन्ते, सकलजीवस्थानसम्भवित्वा-त्तस्य। अत्र च वेदग्रहणेन तत्प्रतिपक्षभूतो वेदाभावोऽपि सूचितः। सूचकत्वात्सूत्रस्य, ततश्च वेदाभावे संज्ञिपञ्चेन्द्रियपर्याप्तकलक्षणमेकं जीवस्थानमवाप्यते, अन्यत्र वेदाभावाभावादेवमन्यत्रापि प्रतिपक्षभावना कार्येति ॥ 'कसाय' त्ति, कषाया वक्ष्यमाणस्वरूपाः षोडश तेषु चतुर्दशापि जीवस्थानानि लभ्यन्ते। कषायाभावे वेदाभाववद्वाच्यमिति ॥ 'नाणे' त्ति, ज्ञानानि मत्यादीनि वक्ष्य-

१ ते भदन्त! असंज्ञिपञ्चेन्द्रियतिर्यग्योनिकाः जीवाः किं स्त्रीवेदका पुरुषवेदका नपुंसकवेदकाः? गौतम! न स्त्रीवेदका न पुरुषवेदका, नपुंसकवेदकाः

माणस्वरूपाणि पञ्च, तत्र मतिश्रुतावधिषु संज्ञिपर्याप्तापर्याप्तलक्षणे द्वे जीवस्थाने लभ्येते, न शेषाणि, तेषु ज्ञानाभावात् । अपर्याप्तोऽपि करणेन गृह्यते, न लब्ध्या, तदपर्याप्तस्य मिथ्यादृष्टित्वेन ज्ञानाभावादिति । ननु सास्वादनसम्यग्दृष्टौ मतिश्रुते लभ्येते, स च पृथिव्यादिषूत्पद्यत इति वक्ष्यते, तत्कथं मतिश्रुतयोर्द्वे एव जीवस्थाने प्रोच्यते ? सत्यम्, मलीमसत्वात्स इहाज्ञानित्वेन विवक्षित इत्यदोषः । मनःपर्यायकेवलज्ञानयोस्तु संज्ञिपञ्चेन्द्रियपर्याप्तकलक्षणमेकमेवजीवस्थानं लभ्यते, न शेषाणि, तेषु चारित्राभावात्तदभावे च प्रस्तुतज्ञानाभावादिति । केवली च यद्यपि न संज्ञी नाप्यसंज्ञीति प्रसिद्धस्तथापि द्रव्यमनोयोगादिह संज्ञित्वेन विवक्षितः । अज्ञानानि मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानाख्यानि त्रीणि, तत्र मत्यज्ञानश्रुताज्ञानयोः सर्वाण्यपि जीवस्थानानि सम्भवन्ति, तयोर्मिथ्यात्वप्रत्ययत्वात्तस्य च सर्वत्र सम्भवादिति । विभङ्गज्ञाने तु संज्ञी पर्याप्तः करणापर्याप्तश्च लभ्यते ॥ 'संजम' त्ति, इह सूचकत्वात्सूत्रस्य संयमग्रहणेन त्रितयं सूच्यते । संयमः संयमासंयमोऽसंयमश्चेति । तत्र संयमे सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसंपराययथाख्यातलक्षणे, संयमासंयमे च देशविरतिरूपे संज्ञिपर्याप्तकपञ्चेन्द्रियलक्षणमेकमेव जीवस्थानं प्राप्यते, न शेषाणि, तेषु सर्वदेशविरत्योरसम्भवात्, असंयमे तु चतुर्दशापि जीवस्थानानि सम्भवन्ति, सर्वसम्भवित्वात्तस्येति ॥ दंसणे त्ति, दर्शनं पूर्वोक्तस्वरूपं चक्षुरचक्षुरवधिकेवलदर्शनरूपं चतुर्विधम् । तत्र चक्षुर्दर्शने पर्याप्तचतुरिन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियलक्षणानि त्रीण्येव जीवस्थानानि लभ्यन्ते, अन्यत्र चक्षुष एवाभावात् । अचक्षुर्दर्शने त्वसंयमवद्वाच्यम् । अवधिदर्शने अवधिज्ञानवत्, केवलदर्शने केवलज्ञानवदिति ॥ 'लेस' त्ति, लेश्याः कृष्णादिकाः षट् प्रतीता एव । तत्र कृष्णनीलकापोतलेश्यास्वसंयमिजीववदेव वाच्यम् । तेजःपद्मशुक्ललेश्यासु संज्ञिपञ्चेन्द्रियः पर्याप्तकोऽपर्याप्तकश्च

लभ्यते, अपर्याप्तकोऽपि करणेन लभ्यते, न लब्ध्या, तदपर्याप्तकश्च प्रथमलेश्यात्रयवर्त्तित्वादिति। अत्र च तैजस्यां देवेभ्योऽनन्तरोत्पन्नो बादरः करणापर्याप्तक एकेन्द्रियोऽपि लभ्यते, स चाल्पकालभावित्वादिना केनचित्कारणेन 'चूर्णिकृता' नोक्त इत्यस्माभिरपि नाभिहितः॥ भव्व त्ति, अत्र च भव्यग्रहणेन भव्याभव्यौ सूचितौ तयोश्चतुर्दशापि जीवस्थानानि लभ्यन्ते, सर्वत्रानयोस्संभवात्॥ 'सम्मे'त्ति सम्यक्त्वग्रहणेन क्षायिकवेदकक्षायोपशमिकौपशमिकसास्वादनलक्षणानि पञ्च सम्यक्त्वानि तत्प्रतिपक्षभूतं मिश्रं मिथ्यात्वं च सूचितम्। तत्राद्येषु त्रिषु सम्यक्त्वेषु संज्ञिपञ्चेन्द्रियः पर्याप्तकः करणापर्याप्तकश्च लभ्यते। कथमेतेष्वपर्याप्तको लभ्यते इति चेत्? उच्यते, इह कश्चित्पूर्वबद्धायुष्कः क्षायिकसम्यक्त्वं क्षिप्यमाणसम्यक्त्वपुञ्जचरमग्रासरूपं वेदकसम्यक्त्वं चोत्पाद्य गतिचतुष्टयस्यान्यतरस्यां गतावुत्पद्यमानः प्रथममपर्याप्तकः क्षायिकसम्यग्दृष्टिर्वेदकसम्यग्दृष्टिश्च लभ्यते, क्षायोपशमिकसम्यग्दृष्टिस्तु देवादिभ्योऽनन्तरमिहोत्पद्यमानस्तीर्थंकरादिरपर्याप्तकः प्राप्यते इति सुप्रतीतमेवेति। औपशमिकसम्यक्त्वे पर्याप्तसंज्ञिपञ्चेन्द्रिय एव लभ्यते, अन्यस्य तदयोगात्। अन्ये तु संज्ञिपञ्चेन्द्रियस्यापर्याप्तकस्याप्यौपशमिकसम्यक्त्वं वर्णयन्ति, तच्च नावगच्छामस्तथाहि—अयमपर्याप्तावस्थायां तावदेतत्सम्यक्त्वं नोत्पादयति, तथाविधविशुद्ध्यभावात्, पारभविकं तर्हि भविष्यतीति चेत्? तदपि न युक्तिक्षमं, तथाहि—यो मिथ्यादृष्टिरसंस्तत्प्रथमतया औपशमिकं सम्यक्त्वमवाप्नोति स तद्भावमापन्नः कालं न करोति। यत उक्तम्—"अणबन्धो १ दय २ माउगबन्ध ३ कालं च ४ सासणो कुणइ। उवसमसम्मद्दिट्ठी चउण्हमेकंपि नो कुणइ॥१॥" उपशमश्रेण्यां मृत्वाऽनुत्तरसुरेषूत्पन्नस्यापर्याप्तकस्यैतल्लभ्यत इति चेत्? नन्वेतदपि

१ अनन्तानुबन्धिबन्धो १ दय २ आयुष्कबन्ध ३ कालं च ४ सास्वादन. करोति। उपशमसम्यग्दृष्टिः चतुर्णां मध्ये एकमपि न करोति॥१॥

न बहुमन्यामहे, तस्य प्रथमसमये एव सम्यक्त्वपुद्गलोदयात्, उक्तं च बृहच्चूर्णावस्मिन्नेव विचारे "जो उवसमसम्मदिट्ठी
उवसमसेढीए कालं करेइ, सो पढमसमये चेव सम्मत्तपुंजं उदयावलियाए छोढुण सम्मत्तपुग्गले वेएइ, तेण न उवसमसम्मदिट्ठी
अपज्जत्तगो लब्भइ" इत्यादि । तस्मात्पर्याप्तसंज्ञिलक्षणमेकमेव जीवस्थानमत्र प्राप्यत इति स्थितम् । सास्वादनसम्यक्त्वे तु लब्ध्या
पर्याप्तकाः करणेन त्वपर्याप्तका बादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिपञ्चेन्द्रिया लभ्यन्ते, संज्ञी तु लब्ध्या पर्याप्त एव
करणेन त्वपर्याप्तः पर्याप्तश्चलभ्यते । सम्यग्मिथ्यादृष्टौ करणपर्याप्तसंज्ञिपञ्चेन्द्रियलक्षणमेकमेव जीवस्थानं लभ्यंते, स हि पूर्व-
भनिपन्नो न भवान्तरं संक्रामति "नं सम्ममिच्छो कुणइ कालं" इतिवचनात्, प्रतिपद्यमानस्तु पर्याप्तसंज्ञिपञ्चेन्द्रिय एव भव-
तीति । मिथ्यादर्शने चतुर्दशापि जीवस्थानानि लभ्यन्ते, सर्वव्यापकत्वात्तस्येति ॥ सन्नि त्ति, अत्र संज्ञिग्रहणेन तत्प्रतिपक्ष-
भूतोऽसंज्ञ्यपि सूचितस्तत्र संज्ञिनि संज्ञिपर्याप्तापर्याप्तलक्षणं जीवस्थानद्वय प्राप्यते, शेषाणि तु द्वादशापि जीवस्थानान्यसंज्ञिनि
लभ्यन्ते, मनोविकलत्वात्तेषामिति ॥ 'आहारे' त्ति अत्राप्याहारकग्रहणेन तत्प्रतिपक्षभूतोऽनाहारकोऽपि सूचितस्तत्राहारकेषु
मिथ्यादर्शनवद्वाच्यम् । अनाहारकेषु त्वपर्याप्तसूक्ष्मबादरैकेन्द्रियद्वित्रिचतुरिन्द्रियसंज्ञ्यसंज्ञिपञ्चेन्द्रियलक्षणानि विग्रहगतौ सप्त जी-
वस्थानानि लभ्यन्ते, संज्ञिपर्याप्तकोऽपि केवलिसमुद्घाते तृतीयचतुर्थपञ्चमसमयेषु सम्प्राप्यत इतिगाथार्थः ॥ ५ ॥ तदेवं
जीवस्थानानि स्वरूपतः सामान्येनाभिहितानि, विशेषतोऽपि मार्गणस्थानेषु चिन्तितानि । साम्प्रतं 'उवओगा जोगविही' त्यादि

१ य उपशमसम्यग्दृष्टिः उपशमश्रेणौ कालं करोति, स प्रथमसमये एव सम्यक्त्वपुञ्जमुदयावलिकायां प्रक्षिप्य
सम्यक्त्वपुद्गलान् वेदयति, तेन नोपशमसम्यग्दृष्टिरपर्याप्तको लभ्यते. २ न सम्यग्मिथ्यादृष्टिः करोति कालं

प्रतिज्ञामनुसरन्नेवेह सामान्यविशेषरूपतया निश्चितेषु जीवस्थानेषूपयोगांश्चिन्तयन्नाह—

भा० अह तिरियगई गइइंदियाइजुयलेण मग्गठाणेसु । जीवट्ठाणगभणणं मग्गणनामा य भणियंति ॥ ३४ ॥ तिरिसु चउद्दस जेणं इगविगलपणिंदिया समेयावि । सव्वे वि अत्थि दो गइ-तिगम्मि पज्जेयरो सन्नी ॥ ३५ ॥ एत्थ गइइंदियाई चोद्दस ठाणेण नो कओ विवरो । यावढिभेयभिन्नो संखित्तेण ( य ) गइस्स ॥ ३६ ॥ एत्थ समासट्ठाणग-सद्दो संखेव-ठाणपज्जाओ । तेण य एत्थ उ पत्थावओय जियठाणगाभिमया ॥ ३७ ॥ जेणं चउद्दसेहि वि एएहि अणन्तयाण वि जियाणं । संखिविऊणं भणणं कयन्ति अह इह गइचउगे ॥ ३८ ॥ सुत्तगरेणं जीवा सुत्ते वि विचिन्तिया तयणुसारा । सेसिन्दियमाईसुं मग्गणठाणेसु तेरससु ॥ ३९ ॥ जहसंभवमवसेया समईए चिन्तिऊण जियठाणा । तत्थेगिन्दियजीवाण आइमा चउजियट्ठाणा ॥ ४० ॥ बितिचउरिन्दिसु दो दो अन्तिमचउरो पणिन्दिसु हवन्ति । थावरपणगे पढमा चउरो चरमा दस तसेसु ॥ ४१ ॥ विगलतियसन्नसन्नी पज्जत्ता पञ्च हुन्ति वयजोए । मणजोगे सन्नेक्को पुरिसित्थिवेए चरमचउरो ॥ ४२ ॥ कओगि नपुंसकसायमइसुयऽन्नाणअविरयअचक्खू । आइतिलेसाभवियर-मिच्छआहारगं सव्वे ॥ ४३ ॥ मइसुयओहिदुगविभङ्गपम्हसुक्कासु तिसु य सम्मेसु । सन्निम्मिय दो ट्ठाणा सन्निअपज्जत्तपज्जत्ता ॥ ४४ ॥ मणपज्जवकेवल-दुग-संजयदेसजइमीसदिट्ठीसु । सन्नीपज्जो चक्खुम्मि तिन्निछप्पज्जियरचरमा ॥ ४५ ॥ सत्त उ सासाणे बायरा अप-ज्जसन्निपज्जो य । तेउल्लेसे बायरऽपज्जत्तो दुविहसन्नी य ॥ ४६ ॥ असन्नि आईवारस अणहारे अट्ठ सत्तऽपज्जत्ता । सन्नी पज्जत्तो तह इयगइयाइसु जियट्ठाणा ॥ ४७ मग्गेसु जिया भणिया अहुणा चउदसजिएसु उवओगा । जोगा एगारसेसु

इंगाइदुगेणाह ॥ ४८ ॥
गकारसेसु तिय तिय दोसु चउक्कं च बारसेक्कम्मि । जीवसमासेसेवं उवओगविही मुणेयव्वो ॥ ६ ॥
टी० पर्याप्तचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियसंज्ञिपञ्चेन्द्रियवर्जेषु शेषेष्वेकादशसु जीवस्थानेषु मत्यज्ञानश्रुताज्ञानाचक्षुर्दर्शनलक्ष-
णास्त्रयस्त्रय उपयोगा भवन्ति, न शेषाः, सम्यक्त्वाद्यभावेन शेषोपयोगानामेतेष्वसम्भवादिति । च पुनरर्थे भिन्नक्रमश्च,
द्वयोः पुनर्जीवस्थानयोः पर्याप्तचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियलक्षणयोश्चत्वार उपयोगा भवन्ति, त्रयस्तावत्पूर्वोक्ता एव, चतुर्थस्तु
चक्षुर्दर्शनोपयोगोऽनयोश्चक्षुषः सद्भावादिति । 'बारसेक्कम्मि' त्ति एकस्मिन् संज्ञिपर्याप्तकजीवस्थाने द्वादशाप्युपयोगाः
पूर्वोक्तस्वरूपाः प्राप्यन्ते । अत्र च सर्वत्रापर्याप्तकग्रहणेन लब्ध्यपर्याप्तको गृहीतो, यस्तु करणापर्याप्तकः स पर्याप्तकग्रहणेन
गृहीतोऽपर्याप्तसंज्ञिनो मतिश्रुतावध्युपयोगानभिधानात्, अन्यथा हि तीर्थकरादेः करणतोऽपर्याप्तस्यैते उपयोगा लभ्यन्त एवेति।
'जीवसमासेसु' जीवस्थानेषु, 'एवम्' उक्तक्रमेण, 'उपयोगविधिः' उपयोगभेदः, 'मुणितव्यो' ज्ञातव्य इतिगाथार्थः
॥ ६ ॥ साम्प्रतं तेष्वेव जीवस्थानेषु योगान् प्रतिपादयन्नाह—
भा० दसमदुवालसचोद्दस जीवट्ठाणाइमेसु सेसेसु । मइसुयअन्नाणअचक्खुदंसणा तिन्नि उवओगा ॥ ४९ ॥ ते तिन्नि
चक्खुजुआ चत्तारि हवन्ति दसदुवालसमे । चोद्दसगम्मि य बारस एत्थ य सव्वत्थऽपज्जत्तो ॥ ५० ॥ लद्धिऽपज्जत्तो जो
सो नेओ जो उ करणपज्जत्तो । सो पज्जत्तगहणेण गिण्हिओ सन्निणो जेण ॥ ५१ ॥ अपज्जत्तस्स उ मइसुयओहीण अणि-
च्छणा मुए य पुणो । तित्थयराईणं करणअपज्जत्ताण उवओगा ॥ ५२ ॥ एए भणिया तम्हा करणअपज्जत्तओ उ पज्जत्तो ।

दट्ठवो एत्यत्थे किंचि विसेसं पवक्खामि ॥ ५३ ॥ जो सन्निअपज्जत्तो लद्धीए तस्स तिन्नि उवओगा । एए भणिया ओ पुण करणं आसज्ज अपज्जत्तो ॥ ५४ ॥ सन्नी तस्सुवओगा अट्ठेव हवन्ति जेणिमं भणियं । मणनाणचक्खुकेवल-दुगरहिया सन्निऽपज्जत्ते ॥ ५५ ॥ ते चक्खुजुया गब्भत्थ-सन्निपज्जत्तनरतिरिक्खाणं । ताओ विणिगयाणवि तिरिपज्जत्ताण सन्नीणं ॥ ५६ ॥ ते अट्ठ उ चक्खुजुया नवेव हुन्ती तहा नराणंपि । गब्भा विणिग्गयाणं ते नव जा अट्ठ वरिसाणि ॥ ५७ ॥ गेहत्यत्ते तदुवरि जइ सभवओ उ ते नवुवओगा । पडिवन्नम्मि चरित्ते मणनाणजुया दस हवन्ति ॥ ५८ ॥ तदुवरि जइ संभवओ चरित्तिणो वच्छरे अइक्कन्ते । केवलिय नाणदंसणदुगसहिया बारस हवन्ति ॥ ५९ ॥ अप्पज्जेयरभेया दुहा जिना तहि अपज्जओ दुविहो । लद्धीए करणेण य तस्स सरूवं इमं भणिय ॥ ६० ॥ अपज्जत्तो दुविहो लद्धिअपज्जत्तकरणअपज्जत्तो । तत्थ य जो अप्पज्जत्त-एव कालं किर करेइ ॥ ६१ ॥ न पुणो पज्जत्तीओ पूरिस्सइ सो उ लद्धिऽपज्जत्तो । जो पुण सरीरइन्दिय-माईणि उ करणसन्नाणि ॥ ६२ ॥ नो अज्जवि निवत्तइ निवत्तिस्सइ य पुण पुरो नियमा । न मरिस्सइ अपज्जत्तो करणोऽपज्जत्तओ सोउ ॥ ६३ ॥ सुरनेरइया नियमा करणापज्जत्तया सया हुन्ति । मणुयगईया दुविहा वि हुन्ति तिरिया वि एमेव ॥ ६४ ॥

नयसु चउके एके जोगा एगो य दोन्नि पन्नरस । तब्भवगएसु एए भवन्तरगएसु काओगो ॥ ७ ॥

टी० नवसु जीवस्थानकेषु चतुष्के जीवस्थानकानामेकस्मिन् जीवस्थानके यथासंख्यं योगा भवन्ति । सामान्येनैको द्वौ पञ्चदशेति । तत्र सूक्ष्मबादरपर्याप्तापर्याप्तभेदभिन्ना एकेन्द्रियाश्चतुर्विधा अपि शेषास्तु द्वीन्द्रियादयोऽपर्याप्तकाः पञ्च एतेषु

नन्तु जीवस्थानकेषु सामान्येन तावदेकः काययोगो भवति। विशेषतस्तु लब्ध्या करणेन चापर्याप्तकेषु समस्तेष्वौदारिकमिश्रकाय-
योगः पर्याप्तस्य तु सूक्ष्मैकेन्द्रियस्य बादरैकेन्द्रियस्य च वायुवर्जस्यौदारिककाययोगो लभ्यते। वायोस्तु बादरपर्याप्तस्य वैक्रि-
यवैक्रियमिश्रकाययोगौ लभ्येते औदारिककाययोगश्च लभ्यते। एते च सर्वेऽपि सामान्यं काययोगत्वं न व्यभिचरन्तीति सामा-
न्यतः सूत्र एककाययोगत्वेन विवक्षिताः। जीवस्थानचतुष्के करणपर्याप्तद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासञ्ज्ञिपञ्चेन्द्रियलक्षणे द्वौ
योगौ भवतस्तद्यथा–औदारिककाययोगोऽसत्यामृषवाग्योगश्च शेषास्तु न लभ्यन्तेऽसम्भवादेवेति। एकस्मिन् पर्याप्तसंज्ञिपञ्चेन्द्रि-
यलक्षणे जीवस्थाने पञ्चदशापि योगाश्चतुर्विधमनोयोगचतुर्विधवाग्योगसप्तविधकाययोगलक्षणाः पूर्वोक्ताः प्राप्यन्ते। आह–ननु
शेषयोगाः पर्याप्तसंज्ञिनि सम्भवन्तु, औदारिकमिश्रवैक्रियमिश्राहारकमिश्रकार्मणलक्षणास्तु कथमस्य पर्याप्तस्य सम्भवन्त्यप-
र्याप्तावस्थाभावित्वादमीषामिति? उच्यते, वैक्रियमिश्रस्तावद्वैक्रियं कृत्वा प्रयोजनसिद्धौ तत्परित्यज्य पुनरौदारिकं स्वीकुर्वतः
संयतादेर्लभ्यते। अथवा यो लब्ध्या पर्याप्तः करणेन त्वपर्याप्तः सोऽपीह पर्याप्तकग्रहणेन गृहीतस्तस्य च देवनारकेषूत्पद्यमा-
नस्य वैक्रियमिश्रः सुप्रतीत एवेति। आहारकमिश्रस्त्वाहारकं कृत्वा तत्परित्यज्य पुनरौदारिकं स्वीकुर्वतः संयतस्यैव लभ्यते।
औदारिकमिश्रकार्मणयोगौ तु केवलिनः समुद्घातगतस्य प्राप्येते। तथा चोक्तं–"औदारिकप्रयोक्ता प्रथमाष्टमसमययोरसा-
विष्टः। मिश्रौदारिकयोक्ता सप्तमषष्ठद्वितीयेषु ॥ १ ॥ कार्मणशरीरयोगी चतुर्थके पञ्चमे तृतीये च। समयत्रयेऽपि तस्मिन्भवत्य-
नाहारको नियमात् ॥२॥" एते च पर्याप्ता एवेति भावनीयम्। 'तद्भव' इत्यादि, स चासौ नारकाद्यन्यतरो भवश्च तद्भवस्तं
गतास्तद्भवगता विवक्षितस्थानप्राप्ता इत्यर्थस्तेष्वेते पूर्वोक्ता योगा ज्ञातव्याः, भवान्तरगतेषु विग्रहगतेषु पुनः सर्वेष्वप्येक एव

काययोगः कार्मणकायलक्षणो भवति, न शेषास्तेषां तत्रासम्भवादिति गाथार्थः ॥ ८ ॥ प्रकृतमुपसंहरन्नाह ।

भा० सामन्नेण जियट्ठाणगेसु पढमाइपणसु सत्तमगे । नविगारसतेरसमे इय नवसुं एग काओगो ॥६५॥ एत्थ विसेसो लद्धी-करणापज्जत्तएसु सत्तसु वि । विन्नेओ ओरालियमीसो एगो इहं जोगो ॥ ६६ ॥ भवअंतरालगा वि हु ते अपज्जत्तओ य तेसिंपि । कम्मणजोगो वि भवे इय जोगदुगं पि तेसिं भवे ॥ ६७॥ तह तेसिं अपज्जाणं तणुपज्जत्ताण केइ ओराले । विंती तेसिं मयओ घडिज्ज जोगतिगमिति पेच्छ ॥ ६८॥ अपज्जत्तगसन्नीणं वेउव्वियमीसओ चउत्थोवि । जोगो घडेज्ज सत्तसु अपज्जेसुं इय विसेसो ॥ ६९ ॥ पज्जसुहुमे वि एसो जोगो नवरं तु उरलनामो सो । पज्जत्तबायरे वाउवज्जिए उरलमेवेगं ॥ ७० ॥ बायरवाए पज्जत्तयम्मि वेउव्विजुयलओराला तिन्नि इगजोगभेओ एसो भणिओ विसेसेण ॥ ७१ ॥ एवं नवठाणेसुं जह संभवओ उ पञ्च तणुजोगा । आहारगदुगरहिया धरन्ति एत्थं परं किन्तु ॥ ७२ ॥ एए सव्वे वि पुणो सरीरजोगा उ नो वभिचरन्ति । इय इगतणुजोगत्तं सुत्ते सामन्नओ भणियं ॥ ७३ ॥ ओरालासच्चामुस दो जोगा छअडदसदुवालसमे । एगम्मि चउदसमे जोगा उ हवन्ति पनरसस्स ॥७४॥ सन्नीणं पज्जाणं चउ चउ मणवयणउरलवेउव्वा । दस सुगमा सेसगतणु-पणजोगस्सेस भावणिया ॥ ७५ ॥ वेउव्वियं पजुञ्जिय तं मुञ्चन्तस्स उरलसीकरणे । वेउव्विमीसजोगो अहवा जो लद्धिपज्जत्तो ॥ ७६ ॥ करणेण अपज्जत्तो सो वेत्थ उ पज्जगहणओ गहिओ । तस्स सुरनारगाणं गईसु उववज्जमाणस्स ॥ ७७ ॥ होइ विउव्वियमीसो तह चउदसपुव्विणो उ आहारं । तं पिव मुञ्चन्तस्स उ उरलं परिगिण्हमाणस्स ॥ ७८ ॥ होयाहारगमीसो ओरालियमीसकम्मजोगा य । केवलिणो समुघायं गयस्स किल हुन्ति दुन्नि वा ॥ ७९ ॥ एवं पनरससन्निम्मि हुन्ति ते तं

भर्ं अरत्तस्स। कम्मणुभवन्तराले अह उवओगाइया गाहा ॥ ८० ॥

उवओगा जोगविही जीवसमासेसु वन्निया एवं। एत्तो गुणेहि सह परिगयाणि ठाणाणि मे सुणसु ॥ ८ ॥

टी० गाथापूर्वार्द्धे विधिशब्दस्य प्रत्येकमभिसम्बन्धादुपयोगविधयो योगविधयश्च 'जीवसमासेसु' जीवस्थानेषु, 'वर्णि-ताः' भणिताः, 'एवम्' उक्तक्रमेणेत्यर्थः। इदमुक्तं भवति-उवओगा जोगविहीत्यादिगाथायां यत्प्रतिज्ञातमासीत्तत्रो-पयोगा योगाश्च जीवस्थानेषु चिन्तिताः। साम्प्रतं पुनस्त एव गुणस्थानकेषु चिन्तनीयाः, अतः पूर्वं तावद् गुणस्थानकान्येव स्वरूपतो भेदतश्च विभणिषुर्गाथापश्चार्द्धेन पातनामाह-'एत्तो' इत्यादि, इत ऊर्द्धं 'गुणैर्ज्ञानादिभिः सह 'परिगतानि' युक्तानि, स्थानानि 'मे' मम भणत इति गम्यते शृणुत यूयमितिगाथार्थः॥ यथाप्रतिज्ञातमेवाह—

भा० गुणयेत्तो उ गुणे मिच्छागाहा उ आह सा सुगमा। नवरं किञ्चि सरूवं गाहाहि इमाहि पभणामि ॥ ८१ ॥

मिच्छद्दिट्ठीसासणमिस्से अजए य देसविरए य। नव संजएसु एवं चोद्दस गुणनामठाणाणि ॥ ९ ॥

टी० इह प्राकृतशैल्या दृष्टिशब्दस्योत्तरत्रापि सम्बन्धात् "भीमो भीमसेन" इति न्यायादेकदेशेन समुदायस्य गम्यमानत्वाच्च सूचकत्वाच्च सूत्रस्येत्थमवगन्तव्यम्। मिथ्यादृष्टिगुणस्थानम् 'सासणे' त्ति, सासादनसम्यग्दृष्टिगुणस्थानम्, 'मिस्से' त्ति, सम्यग्मिथ्यादृष्टिगुणस्थानम्, 'अजए' त्ति, अयतोऽविरत इत्यनर्थान्तरम्, ततश्चाविरतसम्यग्दृष्टिगुणस्थानम्, 'देसविरए' त्ति, देशविरतिगुणस्थानं चकारौ समुच्चये एतानि पञ्च गुणस्थानानि। शेषाणि पुनर्नव गुणस्थानानि 'संयतेषु' प्रमत्ताप्रमत्तनिवृत्त्यनिवृत्तिसूक्ष्मसम्परायोपशान्तमोहक्षीणमोहसयोग्ययोगिलक्षणेषु भवन्ति, एते हि सर्वेपि संयम-

सामान्यं न व्यभिचरन्तीति संपतत्वेनोक्ता. एतेषु नव गुणस्थानानि भवन्ति, तद्यथा–प्रमत्तसंयतगुणस्थानमप्रमत्तसंयतगुणस्थानमपूर्वकरणगुणस्थानमनिवृत्तिबादरसंपरायगुणस्थानं सूक्ष्मसंपरायगुणस्थानमुपशान्तकषायवीतरागच्छद्मस्थगुणस्थानं क्षीणकषायवीतरागच्छद्मस्थगुणस्थानं सयोगिकेवलिगुणस्थानमयोगिकेवलिगुणस्थानं चेति सर्वाण्यप्येवमुक्तक्रमेण 'चतुर्दशगुणनामानि' गुणाभिधानानि 'स्थानानि' गुणस्थानानीति यावदित्यक्षरयोजनाऽधुना भावार्थ उच्यते–तत्र मिथ्या विपर्यस्ता दृष्टिरर्हत्प्रणीतार्थप्रतिपत्तिर्यस्य भक्षितहृत्पूरपुरुषस्य सिते पीतप्रतिपत्तिवत्स मिथ्यादृष्टिः, गुणा ज्ञानदर्शनचारित्ररूपा जीवस्वभावविशेषास्तिष्ठन्ति गुणा अस्मिन्निति स्थानं ज्ञानादिगुणानामेवोपचयापचयकृतः स्वरूपभेदः, गुणानां स्थानं गुणस्थानं मिथ्यादृष्टेर्गुणस्थानं मिथ्यादृष्टिगुणस्थानम्, सास्वादनाद्यपेक्षया ज्ञानादिगुणानामपचयकृतः स्वरूपभेदो मिथ्यादृष्टिगुणस्थानम्। आह यदि मिथ्यादृष्टिरसौ कथं तस्य गुणस्थानं? विपर्यस्तदृष्टित्वाद्, गुणानां च सम्यग्बोधमूलत्वादिति। अत्रोच्यते, यद्यपि समुन्नतघनाभिनवजीमूतपटलेन रविरजनिकरकरनिकरः तिरस्क्रियते, तथापि नैकान्तेन तत्प्रभानाशः सम्पद्यते। प्रतिप्राणिप्रसिद्धदिनरजनिविभागाभावप्रसङ्गादाह च–"सुट्ठुवि[1] मेहस समुदए होइ पहा चन्दसूराणम्" इति। एवमस्यापि प्रबलज्ञानावरणोदयेनाप्यतिसंक्लिष्टनिगोदावस्थायामपि नैकान्तेन चैतन्याभावः क्रियते, अजीवत्वप्रसङ्गात्, अजीवाद्धि जीवस्य चैतन्यकृतो विशेषस्तच्चेत्सर्वथापि गच्छेत् जीवोऽजीवत्वमेव प्राप्नुयात्तस्मादतिसंक्लिष्टस्यापि मिथ्यादृष्टेः काचिच्चैतन्यमात्रा प्रतिपत्तव्या, सा च यद्यपि मिथ्यात्वमोहनीयोदयाद्विपर्यस्ता तथापि चिद्रूपत्वाद्व्यवहारतो गुणत्वेन विवक्षितेत्यदोषः। जिनप्रणीतं चैकमप्यक्षरमश्रद्दधानो

१. सुष्ठ्वपि मेघस्य समुदये भवति प्रभा चन्द्रसूर्ययोरिति

मिथ्यादृष्टिर्भवतीति । उक्तं च–"पयमक्खरं पि एक्कं पि जो न रोएइ सुत्तनिद्दिट्ठं। सेसं रोयन्तो वि हु मिच्छद्दिट्ठी मुणेयव्वो ॥ १ ॥" मिथ्यात्वं च पञ्चधा अनेकप्रकारं वा भवति । तच्चोपरिष्टाद्वक्ष्याम इति ॥१॥ आयं उपशमिकसम्यक्त्वला-भलक्षणं सादयत्यपनय(ती)त्यासादनमनन्तानुबन्धिकषायवेदनम्, नैरुक्तो यशब्दलोपः। सति हि तस्मिन्ननन्तसुखफलदो निःश्रेयसतरुबीजभूत औपशमिकसम्यक्त्वलाभो जघन्यतः समयेनोत्कृष्टतः षड्भिरावलिकाभिः सोदयपगच्छतीति सह आसादनेन वर्त्तत इति सासादनः। सम्यगविपर्यस्ता दृष्टिर्जिनप्रणीतवस्तुप्रतिपत्तिर्यस्य स सम्यग्दृष्टिः सासादनश्चासौ सम्यग्दृष्टिश्चेति सासादनसम्यग्दृष्टिस्तस्य गुणस्थानं सासादनसम्यग्दृष्टिगुणस्थानम् । अथवा सहाशातनयाऽनन्तानुबन्ध्युदयलक्षणया वर्त्तत इति साशातनः, स चासौ सम्यग्दृष्टिश्च तस्य गुणस्थानं, अथवा सह सम्यक्त्वलक्षणतत्त्वरसास्वादनेन वर्त्तते, सम्यक्त्वरसं नाद्यापि सर्वथा त्यजतीतिकृत्वा सास्वादनः स चासौ सम्यग्दृष्टिश्च तस्य गुणस्थानं सास्वादनसम्यग्दृष्टिगुणस्थानमिति । एतच्च यथा भवति तथोच्यते। इह गम्भीरापारसंसारसागरमध्यविपरिवर्त्ति जन्तुः सकलदुःखपादपबीजभूतमिथ्यात्वप्रत्ययमनन्तपुद्गलपरावर्त्तानन्तदुःखलक्षाण्यनुभूय कथमपि तथाभव्यत्वपरिपाकवशाद्गिरिसरिदुपलघोलनाकल्पेनाध्यवसायविशेषरूपेणानाभोगनिर्वर्त्तितयथाप्रवृत्तिकरणेनायुर्वर्ज्यानि ज्ञानावरणादीनि कर्माण्यन्तःसागरोपमकोटाकोटीस्थितिकानि करोति, अत्र चान्तरे कर्मपटलतिरस्कृतवीर्यविशेषाणामसुमतां दुर्भेद्यः कर्कशनिबिडचिररूढगुपिलग्रन्थिवत्कर्मपरिणामजनितोऽतिनिबिडरागद्वेषपरिणामरूपोऽभिन्नपूर्वो ग्रन्थिर्भवति। तदुक्तं–गण्ठि त्ति सुदुब्भेओ कक्खडघणरूढगूढगण्ठि व्व। जीवस्स कम्मजणिओ घणरागद्दोस-

१. पदमक्षरमप्येकमपि यो न रोचयति सूत्रनिर्दिष्टम् । शेषं रोचयन्नपि हु मिथ्यादृष्टिर्ज्ञातव्यः ॥ १ ॥ २. ग्रन्थिरिति सुदुर्भेदः कर्कशघनरूढगुपिलग्रन्थीव । जीवस्य कर्मजनितो घनरागद्वेष–

परिणामो ॥ १ ॥ इमं च ग्रन्थि यावदभव्या अपि यथाप्रवृत्तिकरणेन कर्म क्षपयित्वा अनन्तशः समागच्छन्त्येव, एतदनन्तरं पुनः कश्चिदेव महात्मा समासन्नपरमनिर्वृत्तिसुखसमुल्लसितप्रचुरदुर्निवारवीर्यप्रसरोऽतिनिशितकुठारधारयेव परमविशुद्ध्या यथोक्तस्वरूपग्रन्थेर्भेदं विधाय मिथ्यात्वमोहनीयं कर्मस्थितेरन्तर्मुहूर्त्तमुदयक्षणादुपर्यतिक्रम्यापूर्वकरणानिवृत्तिकरणलक्षणविशुद्धिजनितसामर्थ्योऽन्तर्मुहूर्त्तकालप्रमाणं तत्प्रदेशवेद्यदलिकाभावरूपमन्तरकरणं करोति । अत्र च यथाप्रवृत्तापूर्वानिवृत्तिकरणानामयं क्रमो वेदितव्यो, यथा—"जा गण्ठी ता पढमं, गंठि समइच्छओ भवे बीयं । अनियट्टीकरणं पुण सम्मत्तपुरक्खडे जीवे ॥१॥" गण्ठि समइच्छउ त्ति । ग्रन्थि समतिक्रामतो भिन्दानस्येत्यर्थः । सम्मत्तपुरक्खडे त्ति, सम्यक्त्वं पुरस्कृतं येन स तथा तस्मिन्नासन्नसम्यक्त्व एव जीवेऽनिवृत्तिकरणं भवतीत्यर्थः । शेषं सुगमं एतस्मिंश्चान्तरकरणे कृते तस्य मिथ्यात्वमोहनीयस्य कर्मणः स्थितेर्द्वयं भवत्यन्तरकरणादधस्तनी प्रथमास्थितिरन्तर्मुहूर्त्तमात्रा, तस्मादेवोपरितनी शेषा द्वितीयास्थितिरिति । स्थापना चेयं । तत्र प्रथमस्थितौ मिथ्यात्वदलिकवेदनादसौ मिथ्यादृष्टिरेवान्तर्मुहूर्त्तेन पुनस्तस्यामपगतायामन्तरकरणप्रथमसमय एवौपशमिकं सम्यक्त्वमाप्नोति, मिथ्यात्वदलिकवेदनाभावात् । यथा हि वनदवानलः पूर्वदग्धेन्धनमूषरं वा देशमवाप्य विध्यापयति, तथा मिथ्यात्ववेदनाग्निरन्तरकरणमवाप्य विध्यापयति, तस्यां चान्तर्मौहूर्त्तिक्यामुपशान्ताद्धायां परमनिधिलाभकल्पायां जघन्येन समयशेषायामुत्कृष्टतः षडावलिकाशेषायां कस्यचिन्महाविभीषिकोत्थानकल्पोऽनन्तानुबन्ध्युदयो भवति । तदुदये चासौ सास्वादनसम्यग्दृष्टिगुणस्थाने वर्त्तते उपशमश्रेणिप्रतिपतितो वा कश्चित्सासादनत्वं यातीति । तदुत्तरकाले चावश्य मिथ्यादृष्टिर्भवतीत्यलं विस्तरेणेति ॥ २ ॥

१. परिणामः ॥१॥ २. यावद्ग्रन्थिस्तावत् प्रथमं ग्रन्थि समतिक्रामतो भवेत् द्वितीयम् । अनिवृत्तिकरणं पुनः सम्यक्त्वपुरस्कृते जीवे ॥१॥

तथा सम्यक्त्वमिथ्यात्वदृष्टिर्यस्य स सम्यग्मिथ्यादृष्टिस्तस्य गुणस्थानं सम्यग्मिथ्यादृष्टिगुणस्थानम् । इदमत्र हृदयं-वर्णितविधिना लब्धेनौपशमिकसम्यक्त्वेनौषधविशेषकल्पेन मदनकोद्रववदशुद्धं दर्शनमोहनीयं कर्म जीवः शोधयित्वा त्रिधा करोति । तद्यथा । शुद्धमर्द्धविशुद्धमशुद्धं चेति स्थापना । त्रयाणां चैतेषां पुञ्जानां मध्ये यदार्द्धविशुद्धः पुञ्ज उदेति, तदा तदुदयवशादर्द्धविशुद्धमर्हदुद्दृष्टितत्त्वश्रद्धानं भवति जीवस्य, तेन तदासौ सम्यग्मिथ्यात्वगुणस्थानमन्तर्मुहूर्त्तं स्पृशति, तत ऊर्द्धमवश्यं सम्यक्त्वं मिथ्यात्वं वा गच्छतीति ॥ ३ ॥ तथा विरमति स्म सावद्ययोगेभ्यो निवर्त्तते स्मेति "गत्यर्थाकर्मक" इत्यादिना कर्त्तरि विहिते क्तप्रत्यये विरतो, न तथाऽविरतः, अथवा "नपुंसके भावे क्त" इति क्तप्रत्यये विरमणं विरतम्, सावद्ययोगप्रत्याख्यानमेव, नास्य विरतमस्तीत्यविरतः सचासौ सम्यग्दृष्टिश्चेत्यविरतसम्यग्दृष्टिः । यद्यपि सम्यग्दृष्टित्वेन सावद्ययोगप्रत्याख्यानं जानाति, [अज्ञानिनः सम्यक्त्वायोगात्] तथापि तदसौ नाभ्युपगच्छति, न च पालयति, अप्रत्याख्यानावरणकषायोदयात्, ते ह्यल्पमपि प्रत्याख्यानमावृण्वन्तीति अप्रत्याख्यानावरणा उच्यन्ते, नञोऽल्पार्थत्वात्, इदमुक्तम्भवति—यः पूर्ववर्णितौपशमिकसम्यग्दृष्टिः, शुद्धदर्शनमोहपुञ्जोदयवर्त्ती वा क्षायोपशमिकसम्यग्दृष्टिः, क्षीणदर्शनसप्तको वा क्षायिकसम्यग्दृष्टिः, परममुनिप्रणीतां सावद्ययोगविरतिं सिद्धिसौधाध्यारोहणनिःश्रेणिकल्पां जानन्नप्यप्रत्याख्यानावरणकषायोदयविघ्नितत्वान्नाभ्युपगच्छति, न च तत्पालनाय यतत इत्यसावविरतसम्यग्दृष्टिरुच्यते, तस्य गुणस्थानमविरतसम्यग्दृष्टिगुणस्थानम् । उक्तं च—"[1]बंधं अविरइ हेऊं जाणंतो रागदोसदुक्खं च । विरइसुहं इच्छन्तो विरइं काउं च असमत्थो ॥ १ ॥ एस असंजयसंमो निन्दन्तो पावकम्मकरणं च ।

१ बन्धमविरतिहेतुं जानन् रागद्वेषदुःखं च । विरतिसुखमिच्छन् विरतिं कर्तुं चासमर्थः ॥ १ ॥ एष असंयतसम्यक्त्वी निन्दन् पापकर्मकरणं च ।

अहिगयजीवाजीवो अच्चलियदिट्ठी चलियमोहो ॥१॥" ४ ॥ तथा सर्वसावद्ययोगस्य देशे एकव्रतविषये स्थूलसावद्ययोगादौ संकल्पविषयानुमतिवर्ज्यसर्वसावद्ययोगात्के विरत निवृत्तिर्यस्यासौ देशविरतः । सर्वसावद्ययोगविरतिस्तस्य नास्ति, प्रत्याख्यानावरणकषायोदयात्, सर्वविरतिरूपं हि प्रत्याख्यानमावृण्वन्तीति प्रत्याख्यानावरणा उच्यन्ते इति। देशविरतस्य गुणस्थानं देशविरतगुणस्थानम् । उक्तं च–" संमद्दंसणसहिओ गिण्हंतो विरइमप्पसत्तीए । एगव्वयाइचरिमो अणुमइमेत्तो त्ति देसजई ॥१॥ परिमियमुवसेवन्तो अपरिमियमणन्तयं परिहरंतो । पावइ परंमि लोए अपरिमियमणन्तयं सोक्खं ॥२॥" ५ ॥ संयच्छति स्म–सम्यगुपरमति स्म "गत्यर्थाकर्मक" इत्यादिना कर्त्तरि क्तप्रत्यये संयतः, प्रमाद्यति स्म–संयमयोगेषु सीदति स्मेति पूर्ववत्कर्त्तरि क्तप्रत्यये प्रमत्तः, अथवा प्रमदनं प्रमत्तं प्रमादः, स च मदिराविषयकषायनिद्राविकथानां पञ्चानामन्यतमः, सर्वं वा, प्रमत्तमस्यास्तीति अभ्रादित्वात् मत्वर्थीयाऽप्रत्ययोपादानात्प्रमत्तः प्रमादवानित्यर्थः, स चासौ संयतश्चेति प्रमत्तसंयतः । तस्य सम्बन्धिनां गुणानां स्थानं तदुपचयापचयकृतः स्वरूपविशेषः, तथाहि–देशविरतिगुणापेक्षया एतद्गुणानामुपचयोऽप्रमत्तसंयतगुणापेक्षया त्वपचयः, इत्येवमन्येष्वपि गुणस्थानकेषु पूर्वोत्तरापेक्षया उपचयापचययोजना कर्त्तव्येति ॥ ६ ॥ तथा न प्रमत्तोऽप्रमत्तो नास्ति वा प्रमत्तमस्येत्यप्रमत्तो मदिरादिप्रमादरहितः, अप्रमत्तश्चासौ संयतश्चेत्यप्रमत्तसंयतस्तस्य गुणस्थानमप्रमत्त-

१ अधिगतजीवाजीवोऽचलितदर्शनश्चलितमोह ॥१॥ २ सम्यग्दर्शनसहितः गृह्णन् विरतिमात्मशक्त्या । एकव्रतादिचरिमोऽनुमतिमात्र इति देशयति ॥ १ ॥ परिमितमुपसेवमानः अपरिमितमनन्तकं परिहरन् । प्राप्नोति परे लोकेऽपरिमितमनन्तकं सौख्यम् ॥ २ ॥

अथेदानीमपूर्वकरणगुणस्थानमुच्यते । तत्रापूर्वमभिनवं प्रथममित्यनर्थान्तरं, करणं क्रिया निर्वर्त्तनमिति
संयतगुणस्थानम् ॥ ७॥ स हि स्थितिघातरसघातगुणश्रेणिगुणसंक्रमस्थितिबन्धलक्षणान् पञ्च पदा-
वान्तर्थान्तरं, अपूर्वं करणं यस्य स भवत्यपूर्वकरणः । ज्ञानावरणादिकर्मस्थितेरपवर्तनाकरणेन खण्डनमल्पीकरणं स्थितिघात उच्यते ।
र्थानपूर्वानेव करोति, तथाहि–बृहत्प्रमाणाया खण्डनमल्पीकरणं रसघात उच्यते । एतौ च द्वावपि पूर्वगुण-
रसस्यापि वक्ष्यमाणस्वरूपस्य प्रचुरस्य सतोऽपवर्तनाकरणेनैव बृहत्प्रमाणतयाऽपूर्वाविमौ करोतीति । तथा उपरितनस्थितेर्वि-
स्थानेषु विशुद्धेरल्पत्वादल्पावेव कृतवानत्र पुनर्विशुद्धेः प्रकृष्टत्वाद् प्रतिक्षणमसंख्येयगुणवृद्ध्या वि-
शुद्धिवशादपवर्त्तनाकरणेनावतारितस्य दलिकस्यान्तर्मुहूर्त्तप्रमाणमुदयक्षणादुपरि क्षिप्रतरक्षपणाय प्रथीयसीं दलिक-
रचनं गुणश्रेणिरित्युच्यते। स्थापना। एतां च पूर्वगुणस्थानेष्वविशुद्धत्वात्कालतो दीर्घां दलिकविरचनामाश्रित्याप्रथीयसीं दलिक-
स्याल्पस्यापवर्तनाद्विरचितवान्, इह तु तामेव विशुद्धत्वादपूर्वां, कालतो ह्रस्वतरां, दलिकविरचनामाश्रित्य पुनः पृथुतरां बहुतर-
दलिकस्यापवर्तनाद्विरचयतीति। तथाऽवध्यमान(ना)शुभप्रकृतिदलिकस्य प्रतिक्षणमसंख्येयगुणवृद्ध्या(वध्यमानासु) विशुद्धिवशा-
न्नयनं गुणसंक्रमस्तमप्यसौ बहुतरदलिकस्य संक्रमणादिहापूर्वं करोति। तथा स्थितिं च कर्मणामशुद्धत्वात् प्राग् दीर्घां बद्धवानिह
तु तामपूर्वां विशुद्धत्वादेव ह्रस्वां बध्नातीत्येवं पञ्चानां पदार्थानामपूर्वकरणमिह भावनीयं, उपलक्षणं चैतदुदयोद्वर्तनादीनां, तेषा-
मपि ह्यत्र सर्वेषामपूर्वत्वादिति ।, अयं चापूर्वकरणो द्विधा भवति। क्षपक उपशमको वा, क्षपणोपशमनार्हत्वाद्राज्यार्हकुमारराजवत्,
न पुनरसौ क्षपयत्युपशमयति वा, तस्य गुणस्थानमपूर्वकरणगुणस्थानं, एतच्च गुणस्थानं प्रपन्नान् कालत्रयवर्त्तिनो नानाजीवानपेक्ष्य
सामान्यतोऽसङ्ख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि भवन्ति। कथं पुनस्तानि भवन्तीति विनेयजनानुग्रहार्थं

विशेषतोऽपि प्ररूप्यन्ते, इह तावदिदं गुणस्थानकमन्तर्मुहूर्तैकालप्रमाणं भवति। तत्र च प्रथमसमयेऽपि ये प्रपन्नाः प्रपद्यन्ते प्रपत्स्यन्ते च तदपेक्षया जघन्यादीन्युत्कृष्टान्तान्यसङ्ख्येयानि लोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि लभ्यन्ते, प्रतिपत्तॄणां बहुत्वात्, अध्यवसायानां (च) विचित्रत्वादिति भावनीयम्। ननु यदि कालत्रयापेक्षा क्रियते तदैतद्गुणस्थानकं प्रतिपन्नानामनन्तान्यध्यवसायस्थानानि कस्मान्न भवन्ति? अनन्तजीवैरस्य प्रतिपन्नत्वादनन्तैश्च प्रतिपत्स्यमानत्वादिति, सत्यं, स्यादेवं यदि तत्प्रतिपत्तॄणां सर्वेषां पृथग्पृथग्भिन्नान्येवाध्यवसायस्थानानि स्युस्तच्च नास्ति, बहूनामेकाध्यवसायस्थानवर्त्तित्वादपीति, यथा किल कश्चिच्छतं चारित्रिणां दशस्वध्यवसायस्थानेषु वर्त्तते, दशानां २ एकाध्यवसायस्थानवर्त्तित्वादेवमिहाप्यनन्तानामपि तत्प्रतिपत्तॄणामसङ्ख्येयाध्यवसायस्थानवर्त्तित्वं भावनीयमिति। द्वितीयसमये तदन्यान्यधिकतराण्यध्यवसायस्थानानि लभ्यन्ते। तृतीयसमये तदन्यान्यधिकतराणि, चतुर्थसमये तदन्यान्यधिकतराणीत्येवं तावज्ज्ञेयं यावच्चरमसमयः। एतानि स्थाप्यमानानि विषमचतुरस्रक्षेत्रमभिव्याप्नुवन्ति। तद्यथा १५ ................ ४०
२५ ............... १० ननु द्वितीयादिसमयेष्वध्यवसायस्थानानां वृद्धौ किं कारणम्? उच्यते, प्रतिसमयं विशुद्ध्यन्तः खलिह १५ .......... २०
५ .......... १० प्रतिपत्तारः स्वभावत एव बहवो विभिन्नेष्वध्यवसायस्थानेषु वर्त्तन्त इत्यलं विस्तरेण। प्रकृतं प्रस्तुमः। अत्र च प्रथमसमयजघन्याध्यवसायस्थानात्प्रथमसमयोत्कृष्टमध्यवसायस्थानमनन्तगुणविशुद्धं, प्रथमसमयोत्कृष्टाद्द्वितीयसमयजघन्यमनन्तगुणविशुद्धं, द्वितीयसमयजघन्यात्तदुत्कृष्टमनन्तगुणविशुद्धं, तस्माच्च तृतीयसमयजघन्यमनन्तगुणविशुद्धं, ततोऽपि तदुत्कृष्टमनन्तगुणविशुद्धमित्येवं तावज्ज्ञेयं यावद्द्विचरमसमयोत्कृष्टाच्चरमसमयजघन्यमनन्तगुणविशुद्धम्, ततोऽपि तदुत्कृष्टमनन्तगुणविशुद्धमिति। एकसमयगतानि तु परस्परं षट्स्थानपतितानि। ननु यथास्या-

पूर्वकरण इति संज्ञा तथा निवृत्तिरित्यपि संज्ञान्तरं दृश्यते "नियट्टिअनियट्टिवायरसुहुमु" इत्यादिवचनात्तत्कथम् ? अत्रोच्यते, युगपदेतद्गुणस्थानं प्रविष्टानां परस्परमध्यवसायस्थानस्य भेदलक्षणा निवृत्तिरप्यस्ति न पुनर्वक्ष्यमाणाऽनिवृत्तिवादरवदेक-समयप्रविष्टानामध्यवसायस्यैकत्वमेव ततश्च निवृत्तियोगान्निवृत्तिरप्युच्यतेऽसावित्यदोषः ॥ ८ ॥

इदानीमनिवृत्तिवादरसम्परायगुणस्थानमुच्यते । युगपदेतद्गुणस्थानं प्रतिपन्नानां बहूनां जीवानां परस्परसम्बन्धिनोऽध्यवसायस्थानस्य व्यावृत्तिरिह निवृत्तिराभप्रेता, नास्ति तथाविधा निवृत्तिरस्येत्यनिवृत्तिः । समकालमेवारूढस्यापरस्य यदध्यवसायस्थानं विवक्षितोऽपि कश्चित्तद्वर्त्येवेत्यर्थः। सम्परैति—पर्यटति संसारमनेनेति सम्परायः कषायोदय इह विवक्षितः, वादरः—स्थूरः सम्परायो यस्यासौ वादरसम्परायोऽनिवृत्तिश्चासौ वादरसम्परायश्च तस्य गुणस्थानं अनिवृत्तिवादरसम्पराय-गुणस्थानम् । इदमप्यन्तर्मुहूर्त्तप्रमाणमेव भवति । तत्र चान्तर्मुहूर्त्ते यावन्तः समयास्तत्प्रविष्टानां तावन्त्येवाध्यवसायस्थानानि भवन्त्येकसमयप्रविष्टानामेकस्यैवाध्यवसायस्यानुवर्त्तनादिति । स्थापना ः। स चानिवृत्तिवादरो द्विधा क्षपक उपशमकश्च। तत्र क्षपको मोहस्य विंशतिप्रकृतीः स्त्यानर्द्धित्रिकं त्रयोदश नामप्रकृतीश्च ः क्षपयति । उक्तं च "नासेइ तओ खवगो लोभं मोत्तूण मोहवीसमवि। तह थीणगिद्धितिगमवि तेरस नामंपि एत्थेव ॥१॥" कथमिति चेत् ? उच्यते, प्रथमं तावत्प्रत्याख्या-नामप्रत्यानवरणाख्यानष्टौ कषायान् क्षपयितुमारभते । तेषु चार्द्धक्षपितेष्वेवातिविशुद्धिवशादन्तराल एव स्त्यानर्द्धित्रिकं

१. निवृत्त्यनिवृत्तिवादरसूक्ष्मः॥ २. नाशयति ततः क्षपको लोभं मुक्त्वा मोहनीयस्य विंशतिरपि। तथा स्त्यानगृद्धित्रिक-मपि त्रयोदश नाम्नोऽप्यत्रैव ॥ १ ॥

नाम्नस्त्रयोदश प्रकृतीरुच्छादयति, तद्यथा—नरकद्विकं तिर्यग्द्विकमेकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातयश्चैतस्त्र आतपमुद्योतं स्थावरं साधारणं सूक्ष्ममिति । एतासु च षोडश प्रकृतिषु क्षपितासु पुनः कषायाष्टकस्य क्षपितशेषं क्षपयति । ततो नपुंसकवेदं, ततोऽपि स्त्रीवेदं, तदनन्तरमपि च हास्यादिषट्कम्, ततोऽपि पुरुषवेदं क्षपयति । तत ऊर्ध्वं सञ्ज्वलनक्रोधं, ततो मानं, ततो मायां निर्दलयति, ततो लोभं क्षपयितुमारभते । एतांश्च चतुरः कषायान्वेदयंस्तदनुभागस्य विशुद्धिप्रकर्षवशादनन्ताः किट्टीः करोति । ननु किट्टीति कः शब्दार्थः? उच्यते, इह तावदनन्तैः परमाणुभिर्निष्पन्नान् स्कन्धान् जीवः कर्मतया गृह्णाति, तत्र चैकैकस्कन्धे यः सर्वजघन्यरसः परमाणुः सोऽपि केवलिप्रज्ञया छिद्यमानः किल सर्वजीवेभ्योऽनन्तगुणान् भागान् प्रयच्छत्यपरस्तु तानप्येकाधिकानन्यस्तु तानपि द्व्याधिकानपरस्तु तानपि त्र्यधिकानित्याद्येकोत्तरवृद्ध्या तावन्नेयं, यावदन्त्य उत्कृष्टरसः परमाणुर्मौलराशेरनन्तगुणानपि रसभागान् प्रयच्छति । अत्र च जघन्यरसा ये केचन परमाणवस्तेषु सर्वजीवानन्तगुणरसभागयुक्तेष्वप्यसत्कल्पनया शत रसांशानां परिकल्प्यते, एतेषां च समुदायः समानजातियत्वादेका वर्गणेत्यभिधीयते । अन्येषां त्वेकोत्तरशतरसांशयुक्तानामणूनां समुदायो द्वितीयावर्गणा, अपरेषां तु द्व्युत्तरशतरसांशयुक्तानामणूनां समुदायस्तृतीया वर्गणा । अपरेषां तु त्र्युत्तरशतरसभागयुक्तानामणूनां समुदायश्चतुर्थी वर्गणा एवमनया दिशा एकैकरसभागवृद्धानामणूनां समुदायरूपा वर्गणाः सिद्धानामनन्तभागेऽभव्येभ्योऽनन्तगुणा वाच्याः । एतावतीनां च वर्गणानां समुदायः स्पर्द्धकमित्युच्यते । स्पर्द्धकं इत्यादोत्तरोत्तररसवृद्ध्या परमाणुवर्गणा इतिकृत्वा, एताश्चानन्तरोक्तानन्तकप्रमाणा अप्यसत्कल्पनया षट् स्थाप्यन्ते, इदमेकं स्पर्द्धकं । इत ऊर्ध्वमेकोत्तरया निरन्तरया वृद्ध्या वृद्धो रसो न लभ्यते किं तर्हि सर्वजीवानन्तगु-

र्भैरेव रसभागैर्वृद्धो लभ्यत इति । तेनैव क्रमेण द्वितीयं स्पर्द्धकमारभ्यते । ततस्तथैव तृतीयमित्यादि, यावदनन्तानि रसस्पर्द्धकानि उत्तिष्ठन्ति । तदेवमेतानि रसस्पर्द्धकानि प्रस्तुतगुणस्थाने समायातः क्रोधादिक्षपणकाले विशुद्धिवशतो हत्वा अनन्तगुणहीनरसान्यपूर्वाणि करोति । एतान्यपि विशुद्धिप्रकर्षतो हत्वात्यन्ताल्परसानि कृत्वा एकोत्तरवृद्धिक्रमं त्याजयति त्रुटितानन्तरसभागान्तरालमेनद्रसं करोतीत्यर्थः । इदमुक्तं भवत्यनन्तरोक्तापूर्वस्पर्द्धकसम्बन्धिषु जघन्यरसेषु परमाणुषु यद्यसत्कल्पनया पञ्चाशद्रसविभागा लभ्यन्ते, तदा किट्टीकरणकाले तेष्वेवासत्कल्पनया पञ्चैव रसभागा लभ्यन्ते । तदनन्तरमेकेन द्व्यादिभिर्वा रसभागैरधिका अणवो न लभ्यन्ते, किन्त्वनन्तैरेव रसभागैरधिकाः प्राप्यन्ते । ते च भागाः किलाऽसत्कल्पनया पञ्चविंशतिः । तदनन्तरं पुनरप्यनन्तैरेवानुभागभागैरधिका अणवो लभ्यन्ते, नैकोत्तरवृद्ध्या, तेऽपि भागाः किल सार्द्धशतद्वयं । अत्र स्थापना
२५० १५ ५ इदं च निदर्शनमात्रं, सद्भावतः पुनरित्थमनन्तरसभागान्तराला अनन्ताः किट्टयो वाच्यास्तदेवमुदकमध्यप्रक्षिप्ततैलवद्विप्रुदितस्यैकोत्तरवृद्धिक्रमं त्याजितस्य परिहृतस्पर्द्धकक्रमस्य विशुद्धिप्रकर्षतः खण्डित्वा अल्पीकृतस्य रसस्य सद्भावतोऽनन्तभागात्मका अपि कल्पनया दर्शितपञ्चादिस्वरूपा अवस्थाविशेषाः किट्टयोऽभिधीयन्ते । एताश्च क्रोधादिषु चतुर्ष्वपि प्रत्येकमनन्ता भवन्त्योऽपि कर्मप्रकृतिप्राभृतादिनिगदितविवक्षया तिस्रस्तिस्रो विवक्ष्यन्त इति । सर्वा अपि द्वादश, एताश्च प्रथमं बादराः स्थूलरसाः करोति । ततः प्रतिसमयं विशुद्ध्यमानस्ता एव सूक्ष्माः सूक्ष्मतराः प्रायो निवृत्तरसाः करोति । एवं च कृते क्रोधमानमायासम्बन्धिनीरिहैवासौ क्षपयति । लोभसम्बन्धिनिस्तु किट्टीर्बादरा अयमेव, सूक्ष्मास्तु सूक्ष्मसम्परायः क्षपयति । तदेवं यः क्षपकोऽनिवृत्तिबादरः स उक्तक्रमेण द्वितीयकषायाद्या मायावसाना विंशतिं मोहप्रकृतीः क्षपयति ।

उपशमकः पुनरेता एव वक्ष्यमाणक्रमेणोपशमयति । उद्वर्त्तनादिकरणायोग्याः करोतीत्यर्थः । अपरं चासौ क्षपकादिशुद्ध्या अनन्तगुणहीनो भवत्यतः क्रोधमानमायोपशमनकाले तदनुभागस्य किट्टीर्न करोति । लोभस्य तु पूर्वोक्तवत्तिस्रः किट्टीः करोति । तदुपशमकाले तथाविधविशुद्धेः सद्भावादिति लेशतो व्याख्यातमिदं गुणस्थानं, विस्तरार्थिना तु कर्मप्रकृतिरनुसरणीयेति ॥ ९ ॥ इतः सूक्ष्मसम्परायगुणस्थानकमुच्यते । सूक्ष्मः सम्परायः किट्टीकृतलोभकषायोदयरूपो यस्यासौ सूक्ष्मसम्परायः, सोऽपि द्विविधः क्षपक उपशमको वा, तत्र क्षपकोऽनिवृत्तिबादरेण याः कृता श्लक्ष्णकिट्टयस्ता निर्मूलत एव क्षपयति । तदुक्तम्–
"[1]बायररागेण कया सुहुमो वेयइ सुहुमकिट्टीओ । तम्हा सुहुमसरागो सुहुमो सुद्धप्पओगप्पा ॥ १ ॥" उपशमकस्तु ता एवोपशमयति । सर्वकरणायोग्याः करोति, तदुक्तं–" उवसन्तं जं कम्मं, न तओकड्ढइ न देइ उदए त्ति । न य गमयइ परपगइं, न चेव उक्कडए तं तु ॥ २ ॥ अस्या अपि विनेयानुग्रहार्थं व्याख्या–सर्वोपशमेन यदुपशान्तं मोहनीयं कर्म, अन्यस्य सर्वोपशमायोगात् । "[2]सव्वोवसमो मोहस्सेवे"ति वचनादिति । न तदपकर्षति–न तदपवर्त्तनाकरणेन स्थितिरसाभ्यां हीनं करोतीत्यर्थः । अपिशब्दस्य भिन्नक्रमत्वान्नाप्युदये न ददाति–नापि तद्वेदयतीत्यर्थः, उपलक्षणत्वात्तदविनाभाविन्यामुदीरणायामपि न ददातीत्यपि मन्तव्यमिति । न च बध्यमानसजातीयरूपां परप्रकृतिं सङ्क्रमकरणेन गमयति–सङ्क्रमयति । न च तत्कर्मोपशान्तं समुत्कर्षयति–उद्वर्त्तनाकरणेन स्थितिरसाभ्यां वृद्धिं नयति । निधत्तिनिकाचनयोस्तु प्रागपूर्वकरणकाल एव निवृत्तत्वादिहोपशान्तत्वेन तन्निषेधः क्रियत इति । दर्शनत्रिकं मुक्त्वा उपशान्तस्य मोहनीयकर्मणः स्वरूपमन्यत्रापि भावनीयम् ।

---

१. बादररागेण कृता सूक्ष्मो वेदयति सूक्ष्मकिट्टीः । तस्मात् सूक्ष्मसरागः सूक्ष्मः शुद्धप्रयोगात्मा ॥१॥ २. सर्वोपशमो मोहस्यैवेति.

दर्शनत्रिकस्य तु सङ्क्रमकरणमेकं प्रवर्त्तत एवेति, तस्योपशमकक्षपकसूक्ष्मसम्परायस्य गुणस्थानं सूक्ष्मसम्परायगुणस्थानम्॥१०॥

इदानीमुपशान्तकषायवीतरागच्छद्मस्थगुणस्थानमुच्यते। तत्र च्छाद्यते केवलं ज्ञानं दर्शनं चात्मनोऽनेनेति च्छद्म, ज्ञानावरणदर्शनावरणमोहनीयान्तरायकर्मोदयः। इह यद्यपि केवलज्ञानदर्शनयोराच्छादकत्वेनान्तरायं कर्म्म न प्रसिद्धम्, तथाऽप्यन्वयव्यतिरेकमानापेक्षया तथोच्यते, सति तस्मिन् केवलस्यानुत्पादात्तदपगमानन्तरं चोत्पादादिति, च्छद्मनि तिष्ठतीति च्छद्मस्थः, स च सरागोऽपि भवतीति अतस्तद्व्यवच्छेदार्थं वीतरागग्रहणम्। वीतो रागो मायालोभकषायोदयरूपो यस्य स वीतरागः, स चासौ च्छद्मस्थश्चेति वीतरागच्छद्मस्थः, स च क्षीणकषायोऽपि भवति, तस्यापि यथोक्तरागापगमात्ततस्तद्व्यवच्छेदार्थमुपशान्तकषायग्रहणम्। कषसिषजष इत्यादिदण्डकधातुर्हिंसार्थः कषन्ति कष्यन्ते च परस्परमस्मिन् प्राणिनः इति कषः संसारः, "पुंसि संज्ञायां घः प्रायेणेति", प्रायोग्रहणात् घप्रत्ययः, अन्यथाहि हलन्तत्वात् "हलश्चे" ति घञ् स्यादिति। कषमयन्ते गच्छन्त्येभिः प्राणिन इति कषायाः क्रोधादयः, उपशान्ता उपशमिता विद्यमाना एव सङ्क्रमणोद्वर्त्तनादिकरणायोग्यत्वेन व्यवस्थापिताः कषाया येन स उपशान्तकषायः, स चासौ वीतरागच्छद्मस्थश्चेत्युपशान्तकषायवीतरागच्छद्मस्थस्तस्य गुणस्थानमिति प्राग्वदिति। तत्राविरतसम्यग्दृष्टिप्रभृतेर्दर्शनसप्तकमुपशान्तं सम्भवति। उपशमश्रेण्यारम्भे ह्यनन्तानुबन्धिकषायानविरतो देशविरतः प्रमत्तोऽप्रमत्तो वा सन्नुपशमय्य, मिथ्यादर्शनमोहत्रितयमुपशमयति, तदुपशमानन्तरं च प्रमत्ताऽप्रमत्तपरिवृत्तिशतानि कृत्वा, ततोऽपूर्वकरणगुणस्थानमनुभूय, तदनन्तरमनिवृत्तिबादरसम्परायगुणस्थाने चारित्रमोहस्य प्रथमं नपुंसकवेदमुपशमयति। ततः स्त्रीवेदं, ततो हास्यरत्यरतिशोकभयजुगुप्सारूपं युगपत् षट्कम्, ततः पुरुषवेदम्, ततो युगपद-

प्रत्याख्यानावरणप्रत्याख्यानावरणौ क्रोधौ, ततः संज्वलनक्रोधं, ततो युगपद्द्वितीयतृतीयौ मानौ, ततः संज्वलनमानं, ततो युगपद्द्वितीयतृतीये माये, ततः संज्वलनमायां, ततोयुगपद्द्वितीयतृतीयौ लोभौ, ततः सूक्ष्मसम्परायगुणस्थाने संज्वलनलोभमुपशमयतीति । तदेवमन्येष्वपि गुणस्थानेषु क्वापि कियतामपि कपायाणामुपशान्तत्वसम्भवादुपशान्तकपायव्यपदेशः सम्भवतोऽतस्तद्व्यवच्छेदार्थमुपशान्तकपायग्रहणे सत्यपि वीतरागग्रहणं कर्त्तव्यमुपशान्तकपायवीतराग इति चैतावतैवेष्टसिद्धौ च्छद्मस्थग्रहणं स्वरूपकथनार्थं, व्यवच्छेद्याभावान्नह्यच्छद्मस्थ उपशान्तकपायवीतरागः सम्भवति, यस्य च्छद्मस्थग्रहणेन व्यवच्छेदः स्यादित्यलं प्रसङ्गेनेति ॥ ११ ॥ इदानीं क्षीणकपायवीतरागच्छद्मस्थगुणस्थानमुच्यते ॥ तत्र क्षीणा अभावमापन्नाः कपाया यस्य स क्षीणकपायस्तत्रानन्तानुबन्धिकपायान् प्रथमविरतसम्यग्दृष्ट्याद्यप्रमत्तान्तगुणस्थानेषु क्षपयति, ततः शेपान् संज्वलनलोभवर्जानिवृत्तिबादरसम्परायगुणस्थाने क्रमेण क्षपयति। संज्वलनलोभं सूक्ष्मसम्परायगुणस्थान इति तदेवमन्येष्वपि सरागेषु क्षीणकपायव्यपदेशः सम्भवति, क्वापि कियतामपि कपायाणां क्षीणत्वसम्भवादतस्तद्व्यवच्छेदार्थं वीतरागग्रहणं, क्षीणकपायवीतरागत्वं च केवलिनोऽप्यस्तीति तद्व्यवच्छेदार्थं छद्मस्थग्रहणं, छद्मस्थग्रहणे च कृते सरागव्यवच्छेदार्थं वीतरागग्रहणम्। वीतरागश्चासौ च्छद्मस्थश्चेति वीतरागच्छद्मस्थः। स चोपशान्तकपायोऽप्यस्तीति तद्व्यवच्छेदार्थं क्षीणकपायग्रहणं क्षीणकपायश्चासौ वीतरागच्छद्मस्थश्च क्षीणकपायवीतरागच्छद्मस्थस्तस्य गुणस्थानमिति प्राग्वदिति। अत्र चोपशान्तक्षीणमोहयोरयं विशेषः। "जलमिव पसन्तकलुसं पसन्तमोहो भवे उ उवसन्तो। गयकलुसं जह तोयं गयमोहो खीणमोहोऽवि॥१॥" इत्यादि ॥१२॥ अधुना सयोगिकेवलिगुणस्थानम्। तत्र योगो वीर्यं शक्तिरुत्साहः पराक्रम इत्यनर्थान्तरं स च मनोवाक्कायलक्षणकरणत्रय-

१. जलमिव प्रशान्तकलुषं प्रशान्तमोहो भवेत्तूपशान्तः । गतकलुषं यथा तोयम्, गतमोहः क्षीणमोहोऽपि ॥ १ ॥

भेदात्तिस्रः संज्ञा लभ्यते । मनोयोगो वाग्योगः काययोगश्चेति । अमीषां भावार्थः पूर्ववद्वाच्यः, स चायं त्रिविधोऽपि योगो भगवतः प्रस्तुतकेवलिनः सम्भवति । तत्र मनोयोगस्तावन्मनःपर्यायज्ञान्यादिभिरनुत्तरसुरादिभिर्वा जीवादितत्त्वं किञ्चिन्मनसा पृष्टस्य मनसैव देशनायां सम्भवति । वाग्योगस्तु सामान्येन धर्मदेशनादौ, काययोगस्तु चङ्क्रमणोन्मेषनिमेषादौ । तदनेन त्रिविधेन योगेन सह वर्त्तते इति सयोगः सयोगीति वा, "सर्वधनादे" राकृतिगणत्वेन मत्वर्थीयेन्विधानादिति । केवलं वक्ष्यमाणस्वरूपमस्यास्तीति केवली, सयोगश्चासौ केवली च, सयोगी वा चासौ केवली च, तस्य गुणस्थानमिति भाव्यदिति ॥१३॥

अथायोगिकेवलीगुणस्थानं प्रस्तूयते । तत्र नास्ति पूर्वोक्तो योगोऽस्येत्ययोगोऽयोगीति वा पूर्ववदिति । कथमयोगित्वमुपगच्छत्यसाविति चेत्? उच्यते, त्रिविधोऽपि हि पूर्वोक्तो योगः प्रत्येकं द्विधा भवति। सूक्ष्मो बादरश्च, केवली च केवलज्ञानोत्पत्त्यनन्तरं जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतस्तु देशोनां पूर्वकोटिं विहृत्यान्तर्मुहूर्त्तावशेषायुष्कः शैलेशीं प्रतिपित्सुः, प्रथमं तावद्बादरकाययोगेन बादरवाङ्मनोयोगौ निरुणद्धि । ततः सूक्ष्मकाययोगावष्टम्भेन बादरकाययोगं निरुणद्धि। सति तस्मिन् सूक्ष्मयोगस्य निरोद्धुमशक्यत्वात्, ततश्च सर्वबादरयोगनिरोधानन्तरं सूक्ष्मकाययोगावष्टम्भेन सूक्ष्मवाङ्मनोयोगौ निरुणद्धि, सूक्ष्मकाययोगं तु सूक्ष्मक्रियमनिवृत्तिशुक्लध्यानं ध्यायन् स्वावष्टम्भेनैव निरुणद्धि । अन्यस्यावष्टम्भनीययोगान्तरस्य तदासत्त्वादिति तन्निरोधानन्तरं समुच्छिन्नक्रियमप्रतिपातिशुक्लध्यानं ध्यायन् ह्रस्वपञ्चाक्षरोद्गिरणमात्रं कालं शैलेशीकरणं प्रविष्टो भवति, शीलस्य योगलेश्याकलङ्कविमुक्तयथाख्यातचारित्रलक्षणस्य य ईशः स शीलेशस्तस्येयं शैलेशी । त्रिभागोनस्वदेहावगाहनायामुदरादिरन्ध्रपूरणवशात् सङ्कोचितस्वप्रदेशस्य शीलेशस्यात्मनोऽत्यन्तस्थिरावस्थितिरित्यर्थः । तस्यां करणे पूर्वरचितशैलेशीसमय-

समानगुणश्रेणीकस्य वेदनीयनामगोत्राख्यस्याघातिकर्मत्रितयस्यासङ्ख्येयगुणया श्रेण्या आयुःशेषस्य तु यथास्वरूपस्थितया श्रेण्या निर्झरण शैलेशीकरणं, तच्चासौ प्रविष्टोऽयोगोऽयोगी वा भवति, स चासौ केवली च। अयं च भवस्थः शैलेशीकरणचरमसमयानन्तरं तु च्छिन्नचतुर्विधकर्मबन्धनत्वाच्छिन्नफलबन्धनैरण्डबीजवद्गतिप्रवृत्तेः, सर्वथा विहाय शरीरत्रयसम्बन्धं, दत्वा भवजलधेर्जलाञ्जलिमूर्ध्वमृजुश्रेण्या समयेन गच्छत्या लोकान्तान्न परतोऽपि, परतस्तस्य जलकल्पगत्युपष्टम्भकधर्मास्तिकायाभावाच्च चासौ सिद्धोऽयोगिकेवली सादिसपर्यवसानं कालं सकलसंसारद्वन्द्वविनिर्मुक्तः सकलरागादिकलङ्कविनिर्मुक्तत्वेन स्वाभाविकं परमानन्दस्वरूपं सुखमनुभवन्नास्ते, तस्य गुणस्थानमिति भावदिति ॥१४॥ व्याख्यातानि सभावार्थानि चतुर्दशापि गुणस्थानानीति गाथार्थः ॥ ९॥ तदेवं स्वरूपतो भेदतश्चोक्तानि गुणस्थानानि, सामान्येनोक्तमपि वस्तु विशेषविचारणामन्तरेण न सम्यग्निश्चेतुं शक्यतेऽतस्तान्येव विशेषनिश्चयार्थं गत्यादिषु मार्गणास्थानेषु मृग्यन्ते—

भा० जीवाइपयत्थेसुं जिणोवइट्ठेसु जा असद्दहणा। सद्दहणा चिय मिच्छा विवरीयपरूवणा जा य ॥८२॥ संसयकरणं जे चिय जो तेसु अणायरो पयत्थेसु। तं पञ्चविहं मिच्छं तद्दिट्ठी मिच्छदिट्ठी य ॥ ८३ ॥ उवसमअद्धाए ठिउ मिच्छमपत्तो तमेव गन्तु मणो। सम्मं आसायन्तो सासायणमो मुणेयवो ॥८४॥ जह गुडदहीणि विसमाणि भावरहियाणि होन्ति मिस्साणि। भुंजंतस्स तहोभय तद्दिट्ठी मीसदिट्ठी य ॥ ८५ ॥ तिविहे वि हु सम्मत्ते थेवावि न विरइ जस्स कम्मवसा। सो अविरउ त्ति भन्नइ देसो पुण देसविरईए ॥ ८६ ॥ विगहाकसायनिद्दासद्दाइरओ भवे पमत्तो त्ति। पञ्चसमिओ तिगुत्तो अपमत्तजई मुणेयवो ॥ ८७ ॥ एवमपुवमपुवं जहुत्तरं जो करेइ ठीखण्डं। रसखण्डं तग्घायं सो होइ अपुवकरणो त्ति ॥ ८८ ॥ विणिव-

याणि श्रोत्रादीनि पञ्च, तानि चेन्द्रियवन्तं जीवमन्तरेण स्वतन्त्राणि न भवन्त्यतो जीवाश्रयेणैव मार्गणा क्रियते, तत्रैकेन्द्रियादिषु पञ्चेन्द्रियान्तस्थानेषु जन्तुषु पर्याप्तेष्वपर्याप्तेषु च सर्वत्र मिथ्यादृष्टिर्लभ्यते । तेजोवायुवर्जप्रत्येकबादरैकेन्द्रियद्वित्रिचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियेषु लब्ध्या पर्याप्तेषु करणेन त्वपर्याप्तेषु, संज्ञिपञ्चेन्द्रियेषु पुनर्लब्ध्या पर्याप्तेष्वेव करणेन तु पर्याप्तेष्वपर्याप्तेषु च सास्वादनसम्यग्दृष्टिर्लभ्यते । शेषाणि तु सम्यग्मिथ्यादृष्ट्यादीनि द्वादशापि गुणस्थानानि संज्ञिपञ्चेन्द्रिये करणेन पर्याप्तक एव लभ्यन्ते । केवलमविरतसम्यग्दृष्टिः करणेनापर्याप्तकेऽपि तस्मिंल्लभ्यते ॥ कायः पृथिवीकायादिस्त्रसकायान्तः षोढा, तत्र मिथ्यादृष्टिः सर्वत्र लभ्यते । बादरपृथिव्यप्प्रत्येकवनस्पतिकायेषु लब्ध्या पर्याप्तकेषु करणेन त्वपर्याप्तकेषु, त्रसेषु पुनर्लब्ध्यापर्याप्तेष्वेव करणेन तु पर्याप्तेष्वपर्याप्तेषु च सास्वादनसम्यग्दृष्टिः प्राप्यते । शेषाणि तु सम्यग्मिथ्यादृष्ट्यादीनि द्वादशापि गुणस्थानानि त्रसेषु करणपर्याप्तकेष्वेव लभ्यन्ते, नवरमसंयतसम्यग्दृष्टिः करणेनापर्याप्तेष्वप्येषु लभ्यते ॥ योगः सामान्येन मनोवाक्कायभेदात्त्रिधा । तत्र च त्रिविधेऽपि योगेऽयोगिवर्ज्यानि सर्वाण्यपि गुणस्थानानि लभ्यन्ते ॥ वेदः स्त्रीपुन्नपुंसकभेदात्त्रिधा, तत्र त्रिविधेऽपि वेदेऽपूर्वकरणान्तान्यष्टौ गुणस्थानानि प्राप्यन्ते । अनिवृत्तिबादरोऽपि यावदद्यापि वेदान्न क्षपयत्युपशमयति वा तावत् स्वगुणस्थानं सङ्ख्येयभागान्यावल्लभ्यते । तत ऊर्ध्वं सर्वेऽप्यवेदकाः ॥ कषायाश्चत्वारः क्रोधादयः । तत्र क्रोधमानमायालक्षणेषु त्रिषु कषायेष्वपूर्वकरणान्तान्यष्टौ गुणस्थानानि लभ्यन्ते अनिवृत्तिबादरोऽपि यावदमून क्षपयत्युपशमयति वा तावत् स्वगुणस्थानकं सङ्ख्येयभागान्यावल्लभ्यते, लोभकषाये तु सूक्ष्मसम्परायान्तानि दश गुणस्थानानि लभ्यन्ते । उपरिष्टात्सर्वेऽकषायाः ॥ ज्ञानानि मतिज्ञानादीनि पञ्च, तत्र मतिश्रुतावधिष्वविरतादीनि क्षीणमोहान्तानि नव गुणस्थानानि

प्राप्यन्ते । मनःपर्यायज्ञाने तु प्रमत्तादीनि क्षीणमोहान्तानि सप्त लभ्यन्ते । केवलज्ञाने तु सयोग्ययोगिगुणस्थानद्वयम् । मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानेषु मिथ्यादृष्टिसासादनमिश्रलक्षणं गुणस्थानत्रयं लभ्यते ॥ संयमः सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्परायययथाख्यातसंयमभेदात्पञ्चधा, तत्राद्यसंयमद्वये प्रमत्तादीन्यनिवृत्तिबादरान्तानि चत्वारि गुणस्थानानि लभ्यन्ते । परिहारविशुद्धिकसंयमे तु प्रमत्ताप्रमत्तसंयतगुणस्थानद्वयमेव लभ्यते । सूक्ष्मसम्परायसंयमे तु सूक्ष्मसम्परायगुणस्थानमेकमेव । यथाख्यातसंयमे तूपशान्तमोहादीन्ययोग्यन्तानि चत्वारि गुणस्थानानि लभ्यन्ते । अत्र तु संयमग्रहणेन तत्प्रतिपक्षभूतोऽसंयमः संयमासंयमश्च सूचितः । तत्रासंयमे मिथ्यादृष्ट्यादीन्यविरतान्तानि चत्वारि गुणस्थानानि । संयमासंयमे त्वेकं देशविरतगुणस्थानं लभ्यत इति ॥ दर्शनं चक्षुरचक्षुरवधिकेवलदर्शनभेदाच्चतुर्धा । तत्राद्यदर्शनद्वये मिथ्यादृष्ट्यादीनि क्षीणमोहान्तानि द्वादशगुणस्थानानि लभ्यन्ते । अवधिदर्शने त्वविरतादीनि क्षीणमोहान्तानि नव गुणस्थानानि लभ्यन्ते । अन्ये तु मिथ्यादृष्ट्यादीनामप्यवधिदर्शनं प्रतिपद्यन्ते, सूत्रे च प्रतिपादितत्वात्तथा च प्रज्ञप्तिः—"ओहिदंसणअणागारोवउत्ता णं भन्ते ! किं नाणी अन्नाणी ? गोयमा ! नाणी वि अन्नाणी वि । जे नाणी ते अत्थेगइया तिनाणी, अत्थेगइया चउनाणी, जे तिनाणी ते आभिणिबोहियनाणी सुयनाणी ओहिनाणी । जे चउनाणी ते आभिणिबोहियनाणी सुयनाणी ओहिनाणी मणपज्जवनाणी । जे अन्नाणी ते नियमा मतिअन्नाणी सुयअन्नाणी विभङ्गनाणी" । अत्र च ये अज्ञानिनस्ते मिथ्यादृष्टय

१ अनाकारावधिदर्शनोपयुक्ता भदन्त ! किं ज्ञानिनोऽज्ञानिन ? गौतम ! ज्ञानिनोऽप्यज्ञानिनोऽपि। ये ज्ञानिन ते सन्ति केचनत्रिज्ञानिन, सन्ति केचन चतुर्ज्ञानिनो ये त्रिज्ञानिनस्ते आभिनिबोधिकज्ञानिन श्रुतज्ञानिनोऽवधिज्ञानिन । ये चतुर्ज्ञानिनस्त आभिनिबोधिकज्ञानिन श्रुतज्ञानिनोऽवधिज्ञानिनो मन पर्ययज्ञानिन । येऽज्ञानिनस्ते नियमात् त्र्यज्ञानिन, मत्यज्ञानिन श्रुताज्ञानिनो विभङ्गज्ञानिन ।

एवेति मिथ्यादृष्टीनामप्यवधिदर्शनमत्र सूत्रे प्रोक्तम्, एवं यदा विभङ्गज्ञानी सास्वादनत्वे मिश्रत्वे वा वर्तते तदा सास्वादनमिश्रयोरप्यवधिदर्शनं लभ्यत इत्यवधिदर्शनेऽपि क्षीणमोहान्तानि द्वादश गुणस्थानानि प्रतिपादयन्त्यमी। ये तु मिथ्यादृष्ट्यादीनामवधिदर्शनं नाभ्युपगच्छन्ति, तदभिप्रायं तु विशिष्टश्रुतविदो विदन्तीति। केवलदर्शने तु सयोग्ययोगिगुणस्थानद्वयं लभ्यते॥ लेश्याः कृष्णादिकाः षड् प्रतीता एव। तत्राद्यानि चत्वारि गुणस्थानानि षट्स्वपि लेश्यासु लभ्यन्ते, देशविरतप्रमत्ताऽप्रमत्तास्तूपरितनविशुद्धलेश्यात्रये वर्तन्ते, न पुनरधस्तनकृष्णादिलेश्यात्रयेऽमीषां विरतत्वात्तथाविधसङ्क्लेशे च विरतेरभावात्। अन्ये त्वभिदधति, देशविरतप्रमत्तौ षट्स्वपि लेश्यासु वर्तेते। कृष्णनीलकापोतलेश्यानामपि प्रत्येकमसंख्येयलोकाकाशप्रमाणाध्यवसायस्थानयुक्तत्वात्, मन्दसङ्क्लेशेषु च तदध्यवसायस्थानेषु तथाविधविरतेरपि सद्भावात्। उक्तं च प्रज्ञप्त्याम्–"[१]सामाइयसंजएणं भन्ते! कइसु लेसासु होज्जा? गोयमा! छसु लेसासु होज्जा। एवं छेओवट्ठावणियसंजए वी"त्यादि अपूर्वकरणादयः सयोगिपर्यन्ताः शुक्ललेश्यायामेव वर्तन्ते। अयोगी त्वलेश्य इति॥ भव्यद्वारे भव्याभव्यौ सूचितौ, तत्र भव्येषु चतुर्दशापि गुणस्थानानि वर्तन्ते, अभव्येषु तु मिथ्यादृष्टिरेव, न शेषास्तेषु सम्यक्त्वाद्यभावादिति॥ सम्यक्त्वद्वारे क्षायिकसम्यक्त्वेऽविरतादयोऽयोग्यन्ताः प्राप्यन्ते। क्षायोपशमिकसम्यक्त्वे चाविरतादयोऽप्रमत्तान्ताः। औपशमिकसम्यक्त्वे पुनरविरतादय उपशान्तमोहान्ताः। शेषास्त्वात्मीयात्मीयस्थाने। तद्यथा–मिथ्यादृष्टिर्मिथ्यात्वे, सास्वादनस्तु सास्वादनसम्यक्त्वे मिश्रस्तु सम्यग्मिथ्यात्वे वर्तत इति॥ संज्ञिद्वारे मिथ्यादृष्टिसास्वादनौ संज्ञिष्वसंज्ञिषु च लभ्येते। सम्यग्मिथ्यादृष्ट्यादयः

१- सामायिकसंयतो भदन्त! कासु लेश्यासु भवेत्? गौतम! षट्सु लेश्यासु भवेत्। एवं छेदोपस्थापनीयसंयतोऽपि-

क्षीणमोहान्ताः पुनः संज्ञिष्वेव लभ्यन्ते। सयोगिकेवली तु न संज्ञी, मनोविकल्पातीतत्वात्, नाप्यसंज्ञी, मनःपर्याप्तियुक्तत्वादिति। एवमयोगिकेवल्यपि ॥ आहारकद्वारे मिथ्यादृष्टिसास्वादनाविरतसम्यग्दृष्टिसयोगिकेवलिन आहारकेष्वनाहारकेषु च लभ्यन्ते, केवलिनोऽनाहारकत्वं समुद्‍घातगतस्य तृतीयचतुर्थपञ्चमसमयेषु भावनीयम्, शेषाणां तु विग्रहगताविति। अन्ये त्वयोगिवर्ज्याः सम्यग्मिथ्यादृष्ट्यादयः आहारका एव तद्भावयुक्तानां तेषां विग्रहगत्यभावादिति । अयोगीत्वनाहारक एवेति । तदेवं गुणस्थानानि स्वरूपतो भेदतश्चोक्तानि, विशेषतोऽपि मार्गणद्वारेषु चिन्तितानि, साम्प्रतं 'उवओगा जोगविही' त्यादिप्रतिज्ञातमनुसरंस्तेष्वेव गुणस्थानेषूपयोगांश्चिन्तयन्नाह—

**भा०** सुरनारए गइए गुणा उ सेसेसु मग्गणेसाह। इगविगलेसुं दोदो पंचिंदीसुं चउद्दसवि।९५॥ भूदगतरुसुं दो एगमगणिवाऊ चउद्दस तसेसु। जोए तेरस वेए तिकसाए नव दस य लोभे ॥९६॥ मइसुयओहिदुगे नव अजयाइजयाइ सत्तमणनाणे। केवलदुगम्मि दो तिन्नि दो व पढमा अनाणतिगे ॥ ९७ ॥ सामइयच्छेएसुं चउरो परिहार दो पमत्ताई । देसे सुहुमे सग पढमचरमचउ अजय अक्खाए ॥ ९८ ॥ बारस अचक्खुचक्खुसु पढमालेसासु तिसु छ दोसु सग। सुक्काए तेर गुणा सव्वे भव्वे अभव्वेगं ॥ ९९ ॥ वेयग ४ खइय ११ उवसमे ८ चउरो एक्कारसट्ठ तुरियाई । सेसतिगे सट्ठाणं सन्निसु चउदस असन्निसु दो ॥ १०० ॥ आहारगेसु पढमा तेरस अणहारगेसु पंच इमे। पढमंतिमदुगदुगअविरया गयाइसु गुणट्ठाणा ॥ १०१ ॥

**दोण्हं पञ्च उ छच्चेव दोसु एगम्मि होंति वामिस्सा। सत्तुवओगा सत्तसु दो चेव य दोसु ठाणेसु ॥११॥**

**टी०** द्वयोः—मिथ्यादृष्टिसास्वादनयोः, तुशब्दस्यैवकारार्थत्वात् पञ्चैव भवन्त्युपयोगाः पूर्वोक्तशब्दार्थास्तद्यथा—मत्यज्ञानश्रु-

ताज्ञानविभङ्गज्ञानोपयोगास्त्रयश्चक्षुरचक्षुर्दर्शनोपयोगौ च। अन्ये त्ववधिदर्शनोपयोगमपि षष्ठमभ्युपगच्छन्ति। तस्य चेहाभ्युपगमानभ्युपगमयोः कारणमनन्तरमेवोक्तमिति। द्वयोः–अविरतदेशविरतयोः, षडेवोपयोगा भवन्ति। मतिश्रुतावधिज्ञानोपयोगास्त्रयः चक्षुरचक्षुरवधिदर्शनोपयोगाश्च त्रय इति सर्वेऽपि षडिति। एकस्मिन् सम्यग्मिथ्यादृष्टौ भवन्ति, षडेवेत्यत्रापि सम्बध्यते। तद्यथा–मत्यज्ञानश्रुताज्ञानविभङ्गाज्ञानोपयोगास्त्रयः चक्षुरचक्षुरवधिदर्शनोपयोगाश्च त्रय इति सर्वेऽपि षडिति। एते च कथम्भूता इत्याह 'व्यामिश्रा' इदमुक्तं भवति–सम्यग्मिथ्यादृष्टिरयमुच्यते। ततश्च यावता अंशेनात्र सम्यक्शब्दः प्रवर्तते तावता अंशेन ज्ञानमप्यस्य प्रतिपत्तव्यमतो मतिश्रुतावधिज्ञानांशैर्विमिश्रितैतेयां द्रष्टव्याः, अत एवावधिज्ञानांशं क्वचिदाश्रित्यावधिदर्शनोपयोगोऽप्यस्योक्तः, अन्यथा हि शुद्धे विभङ्गज्ञाने मिथ्यादृष्टेरिव न मुख्यतया अयमनोक्तः स्यात्, मतान्तरगम्यत्वात्तस्येति। एतच्च मिश्रत्वं शाब्दीं वृत्तिमाश्रित्य सामर्थ्यायातत्वेनोच्यते। वस्तुतस्तु ज्ञानस्य गन्धोऽप्यत्र नास्ति, शुद्धसम्यक्त्वमूलत्वेनात्र ज्ञानस्य प्रसिद्धत्वात्, अन्यथा हि यद्यशुद्धसम्यक्त्वस्यापि ज्ञानमभ्युपगम्यते, तदा सास्वादनस्याप्यावश्यकादिष्विवात्र ज्ञानाभ्युपगमः स्यात्, न चैतदस्ति, तस्याज्ञानित्वेनानन्तरमेवेह प्रतिपादितत्वात्, इत्यलं विस्तरेण तत्त्वस्य केवलिगम्यत्वादिति। सप्तोपयोगाः सप्तसु प्रमत्तादिषु क्षीणमोहान्तेषु प्राप्यन्ते। तत्राविरतदेशविरतयोर्ये प्रोक्ताः षट् त एव, मनःपर्यायज्ञानोपयोगस्तु सप्तमः। चः पुनरर्थे, तस्य चेत्थं सम्बन्धः, द्वयोः पुनः सयोग्ययोगिगुणस्थानयोः केवलज्ञानकेवलदर्शनोपयोगौ द्वौ भवतः, न शेषास्तयोरतीन्द्रियादित्वेन तदसम्भवादिति गाथार्थः ॥ ११ ॥ उपयोगान् गुणस्थानेषु विचिन्त्य, साम्प्रतं तेष्वेव योगान् चिन्तयिषुरेकीयमतेन तावदाह—

भा० संपइ गुणठाणेसुवि उवओगा दोण्हपंचगाहाए । भावत्थोऽयं तत्थ उ उवओगा मिच्छसासाणे ॥ २ ॥ अन्नाणाइ मइसुयविभंगाणि अचक्खुचक्खु इय पणगं । सम्मे देसे मइसुयअवहिदुगं चक्खुअचक्खू ॥ ३ ॥ इय छक्कं एयं चिय मिस्सगुणे मिस्सयं मुणेयव्वं । इह भावणिया मीसम्मि सम्मसद्दो उ अंसेण ॥ ४ ॥ जावइएण पवत्तइ अंसेणं तत्तिएण नाणंपि । नेयमओ मइसुय–नाण अवहिनाणेहि मीसत्तं ॥ ५ ॥ नेयव्वं इय कारण–वसओऽवहिनाणलेस-मासज्ज । किंची अवहीदंसणउवओगो वि हु इहं भणिओ ॥ ६ ॥ इह मिस्सत्तं सद्दाणु–वित्तिमासज्ज भन्नए एत्थ । परमत्थओ य एयस्स नाणगंधो वि न समत्थि ॥ ७ ॥ सम्मत्ते सुद्धे सइ इह नाणं सम्मयं पुणो सुत्ते । सासायणमाईण वि नाणं अंगीकयं नत्थि ॥ ८ ॥ इह नत्थि तस्सणंतरमेवुत्तंता अओ उ अन्नाणं । एवं च ठिएत्थत्थं तत्तं पुण केवली मुणइ ॥ ९ ॥ अह छगसत्तमअट्ठमनवमगदसिगारबारसगुणे य । पुव्विल्लुवओगछगं मणपज्जवनाणसंजुत्तं ॥ १० ॥ केवलियदुगं अंतिम-गुणेसु दोसुं पि इन्हि जोगा उ । भन्नंति गुणेसुं तत्थ ताव एगेसिमयमेयं ॥ ११ ॥

तिसु तेरस एगे दस नव जोगा हुंति सत्तसु गुणेसु । एक्कारस य पमत्ते सत्त सजोगे अजोगेक्कं ॥ १२ ॥

टी० त्रिषु गुणस्थानेषु मिथ्यादृष्टिसास्वादनाविरतलक्षणेषु त्रयोदश योगा भवन्ति, तद्यथा–मनोयोगश्चतुर्विधोऽपि वाग्योगोऽपि चतुर्द्धा, औदारिकवैक्रियकाययोगौ पर्याप्तेष्वेषु लभ्येते औदारिकवैक्रियमिश्रकाययोगावपर्याप्तकावस्थायाम्, कार्मणकाययोगो विग्रहगतावेवमेते त्रयोदश योगाः पूर्वोक्तस्वरूपा नानाजीवापेक्षया भवन्ति । आहारकतन्मिश्रद्विकं तु न सम्भवति, संयमप्रत्ययत्वात् तस्य । अत्र च मते वैक्रिययोगसम्भवोऽविरतान्तानामेव मन्तव्यः, न देशविरतादीनाम्, तेषां

१ 'एक्कम्मि हुन्ति एक्कारस' इति चूर्णौ.

तल्लब्ध्यभावादिति । 'एगे दस' त्ति एकस्मिन् सम्यग्मिथ्यादृष्टौ दश योगा भवन्ति, अष्टौ मनोवाग्योगा औदारिकशरीरं वैक्रियशरीरं चेति । कार्मणशरीरं तु न सम्भवति, तस्य विग्रहगतावेव भावादस्य च मरणाभावेन विग्रहगत्यभावात्, तदुक्तम्– "न सम्ममिच्छो कुणइ कालमि" त्ति, अत एवौदारिकवैक्रियमिश्रेऽपि न सम्भवतस्तयोरपर्याप्तावस्थाभावित्वात्, तदवस्थायां च सम्यग्मिथ्यात्वाभावादिति । ननु यद्येवं तर्हि देवलोकनरकसम्भविवैक्रियमिश्रं माभूदस्य, मनुष्यतिरश्चां तु सम्यग्मिथ्यादृशां वैक्रियकरणसम्भवे तत्कस्मादस्य नाभ्युपगम्यते, सत्यम्, तेषां वैक्रियकरणासम्भवतोऽन्यतो वा कुतश्चित्कारणात्तदपि नोक्तमिति न ज्ञायते, तथाविधाम्नायाभावादिति । सप्तसु गुणस्थानकेषु देशविरताप्रमत्तापूर्वकरणादिक्षीणमोहान्तेषु नव नव योगा भवन्ति, अष्टौ मनोवाग्योगाः, औदारिकशरीरयोगश्चेति, तद्भावेनैषां जन्मान्तराभावात् कार्मणौदारिकमिश्रयोगौ न सम्भवतः, वैक्रियद्विकाभावस्तु देवनारकेष्वेतेषामसम्भवादिति । आहारकमप्रमत्तस्य किमिति न भवतीति चेत् ? उच्यते–अस्मिन् मते आहारकस्यारम्भे संत्यागे च प्रमत्त एव भवति, लब्ध्युपजीवनादिति नाप्रमत्तस्याहारकद्विकसम्भवः । 'एक्कारस य पमत्ते' त्ति चः पुनरर्थे भिन्नक्रमश्च, प्रमत्ते पुनरेकादश योगा भवन्ति, नव तावदनन्तरोक्ता एव, तथा आहारकद्विकं चेति । सयोगे–सयोगिकेवलिनि, सप्त योगा भवन्ति । सत्यमनोयोगोऽसत्यामृषमनोयोगश्चेत्येवं वाग्योगोऽपि द्विधा, तथौदारिककाययोगः स्वभावस्थे लभ्यते, औदारिकमिश्रकार्मणकाययोगौ तु समुद्घातावस्थायामेवमेते सप्त लभ्यन्ते, न शेषा असम्भवादिति । 'अजोगेक्कं' ति प्राकृतशैल्या लुप्तविभक्तिको निर्देशः, एकं अयोगिकेवलिलक्षणं गुणस्थानं अयोगं योगविरहितं

---

१ न सम्यग्मिथ्यादृष्टिः करोति कालम् २ 'देव' इति सि.

भवति अयोगित्वादेवेत्यर्थः । एवमेकीयमतं वर्णितम् ॥ १२ ॥ ये पुनर्देशविरतादीनामपि वैक्रियमिच्छन्ति, आहारकसमाप्त्युत्तरकाले च संयतस्याप्रमत्तभावमपीच्छन्ति, ते इत्थं पठन्ति–

भा० तिसु तेरस इचाई तत्थ य सासाणमिच्छसम्मेसु । तेरस जोगा मणचउवइचउकम्मइगउरलदुगं ॥ १२ ॥ वेउविदुगं नाणा जीवे आसज्ज किंतु वेउवो । सम्मंताणं चेव उ न पंचमाईसु वि गुणेसु ॥ १३ ॥ लद्धिअभावा तेसिं मिस्से दस मणवईण चउ चउगं । ओरालं वेउवं एवं दस तह य सत्तसु य ॥ १४ ॥ पंचमसत्तममाइसु वारसअंतेसु हुंति नव जोगा । मणवयणअट्ठ उरलं इय नव नणु अप्पमत्तस्स ॥ १५ ॥ किं न भवे आहारग–दुगंपिई आह अयमभिप्पाओ । अपमत्तो वि पमत्तो होई आहारआरंभे ॥ १६ ॥ निट्ठवणे वि य लद्धीउवजीवणया इहं इमे वि मया । पुविल्लनवाहारगदुगसहियेगारस पमत्ते ॥ १७ ॥ जोगिम्मि सच्च सच्चं असच्चमोसं मणं तहा वयणं । उरलदुगं कम्मोगो एकंतिमगं अजोगंति ॥ १८ ॥ जे पुण विरयाविरय–प्पभिईण वि केइ विंति वेउवं । तह आहारगपारंभ–कालपरओ वि साहुस्स ॥ १९ ॥ अपमत्तंपि भणंति ते उ एवं पढंति इय गाहा । तेरस चउसु दसेगे इचाई तत्थ अयमत्थो ॥ २० ॥

तेरस चउसु दसेगे पंचसु नव दोसु होंति एक्कारा । एक्कंमि सत्त जोगा अजोगि ठाणं हवइ एकं ॥ १३ ॥

टी० तत्र पूर्वस्मिन् मते मिथ्यादृष्टिसास्वादनाविरतलक्षणेषु त्रिषु गुणस्थानेषु त्रयोदश योगा उक्ताः, अत्र तु चतुर्षु द्रष्टव्यास्तथेह चतुर्थं प्रमत्तसंयतगुणस्थानं द्रष्टव्यम्, तत्रास्यैकादश योगाः पूर्वोक्ता एव वैक्रिय तन्मिश्रद्विकेन सह तेऽपि त्रयोदश भवन्ति । देशविरतादीनामप्यस्मिन्नेव मते वैक्रियाभ्युपगमादिति भावः । 'दसेग' त्ति पूर्ववदेव ।

अन्यच्च पूर्वस्मिन् मते सप्तसु गुणस्थानेषु नव नव योगा उक्ताः, अत्र तु देशविरताप्रमत्तवर्ज्येषु तेष्वेव पञ्चसु गुणस्थानेषु त एव नव नव योगा मन्तव्याः, देशविरताप्रमत्तयोस्तर्हि का वार्त्ता इत्याह-' दोसु होंति एक्कार ' त्ति द्वयोर्देशविरताप्रमत्तसंयतयोरेकादश एकादश योगा भवन्ति, तत्र देशविरतस्य तावन्नव पूर्वोक्ता एव वैक्रियतन्मिश्रद्विकेन सहैकादश भवन्ति। वैक्रियद्विकसम्भवे च कारणमुक्तमेव। अप्रमत्तसंयतस्य तु नव योगाः पूर्वोक्ता एव, आहारकवैक्रियकाययोगसहितास्ते पुनरेकादश भवन्ति, इदमत्र हृदयम्-वैक्रियमाहारकं वा कुर्वन् प्रारम्भसमये लब्ध्युपजीवनौत्सुक्यसम्भवात्प्रमत्त एव सम्भवीति अप्रमत्तस्य वैक्रियाहारकमिश्रकाययोगौ न सम्भवतः, तत्समाप्तौ पुनरौत्सुक्यनिवृत्तेरप्रमत्तोऽप्यस्मिन् मते सम्भवतीति वैक्रियाहारककाययोगावस्य लभ्येते इति। आह ननु सङ्गतमिदं यदत्र मते देशविरतसंयतयोर्वैक्रियमुक्तं ' अम्बडश्रावकविष्णुकुमारस्थूलभद्रादीनां तस्य सुप्रसिद्धत्वात्, पूर्वस्मिंस्तु मते कथं तयोस्तस्य प्रतिषेधः, सत्यं, स्वल्पत्वात्सदपि न विवक्षितमिति पश्यामस्तत्त्वं तु केवलिनो विशिष्टश्रुतविदो वा विदन्तीति। उत्तरार्द्धं तु गतार्थम्, पूर्वमतेनाविशिष्टत्वादिति गाथार्थः ॥ १३ ॥ तदेवं ' उवओगा जोगविही जेसु अ ठाणेसु जतिया अत्थि ' त्ति, एतावत्प्रथमद्वारगाथायां व्याख्यातम्, साम्प्रतं " जप्पच्चइओ बंधो " इत्येतद् व्याख्यानयन्नाह-

भा० पुव्विल्लमए मिच्छे सासे सम्मे य जोग तेरसगं। इहइं तु पमत्ते विय तेरसगं तत्थ जे पुव्वा ॥ २१ ॥ एक्कारस ते सहिया वेउव्विदुगेण तेरस हवंति। देसविरयाइयाणत्ति एत्थ मए होइ चेउव्वं ॥ २२ ॥ मीसे दस ते चेव य तह पणसगमाइवारसंतेसु। जे पुव्वं सत्तसु नव भणिया ते चेव इहइंपि ॥२३॥ देसजयमप्पमत्तं मोत्तुं सेसेसु पंचसु गुणेसु। नव हुंति तहा दोसुं

एक्कारस तत्थ देसगुणे ॥ २४ ॥ वेउव्वियदुगजुत्ता पुव्विल्ला नव हवंति एक्कारा । अपमत्तसंजयस्स उ ते नव साहारवेउव्वा॥२५॥
हुंतिक्कारसजोगा भारत्थोयं विउव्वमाहारं । कुव्वंतो आरंभे ऊसुगचित्तो हवइ जीवो ॥ २६ ॥ तत्तो होइ पमत्तो इय अपमत्ते
विउव्विसंमीसं । आहारमीसयंपि य न होइ तस्स उसमत्तीए ॥२७॥ ऊसुगभावनियत्तो एयंमि पयम्मि होइ अपमत्तो ।
तम्हा जुत्ता अपमत्तयाण वेउव्वआहारा ॥२८॥ एगम्मिवि जोगगुणे जोगा सत्तेव हुंति पुव्वुत्ता । गुणठाणगेसु एवं इय जोगविही
इमो नेओ ॥ २९ ॥ जप्पच्चइओ बंधो इइ दारं इय पयम्मि किर जेहिं । सामन्नपच्चयेहिं हेऊहिं कारणेहिं इइ ॥ ३० ॥

चउपच्चइओ बंधो पढमे उवरिमतिगे तिपच्चइओ । मीसगबीओ उवरिमदुगं च देसिक्कदेसम्मि ॥ १४ ॥
उवरिल्लपंचगे पुण दुपच्चओ जोगपच्चओ तिण्हं । सामन्नपच्चया खलु अट्ठण्हं होंति कम्माणं ॥ १५ ॥

टी० प्रत्यया हेतवः कारणानीत्यर्थान्तरं ते चेह प्रस्तावात् ज्ञानावरणादिकर्मबन्धस्य द्रष्टव्याः । तेऽपि सामान्यविशेषभेदाद् द्विधा,तत्रेह सामान्यप्रत्यया उच्यन्ते,विशेषप्रत्ययानां 'होइ जहा' इत्यस्मिन् द्वारेऽनन्तरमेव 'पडणीयमंतराए' इत्यादिना (१९ गाथायां) अभिधास्यमानत्वादिति । ते च सामान्यप्रत्ययाः कर्मबन्धस्य चत्वारस्तद्यथा—मिथ्यात्वं अविरतिः कषाया योगाश्चेति।तत्र मिथ्यात्वं सामान्यतो विपरीतबोधस्वभावतया एकविधमेव, व्यक्तिविवक्षया तु त्रिविधम्, पञ्चविधं वा, त्रिषष्ट्यधिकशतत्रयविधं वा, अपरिमितभेदं वा । तत्र त्रिविधं—सांशयिकं, आभिग्रहिकं, अनाभिग्रहिकं चेति । तत्र सांशयिकं यदर्हता जीवादितत्त्वमुक्तं तन्न जाने किं तथैव स्यादुतान्यथेति, उक्तं च—" एकस्मिन्नपि तत्त्वे सन्दिग्धे प्रत्ययो जिने नष्टः । मिथ्या च दर्शनं तत्स चादिहेतुर्भवगतानाम् ॥१॥" इति । आभिग्रहिकश्च येन बोटिकादिकुदर्शनानामन्यतमदभिगृह्णाति । अनाभिग्रहिकमज्ञानाङ्गवादीनामथवा

ईंधनाद्यस्थ्यादनभिगृहीतदर्शनविशेषा सर्वदर्शनानि शोभनानीत्येवंरूपा प्रतिपत्तिरिति । पञ्चविधं त्वेकान्तमिथ्यात्वं, वैन-यिकमिथ्यात्वं, सांशयिकमिथ्यात्वं, मूढमिथ्यात्वं, विपरीतमिथ्यात्वं चेति । तत्रैकान्तमिथ्यात्वं अनन्तधर्माध्यासिते वस्तुन्येकांशावधारणरूपम्, यथा 'अस्त्येव जीवो नास्त्येव वे'त्यादि' । ऐहिकामुष्मिकसुखानि सुरनृपादिविनयशानेव लभते, न ज्ञानदर्शनोपवासब्रह्मचर्यादिकष्टकलापादित्यभिनिवेशो वैनयिकमिथ्यात्वम् । संशयमिथ्यात्वं तु पूर्वोक्तमेव । मूढानां तत्त्वादिविचाराक्षमाणां पृथिव्यादीनां मिथ्यात्वं मूढमिथ्यात्वम् । विपरीतो विपर्यस्तवस्त्वध्यवसायो मिथ्यात्वं हिंसाऽब्रह्मसेवादीनां वस्तुतो दुःखहेतुत्वेऽप्येत एव तत्त्वतः सुखरूपा इत्यभिनिवेशो विपरीतमिथ्यात्वं, यदाहुरेके-" सत्यं वच्मि हितं वच्मि सारं वच्मि पुनः पुनः । अस्मिन्नसारे संसारे सारं सारङ्गलोचना ॥ १ ॥ मियादर्शनमेवास्तु किमन्यैर्दर्शनान्तरैः । प्राप्यते येन निर्वाणं सरागेणापि चेतसा ॥ २ ॥ " इत्यादि । त्रिषष्ट्यधिकशतत्रयविधं पुनः, "[1]असिइसयं किरियाणं अकिरियवाईण होइ चुलसीई । अण्णाणि य सत्तट्ठी वेणइयाणं च बत्तीसं ॥ १ ॥ " इत्यादिनाऽऽवश्यकाचारादिष्वभिहितस्वरूपं द्रष्टव्यमिति । अपरिमितभेदं तु '[2]जावइया नयवाया तावइया चेव हुंति परसमया । जावइया परसमया तावइया चेव मिच्छत्ता ( नयवादा ) ॥ १ ॥' इत्यादि द्रष्टव्यमिति । एवमनेकविकल्पसम्भवेऽप्यत्र मध्यमवृत्त्या पञ्चविधमेव मिथ्यात्वं गृह्यते । अविरतिरपि सामान्यतः सावद्ययोगाऽनिवृत्तिरूपतया एकविधैव । व्यक्तितस्तु यावन्ति हिंसादीनि पापस्थानानि तेभ्योऽनि-

१ अशीतिशतं क्रियाणामक्रियावादिनां भवति चतुरशीतिः । अज्ञानिनश्च सप्तषष्टिर्वैनयिकानां च द्वात्रिंशत् ॥ १ ॥
२ यावन्त नयवादास्तावन्त एव भवन्ति परसमयाः । यावन्तः परसमयास्तावन्त एव मिथ्यात्विनः ( नयवादाः ) ॥ १ ॥

वृत्तिरूपतयाऽनेकविधा । अत्र तु वक्ष्यमाणरूपया द्वादशधा गृह्यते । तद्यथा–पृथिव्यप्तेजोवायुवनस्पतित्रसवधाऽविरतिः षोढा, तथा स्पर्शनरसनघ्राणचक्षुःश्रोत्रमनोविषयेषु शब्दादिषु रागद्वेषाऽनिवृत्तिरूपाऽप्यविरतिः षोढैवेति अविरतिरिह द्वादशधा भवति । कषाया अनन्तानुबन्धिक्रोधादयो वक्ष्यमाणस्वरूपाः षोडश । अपरं चेह कषायग्रहणेन वक्ष्यमाणयुक्त्या तत्सहचारिणो वेदभयहास्यादिषट्कलक्षणा नोकषाया अपि नव गृह्यन्ते । योगास्तु पूर्वोक्तस्वरूपाः पञ्चदश । तदेवमेते मिथ्यात्वादिसामान्यबन्धहेतूनामुत्तरभेदाः सर्वेऽपि सप्तपञ्चाशद् भवन्ति । मूलप्रत्ययास्तु चत्वार एव । एत एव च सामान्यविवक्षया सूत्रेऽभिहिताः, अतो मिथ्यात्वादयश्चत्वारः प्रत्यया यस्य स चतुष्प्रत्ययः । कं इत्याह–बन्धो ज्ञानावरणादीनामिति गम्यते, क्वेत्याह–प्रथमे मिथ्यादृष्टिगुणस्थाने, इदमुक्तं भवति–मिथ्यात्वादिभिश्चतुर्भिः सोत्तरभेदैर्मिथ्यादृष्टिर्ज्ञानावरणादिकर्म्म बध्नाति । उत्तरभेदास्त्वत्राहारकतन्मिश्रद्विकवर्जनात् पञ्चपञ्चाशदेव मन्तव्याः, तद्वर्जनं तु "संयमवतां तदुदयो नान्यस्ये"तिवचनादिति । उपरितनत्रिके–सास्वादनमिश्राविरतलक्षणे, त्रयः प्रत्यया यत्र स त्रिप्रत्ययो बन्धो भवति । एतदुक्तं भवति–सास्वादनादयस्त्रयो मिथ्यात्वोदयाभावात्तद्वर्ज्जैः शेषैस्त्रिभिः प्रत्ययैः सोत्तरभेदैः कर्म बध्नन्ति । ते चोत्तरभेदाः पूर्वोक्तायाः पञ्चपञ्चाशतो मिथ्यात्वपञ्चकेऽपनीते सास्वादनस्य तावत्पञ्चाशद् द्रष्टव्याः । सम्यग्मिथ्यादृष्टेस्तु परलोकगमनाभावात् कार्मणं औदारिकमिश्रं वैक्रियमिश्रं च न सम्भवत्यनन्तानुबन्ध्युदयस्य चास्य निषिद्धत्वादनन्तानुबन्धिचतुष्टयं च नास्त्यत एतेष्वपि सप्तसु पूर्वोक्तायाः पञ्चाशतोऽपनीतेषु शेषास्त्रिचत्वारिंशदुत्तरभेदा भवन्ति । अविरतस्य तु परलोकगमनसम्भवात् पूर्वापनीतकार्मणौदारिकमिश्रवैक्रियमिश्रत्रये पूर्वोक्तायां त्रिचत्वारिंशति पुनः प्रक्षिप्ते षट्चत्वारिंशद्भेदा भवन्ति । 'मोस-

गवीओ उवरिमदुगं च देसेक्कदेसंमि' त्ति देशः सर्वसावद्ययोगस्य त्रसप्राणातिपातादिः, एकदेशस्तु तस्यैव देशस्य द्वीन्द्रियातिपातादिः ' तयोर्देशैकदेशयोर्विरतिसद्भावादुपचारतो देशविरतिरेव इह देशैकदेशशब्देन विवक्षितः, तस्मिन् देशैकदेशे देशविरते, 'मीसगवीओ' त्ति द्वितीयोऽविरतिलक्षणः प्रत्ययो मिश्रो भवति, मिश्रशब्दश्चात्रापरिपूर्णवाची, त्रसवधादस्य निवृत्तत्वान्न द्वादशविधोऽप्यविरतिप्रत्ययो लभ्यत इति भावः । उपरितनद्विकं च-कषाययोगलक्षणं च, इद-मुक्तं भवति-अपरिपूर्णोऽविरतिप्रत्ययः कषायप्रत्ययो योगप्रत्ययश्च यथासम्भवं प्राप्यते । तत्र चाप्रत्याख्यानावरणोदय-स्यास्य निषिद्धत्वादप्रत्याख्यानावरणचतुष्टयम्, तथा विग्रहगत्यावपर्याप्तकावस्थायां च देशविरतेरभावात् कार्मणौदारिकमिश्र-शरीरद्वयं त्रसासंयमान्निवृत्तत्वात्त्रसासंयमश्च न सम्भवति, अत एतानि सप्त पूर्वोक्तायाः पञ्चचत्वारिंशतोऽपनीयन्ते, ततः शेषा एकोनचत्वारिंशदुत्तरभेदा लभ्यन्ते । अत्राह-ननु त्रसासंयमात् सङ्कल्पजादेवासौ निवृत्तो न त्वारम्भजादेस्तत्कथं सर्वोऽप्ये-षोऽपनीयते ? सत्यं, किन्तु गृहिणामशक्यपरिहारत्वेन सन्नप्यारम्भजत्रसाऽसंयमो न विवक्षित इत्यदोषः । एतच्च बृहच्चूर्णि-मनुश्रित्य लिखितमिति न स्वमनीषिका भावनीयेति । 'उवरिल्लपंचगे पुण दुपच्चओ' त्ति देशविरतादुपरितनपञ्चके पुनः प्रमत्तादौ सूक्ष्मसम्परायान्ते द्वौ प्रत्ययौ यत्र स द्विप्रत्ययो बन्धो भवति । एतदुक्तं भवति-मिथ्यात्वाविरतिप्रत्ययद्वयस्यैतेष्व-भावाच्छेषेण कषाययोगप्रत्ययद्वयेन सम्भवदुत्तरभेदयुक्तेनामी कर्म बध्नन्ति । तत्र प्रमत्तस्य सञ्ज्वलनकषायाश्चत्वारः, नोक-षाया नव, योगास्त्वौदारिकमिश्रकार्मणवर्जितास्त्रयोदश, सर्वेऽप्यमी षड्विंशतिरुत्तरभेदा भवन्ति । अप्रमत्तस्य त्वनन्तरोक्तायाः षड्विंशतेः पूर्वोक्तयुक्त्या वैक्रियमिश्राहारकमिश्रद्वयेऽपनीते शेषाश्चतुर्विंशतिर्भवति । अपूर्वकरणे त्वतिविशुद्धत्वाद्वैक्रियमाहारकं

च न सम्भवत्येव, ततो वैक्रियाहारकद्वयेऽनन्तरोक्तायाश्चतुर्विंशतेरपनीते शेषा द्वाविंशतिर्भवति। अनिवृत्तिबादरस्य तु हास्यादि-
षट्कस्यापूर्वकरण एव स्थितत्वाच्छेषाः सञ्ज्वलनाश्चत्वारः कषायाः वेदत्रयं नव योगा एते षोडश भवन्ति, यावदद्यापि वेद-
त्रयं सञ्ज्वलनत्रयं च नापगच्छति, तदपगमे तु यथासम्भवो वाच्यः । सूक्ष्मसम्परायस्य तु वेदत्रयक्रोधमानमायानामनि-
वृत्तिबादर एव व्यवच्छिन्नत्वाच्छेषा नव योगाः सञ्ज्वलनलोभश्चेति दश भवन्ति। 'जोगपच्चओ तिण्हं' ति त्रयाणामुपशान्त-
क्षीणमोहसयोगिकेवलिनां योग एव प्रत्ययो यत्र स योगप्रत्ययो बन्धः । स च योग उपशान्तक्षीणमोहयोः प्रत्येकं नवधा
भवति, अष्टौ मनोवाग्योगा औदारिककाययोगश्चेति । सयोगिकेवलिनस्तु योगः सप्तधा पूर्ववद्वक्तव्यः। अयोगी तु प्रत्यया-
भावादबन्धक इति। उपसंहरन्नाह—'सामन्ने'त्यादि खलुरेवकारार्थः, एत इति च गम्यते, ततश्च सामान्यप्रत्यया एत एवाष्टानां
कर्मणां भवन्ति, नान्ये इति । अत्र चोत्तरभेदानां सङ्ग्रहगाथा 'पणपण्ण १ पण्ण २ तिय ३ छहियचत्त ४ इगुचत्त ५
छक्क ६ चउसहिया । दुजुआ य वीस ८ सोलस ९ दस १० नव ११ नव १२ सत्त हेऊ उ १३ इति ॥ १ ॥ गाथाद्वयार्थः
॥ १४ ॥ १५ ॥ 'इदानीं होइ जह' त्ति द्वारप्रतिज्ञातान् विशेषप्रत्ययान् विभणिषुर्ज्ञानदर्शनावरणयोस्तावदाह—

भा० अट्ठण्ह कम्माणं बंधो एक्केक्कयंमि गुणठाणे । होइ इइय वयणाणं अज्झाहारेण इय पुन्नं ॥ ३१ ॥ एयद्दारस्स पयं
होइ तहा हेउणो य किर दुहिया । सामन्ना य विसेसा होइ जहा इह दारे तु॥३२॥अट्ठण्हं कम्माणं विसेसओ बंधहेउ (णन्तरुक्त)।
पडणीयमंतराइय इच्चाईहिं उ गाहाहिं॥३३॥वन्निज्जस्संति तओ इह सामत्था उ लब्भई एवं।सामन्नबंधहेऊ अट्ठण्ह एत्थ कम्माणं
॥ ३४ ॥ एक्केक्कगुणट्ठाणे इह भणियव्वं ति तो इमं भणइ । चउपच्चइओ बंधो इच्चाईगाहजुयलंति ॥ ३५ ॥ सामन्नबंधहेऊ

गवीओ उवरिमदुगं च देसेक्कदेसंमि' त्ति देशः सर्वसावद्ययोगस्य त्रसप्राणातिपातादिः, एकदेशस्तु तस्यैव देशस्य
द्वीन्द्रियातिपातादिः ' तयोर्देशैकदेशयोर्विरतिसद्भावादुपचारतो देशविरतिरेव इह देशैकदेशशब्देन विवक्षितः, तस्मिन्
देशैकदेशे देशविरते, 'मोसगवीओ' त्ति द्वितीयोऽविरतिलक्षणः प्रत्ययो मिश्रो भवति, मिश्रशब्दश्चात्रापरिपूर्णवाची,
त्रसवधादस्य निवृत्तत्वान्न द्वादशविधोऽप्यविरतिप्रत्ययो लभ्यत इति भावः । उपरितनद्विकं च–कषाययोगलक्षणं च, इद-
मुक्तं भवति–अपरिपूर्णोऽविरतिप्रत्ययः कषायप्रत्ययो योगप्रत्ययश्च यथासम्भवं प्राप्यते । तत्र चाप्रत्याख्यानावरणोदय-
स्यास्य निषिद्धत्वादप्रत्याख्यानावरणचतुष्टयम्, तथा विग्रहगतावपर्याप्तकावस्थायां च देशविरतेरभावात् कार्मणौदारिकमिश्र-
शरीरद्वयं त्रसासंयमान्निवृत्तत्वात्त्रसासंयमश्च न सम्भवति, अत एतानि सप्त पूर्वोक्तायाः षट्चत्वारिंशतोऽपनीयन्ते, ततः शेषा
एकोनचत्वारिंशदुत्तरभेदा लभ्यन्ते । अत्राह–ननु त्रसासंयमात् सङ्कल्पजादेरेवासौ निवृत्तो न त्वारम्भजादेस्तत्कथं सर्वोऽप्ये-
पोऽपनीयते ? सत्यं, किन्तु गृहिणामशक्यपरिहारत्वेन सन्नप्यारम्भजत्रसाऽसंयमो न विवक्षित इत्यदोषः । एतच्च बृहच्चूर्णि-
मनुश्रित्य लिखितमिति न स्वमनीषिका भावनीयेति । 'उवरिल्लपंचगे पुण दुपच्चओ' त्ति देशविरतादुपरितनपञ्चके पुनः
प्रमत्तादौ सूक्ष्मसम्परायान्ते द्वौ प्रत्ययौ यत्र स द्विप्रत्ययो बन्धो भवति । एतदुक्तं भवति–मिथ्यात्वाविरतिप्रत्ययद्वयस्यैतेष्व-
भावात्शेषेण कषाययोगप्रत्ययद्वयेन सम्भवदुत्तरभेदयुक्तेनामी कर्म बध्नन्ति । तत्र प्रमत्तस्य सञ्ज्वलनकषायाश्चत्वारः, नोक-
षाया नव, योगास्त्वौदारिकमिश्रकार्मणवर्जितास्त्रयोदश, सर्वेऽप्यमी षड्विंशतिरुत्तरभेदा भवन्ति । अप्रमत्तस्य त्वनन्तरोक्तायाः
षड्विंशतेः पूर्वोक्तयुक्त्या वैक्रियमिश्राहारकमिश्रद्वयेऽपनीते शेषाश्चतुर्विंशतिर्भवति । अपूर्वकरणे त्वतिविशुद्धत्वाद्वैक्रियमाहारकं

च न सम्भवतोरेव, ततो वैक्रियाहारकद्वयेऽनन्तरोक्तायाश्चतुर्विंशतेरपनीते शेषा द्वाविंशतिर्भवति । अनिवृत्तिबादरस्य तु हास्यादि-
पट्कस्यापूर्वकरण एव स्थितत्वाच्छेषाः सञ्ज्वलनाश्चत्वारः कषायाः वेदत्रयं नव योगा एते षोडश भवन्ति, यावद्यापि वेद-
त्रयं सञ्ज्वलनत्रयं च नापगच्छति, तदपगमे तु यथासम्भवो वाच्यः । सूक्ष्मसम्परायस्य तु वेदत्रयक्रोधमानमायानामनि-
वृत्तिबादर एव व्यवच्छिन्नत्वाच्छेषा नव योगाः सञ्ज्वलनलोभश्चैते दश भवन्ति । 'जोगपच्चओ तिण्हं' ति त्रयाणामुपशान्त-
क्षीणमोहसयोगिकेवलिनां योग एव प्रत्ययो यत्र स योगप्रत्ययो बन्धः । स च योग उपशान्तक्षीणमोहयोः प्रत्येकं नवधा
भवति, अष्टौ मनोवाग्योगा औदारिककाययोगश्चेति । सयोगिकेवलिनस्तु योगः सप्तधा पूर्ववद्वक्तव्यः । अयोगी तु प्रत्यया-
भावादबन्धक इति । उपसंहरन्नाह-'सामन्ने'त्यादि खलुरेवकारार्थः, एत इति च गम्यते, ततश्च सामान्यप्रत्यया एव प्रत्यष्टानां
कर्मणां भवन्ति, नान्ये इति । अत्र चोत्तरभेदानां सङ्ग्रहगाथा 'पणपण्ण १ पण्ण २ तिय ३ छहियचत्त ४ गुणचत्त ५
छक्क ६ चउसहिया । दुजुआ य वीस ८ सोलस ९ दस १० नव ११ नव १२ सत्त हेऊ उ १३ इति ॥ १ ॥ गाथाद्वयार्थः
॥ १४ ॥ १५ ॥ 'इदानीं होइं जह' त्ति द्वारप्रतिज्ञातान् विशेषप्रत्ययान् विभणिषुर्ज्ञानदर्शनावरणयोस्तावदाह-

भा० अट्ठण्ह कम्माणं बंधो एक्केकयंमि गुणठाणे । होइ इइय वयणाणं अज्झाहारेण इय सुत्तं ॥ ३१ ॥ एयद्दारस्स पयं
होइ तहा हेउणो य फिर दुहिया । सामन्ना य विसेसा होइ जहा इइ दारे तु॥३२॥अट्ठण्ह कम्माणं विसेसओ बंधहेउ (णन्तरच्च)।
पडणीयमंतराइय इच्चाईहिं उ गाहाहिं॥३३॥वन्निज्जरसंति तओ इह सामत्था उ लब्भई एवं।सामन्नबंधहेऊ अट्ठवि एत्थ कम्माणं
॥ ३४ ॥ एक्केक्कगुणट्ठाणे इह भणियव्वं ति तो इमं भणइ । चउपच्चइओ बंधो इच्चाइगाहजुयलंति ॥ ३५ ॥ सामन्नबंधहेऊ

मिच्छत्तं अविरई कसाया य । जोगा य तत्थ पढमे गुणम्मि चउपच्चओ बंधो ॥ ३६ ॥ मिच्छारहिओ उ उवरिम-गुणतिगे पंचमे तिपच्चइओ । किंतु तहिं जो दुइओ हेऊ सो मीसओ होइ ॥ ३७ ॥ जेण किर पंचमगुणं विरयाविरयं तओ इमं भणियं । मीसगवीओ तिचउक्कसायजोगाभिहा हेऊ ॥ ३८ ॥ हुंतिउ पुन्ना जह संभवेण छट्ठाइसुहुमपंतेसु । तिचउत्था दो हेऊ तिन्हं उवसंतमाईणं ॥ ३९ ॥ एगो उ जोगपच्चयबंधो होई अवयसु अजोगी । मिच्छाईहेऊणं पुण, एए उत्तरपभेया ॥ ४० ॥ मिच्छत्ताविरइकसायजोगभेयाण हुंति जहसंखं । पणबारसपणवीसं पनरसभेया गुणेसाह ॥ ४१ ॥ पणपन्न १ पन्न २ तिय छहियचत्त ३ । ४ । इगुचत्त ५ छक्कचउसहिया । दुजुया य वीस ६ । ७ । ८ । सोलस ९ दस १० नव ११ नव १२ सत्त १३ हेऊओ ॥ ४२ ॥ जप्पच्चइओ बंधो इयदारं अवसिपंति होइ जहा । इय दारं वन्नेमी एयरसत्थो इमो होइ ॥ ४३ ॥ सो बंधो पत्तेयं कम्माण विसेसबंधहेऊहिं । नाणपओसाईहिं जह होइ तहा भणइ इन्हि ॥ ४४ ॥

पडणीयअंतराइय उवघाए तप्पओसनिन्हवणे । आवरणदुगं भूओ बंधइ अच्चासणाए य ॥ १६ ॥

टी० इह प्राकृतत्वादार्षत्वाच्च विभक्तिव्यत्ययादिना तात्पर्यव्याख्याक्रियते । तत्रावरणद्विकं-ज्ञानावरणदर्शनावरणरूपं, अत्र च ज्ञानस्य मत्यादेर्ज्ञानिनां साध्वादीनां, ज्ञानसाधनस्य च पुस्तकादेः प्रत्यनीकतया-तदनिष्टाचरणरूपया ज्ञानावरणं कर्म भूयो-अतितीव्रं बध्नातीति सण्टङ्कः । तथा अन्तरायेण-भक्तपानवस्त्रोपाश्रयलाभनिवारणादिरूपेण, उपघातेन-निर्मूलतो विनाशस्वरूपेण, तत्प्रद्वेषेण-ज्ञानादिविषये आन्तरप्रीतिरूपेण, निन्हवेन-न मया तत्समीपेऽधीतमिदमित्यादिरूपेण, अत्याशातनया च-जात्याद्युद्घट्टनादिहीलारूपतया तीव्रं ज्ञानावरणं बध्नातीति सर्वत्र द्रष्टव्यम् । एतच्चोपलक्षणमात्रमतो ज्ञानावर्णवादेन,

आचार्योपाध्यायाद्यविनयेन, अकालस्वाध्यायकरणेन, कालेन स्वाध्यायाविधानेन, प्राणिवधानृतभाषणस्तैन्याब्रह्मपरिग्रहरात्रिभोजनाऽविरमणादिभिश्च ज्ञानावरणं बध्नातीत्याद्यपि वक्तव्यमिति। एवं दर्शनावरणेऽपि वाच्यम्, नवरं दर्शनाभिलापो वाच्यः, तद्यथा–दर्शनस्य चक्षुर्दर्शनादेर्दर्शनिनां साध्वादीनां दर्शनसाधनस्य च श्रोत्रचक्षुर्नासिकादेः प्रत्यनीकतया तदनिष्टाचरणरूपतया दर्शनावरणं भूयोऽतितीव्रं बध्नातीत्येवमिहापि सम्बन्धः, एवमन्तरायादयोऽपि हेतवस्तदुचितत्वेनोत्प्रेक्ष्य योजनीयाः। अत्राप्युपलक्षणमात्रममी। ततोऽलसतया, स्वप्नशीलतया, निद्राबहुमानतो, दर्शनिनां दूषणग्रहणेन, श्रवणकर्त्तननेत्रोत्पाटननासाच्छेदजिह्वाविकर्त्तनादिना, प्राणिवधादिभिश्च दर्शनावरणं बध्नातीत्याद्यपि वाच्यमिति गाथार्थः ॥ १६ ॥ वेदनीयस्य द्विविधस्यापि बन्धहेतूनाह—

भूयाणुकंपवयजोग–उज्जओ खंतिदाण गुरुभत्तो। बंधइ भूओ सायं विवरीए बंधए इयरं ॥ १७ ॥

टी॰ भूतेषु जन्तुष्वनुकम्पा यस्य स भूतानुकम्पकः व्रतेषु–महाव्रतादिषु, योगेषु–चक्रवालसामाचर्याद्याचरणरूपेषूद्यतो व्रतयोगोद्यतः 'खंतिदाण' त्ति लुप्तमत्वर्थीयत्वात् क्षान्तिदानवानित्यर्थः, गुरुभक्तश्च, किमित्याह–बध्नाति भूयो–अतितीव्रं सातवेदनीयम्, उक्तगुणवैपरीत्ये तु बध्नाति, किमित्याह–इतरदसातवेदनीयमित्यर्थः। इदमुक्तं भवति–सानुकम्पतया, दृढधर्मतया, संयमयोगकरणशीलतया, कषायजयतया, यथोदितदानश्रद्धालुतया, बालवृद्धग्लानादिवैयावृत्त्यकरणशीलतया, मातापितृधर्माचार्यादिभक्तितः, जिनचैत्यपूजया, शुभपरिणामादिभिश्च सातवेदनीयं बध्नातीति। तथा निरनुकम्पया, शीलव्रतादिविलोपतो हस्त्यश्वबलीवर्दादिनिर्दयदमनवाहननिर्लाञ्छनीकरणादिभिः, परसद्व्यलेशोत्पादनेन, सद्धर्मकृत्यप्रमादितया,

कषायोत्कटतया, कार्पण्यभावतो मातापितृधर्माचार्यादिपूज्यजनावज्ञया, प्राणिवधादिभिश्च तीव्रमसातवेदनीयं निर्वर्तयतीति गाथार्थः ॥ १७ ॥ मोहनीयं दर्शनचारित्रमोहभेदाद् द्विधा, तत्र दर्शनमोहहेतूनाह–

अरहंत सिद्ध चेइय तव सुयगुरुसाहुसंघपडणीओ। बंधइ दंसणमोहं अणंतसंसारिओ जेणं ॥ १८ ॥

टी० अर्हत्सिद्धचैत्यतपःश्रुतगुरुसाधुसङ्घानां प्रत्यनीकोऽवर्णवादाद्यनिष्टनिर्वर्त्तको बध्नाति दर्शनमोहं–मिथ्यात्वमोहनीयं कर्म येन किमित्याह–अनन्तसंसारिको येन बद्धेन भवति जीवः। अन्यच्चोन्मार्गदेशनया, मार्गविप्रतिपत्त्या, धार्मिकजनसन्दूषणया, अदेवगुरुतत्त्वेषु देवगुरुतत्त्वबुद्ध्या, नारकसुरसिद्धादिविपरीतभावनया, चैत्यद्रव्यापहारमुनिघातप्रवचनापभ्राजनादिभिस्तीव्रं दर्शनमोहमुपरचयतीति गाथार्थः ॥ १८ ॥ इदानीं चारित्रमोहस्य–

तिव्वकसाओ बहुमोह–परिणओ रागदोससंजुत्तो। बंधइ चरित्तमोहं दुविहंपि चरित्तगुणघाई ॥ १९ ॥

टी० तीव्राः कषायाः क्रोधादयो यस्य स तथा मोहशब्देन तु विषयगार्द्ध्यालम्बनो मतिविभ्रमो विवक्षितः, ततश्च बहुमोहपरिणतो विषयगृद्धिविभ्रमितमतिरित्यर्थः, रागशब्देन चेहोद्धरितशेषाः हास्यरत्यादयो विवक्ष्यन्ते। द्वेषशब्देन च जुगुप्सादयस्ततश्चोक्तस्वरूपाभ्यां रागद्वेषाभ्यां संयुक्तः, किमित्याह–बध्नाति चारित्रमोहनीयं वक्ष्यमाणशब्दार्थं कतिविधमित्याह–द्विविधमपि कषायचारित्रमोहनीयं नोकषायचारित्रमोहनीयं चेत्यर्थः, यत्कथम्भूतमित्याह–चरित्रगुणं लब्धमपि हन्तीत्येवंशीलं चरित्रगुणघाति, यदिति अयं च सामान्यार्थो विशेषतस्त्वेवमवगन्तव्यम्, कषायचारित्रमोहनीये क्रोधादयश्चत्वारः कषायास्तत्र च तीव्रकोपोपयुक्तस्तीव्रं कोपमेव बध्नाति। तीव्रमानोपयुक्तस्तु तीव्रं मानमेवोपरचयत्येवं मायालोभयोरपि वाच्यम्।



॥३०॥

नोकषायचारित्रमोहनीये तु वेदत्रयं हास्यषट्कं च, अत्रापि कोपनोऽहङ्कारी परदाररतिप्रियो व्यलीकभाषी ईर्ष्यालुर्मायाप्रधानसमाचारः स्त्रीवेदमुपरचयति। ऋजुसमाचारो मन्दकोपो मार्दवसम्पन्नः स्वदाररतिप्रियोऽमायावी पुरुषवेदं निर्वर्त्तयति। पिशुनो निर्लाञ्छनबन्धताडनादिरतः स्त्रीणां नृणां वाऽनङ्गसेवनशीलः शीलव्रतसुस्थितपाखण्डिनां कुयुक्तिभ्यां भोगाभिलाषोत्पादनेन मार्गभ्रंशकारी तीव्रविषयरतिर्नपुंसकवेदं बध्नाति। स्वयं हसनशीलः परांश्च हासयति बहुविधं च परविप्लवं करोति, कन्दर्परतिश्च हास्यमोहनीयं बध्नाति। स्वयं च क्रीडति परांश्च क्रीडयति दुःखानुत्पादकश्च रतिमोहनीयं बध्नाति। परेषां रतिविघ्नकरोऽरत्युत्पादकः पापजनसङ्गरतिश्चारतिमोहनीयं बध्नाति। नष्टमृतादिषु स्वयं शोचति, परांश्च शोचयति परव्यसनशोकाभिनन्दी शोकमोहनीयं बध्नाति। स्वयं बिभेति परांश्च भीषयते भयमोहनीयं बध्नाति। स्वयं साधुजनादिकं जुगुप्सते परस्य जुगुप्सामुत्पादयति परं परिवादविधिशीलो जुगुप्सामोहनीयमभिनिर्वर्त्तयतीति गाथार्थः॥ १९॥ नारकादिभेदेनायुश्चतुर्धा तत्र नारकायुषो हेतूनाह—

**मिच्छद्दिट्ठी महारंभ–परिग्गहो तिव्वलोहनिस्सीलो। निरयाउयं निबंधइ पावमई रुद्दपरिणामो॥ २०॥**

टी० मिथ्यादृष्टिः सद्धर्मदूरीकृतस्तथा महान्तौ बहुजीवविघातकत्वेनारम्भपरिग्रहौ यस्य स तथा तीव्रानन्तानुबन्धिलोभो निःशीलो निर्मर्यादो व्रतनियममार्गदूरीभूतश्चाग्निरिव सर्वभक्षीत्यर्थः। सदैव पापेऽगम्यगमनापेयपानाभक्ष्यभक्षणहिंसादिलक्षणे मतिर्यस्य स तथा रौद्रपरिणामो गिरिभेदसमकषायैरौद्रध्यानरूपितचेतोवृत्तिरित्यर्थः, स किमित्याह—नारकायुर्नितरां बध्नातीति गाथार्थः॥ २०॥ तिर्यगायुषः प्राह—

उम्मग्गदेसओ मग्ग-नासओ गूढहियपमाइल्लो। सढसीलो य ससल्लो तिरियाउं बंधए जीवो ॥ २१ ॥

टी० उन्मार्गं भवहेतुं मोक्षहेतुत्वेन दिशति, मार्गं च ज्ञानादिकं नाशयत्यपलपति, गूढहृदयो नाम उदायिनृपमारकादिवदात्माभिप्रायं सर्वथैव निगूहति यथा नापरः कश्चिद्वेत्ति। माइल्लशब्देन तु वक्तहृदयो गृह्यते। सढसीलो नाम वचसा मधुरः परिणामे तु दारुणः। 'ससल्लो' त्ति रागादिवशाचीर्णनिष्कलनियमातिचारः स्वच्छन्दत्वाच्छल्यो अनालोचिताप्रतिक्रान्तो जीवः क्षितिभेदसमकषायो ऽल्पारम्भो ऽपि तिर्यगायुर्बध्नातीति गाथार्थः ॥ २१ ॥ मनुष्यायुषः प्राह—

पयईइ तणुकसाओ दाणरओ सीलसंजमविहूणो। मज्झिमगुणेहि जुत्तो मणुयाउं बंधए जीवो ॥ २२ ॥

टी० प्रकृत्या स्वभावेनैव तनुकषायो रेणुराजिसमानकषाय इत्यर्थः, उपलक्षणं चैतत्तथा प्रकृत्या भद्रको विनीतः, सदयो ऽमत्सर इत्यपि द्रष्टव्यम्। यत्र तत्र वा दानरतः शीलसंयमवियुक्तस्तद्युक्तो हि जन्मसम्भवे देवायुरेव बध्नीयादिति भावः। किं बहुना। क्षान्तिविनयादिभिर्मध्यमैस्तदुचितैः कैश्चिद् गुणैर्युक्तो जीवो मनुष्यायुर्बध्नाति। ततो ऽधमगुणस्य नरकतिर्यगायुःसम्भवादुत्तमगुणस्य तु सिद्धेः सुरलोकायुषो वा सम्भवादिति भाव इति गाथार्थः ॥ २२ ॥ इदानीं देवायुषः प्राह—

अणुवयमहव्वएहि य बालतवाकामनिज्जराए य। देवाउयं निबंधइ सम्मदिट्ठी उ जो जीवो ॥ २३ ॥

टी० अणुव्रतग्रहणेन देशविरतः श्रावकः सूचितः। स चाविराधितविरतिगुणो देवायुर्नियतं बध्नातीति योगः। महाव्रतग्रहणेन तु सरागसंयतो गृहीतः, सो ऽपि देवायुर्बध्नाति। वीतरागस्त्वतिविशुद्धत्वादायुर्न बध्नात्येव। गोलनापरिणाम एव तस्य बध्यमानत्वादिति। बालतपोग्रहणेन त्वनधिगतपरमार्थस्वभावा अज्ञानपूर्वकनिर्वर्तिततपःप्रभृतिकष्टविशेषा मिथ्या-

दृष्टयो गृह्यन्ते । एतेऽप्यात्मगुणानुरूपं किञ्चिद्देवायुर्बध्नन्ति, न तु सम्यग्दृष्टिवद्विशिष्टमिति । तथा अकामस्यानिच्छतो निर्जरा-कर्मविघटनमकामनिर्जरा तया च, एतदुक्तं भवति–' अकामतण्हाए 'अकामछुहाए अकामबंभचेरवासेणं अकामसीयायवदंसमसग 'अण्हाणगसेयजल्लमलपंकपरिग्गहेण दीहरोगचारगनिरोहबंधणयाए गिरितरुसिहरनिवडणयाए जलजलणपवेसअणसणाइहि य' उदकराजिसमानकषायत्वे तदुचितशुभपरिणामे च सति व्यन्तरादिमायोग्यं किञ्चिद्देवायुर्बध्यते । सम्यग्दृष्टिग्रहणेन स्वविरतसम्यग्दृष्टिर्गृह्यते । सोऽप्यविराधितसम्यक्त्वगुणो देवायुर्बध्नातीति गाथार्थः ॥ २३ ॥ नामकर्म यद्यपि द्विचत्वारिंशदादिभेदादनेकधा, तथापि शुभाशुभभेदविवक्षया द्विविधमेवेति । द्विविधस्यापि बन्धहेतूनाह—

**मणवयणकायवंको माइल्लो गारवेहि पडिबद्धो । असुहं बंधइ नामं तप्पडिवक्खेहि सुहनामं ॥ २४ ॥**

टी॰ मनोवाक्कायवक्रः कषायचतुष्टयावेशपूर्वकचिन्तनभाषणचेष्टाप्रवृत्तिरित्यर्थः, तत्रापि मायाकषायस्याधिक्यप्रदर्शनार्थमाह–' माइल्लो ' त्ति सर्वत्र मायाप्रधानसमाचार इत्यर्थः। गौरवेषु–ऋद्धिरससातलक्षणेषु प्रतिबद्धोऽशुभं–नरकगत्ययशःकीर्त्येकेन्द्रियजात्यादिरूपं, नामकर्म बध्नाति । उक्तदोषप्रतिपक्षैस्तु प्राञ्जलमनोव्यापारादिभिर्देवगत्यादिकं शुभनाम बध्नात्येतदुक्तं भवति–क्रोधाद्युत्कटतया प्राणिगणाङ्गोपाङ्गादिकर्त्तनया परैरूप्यापादनेन, परनिरीक्षितभाषितगत्यादिचेष्टोपहासेन, विशिष्टद्रव्यान्तर्गतकुद्रव्यविक्रयेण, स्वभावतो वर्णगन्धादिरहितद्रव्याणां कृत्रिमतदुत्पादनेन, कृत्रिमहेमरत्नघुसृणघनसारादि-

---

१ अकामतृष्णयाऽकामक्षुधयाऽकामब्रह्मचर्यवासेनाकामशीतातपदंशमशकास्नानकस्वेदजलमलपङ्कपरिग्रहेण दीर्घरोगचारकनिरोधबन्धतया गिरितरुशिखरनिपतनया जलज्वलनप्रवेशनानशनादिभिश्च ।

निर्वर्त्तनेन, सर्वत्र विसंवादिव्यवहारतया, प्राणिवधादिभिश्चाशुभं नाम निर्वर्त्तयति। विपर्यये तु विपर्यय इति गाथार्थः ॥ २४ ॥

गोत्रस्य द्विविधस्यापि बन्धहेतूनाह—

अरहंताइसु भत्तो सुत्तरुई पयणुमाण गुणपेही। बंधइ उच्चागोयं विवरीए बंधइ अ इअरं ॥ २५ ॥

टी० अर्हतामादिशब्दात् सिद्धाचार्योपाध्यायसाधुचैत्यानामन्येषां च गुणगरिष्ठानां भक्तः—बहुमानपरस्तथा सूत्ररुचिः किमुक्तं भवति—जिनवचनमनवरतं स्वयं पठति, परांश्च पाठयत्यर्थतश्च स्वयमभीक्ष्णं विमृशति, परेषां च व्याख्यानयति, असत्यां वा तत्पठनादिशक्तौ तीव्रबहुमानतस्तदुक्तमर्थं श्रद्दधानोऽपि सूत्ररुचिरित्युच्यते। तथा प्रतनुमानो विशिष्टजातिकुलरूपैश्वर्यादिसम्पन्नोऽपि निरहङ्कारः परापरिभवनशीलः, तथा गुणप्रेक्षी यस्य यावन्तं गुणं पश्यति तस्य तमेव प्रेक्षते, दोषेषु सत्स्वप्युदास्त इत्यर्थः। गुणाधिकेषु च नीचैर्वृत्त्या वर्त्तमानः परपरिवादादिदोषरहितश्च उच्चैर्गोत्रं बध्नाति। भणितगुणविपर्यये तु नीचैर्गोत्रं बध्नातीति गाथार्थः ॥ २५ ॥ साम्प्रतमन्तरायस्य बन्धहेतूनाह—

पाणिवहाईसु रओ जिणपूयामोक्खमग्गविग्घकरो। अज्जेइ अंतरायं न लहइ जेणिच्छियं लाभं ॥ २६ ॥

टी० प्राणातिपातानृतभाषणादिरतो जिनपूजाविघ्नकरः सावद्यादिदोषोपेतत्वाद् गृहिणामप्येषा अविधेयेत्यादि कुदेशनादिभिः समयान्तस्तत्त्वदूरीकृतो जिनपूजानिषेधक इत्यर्थः। तथा मोक्षमार्गस्य ज्ञानादेर्विघ्नकरस्तद्दोषग्रहणादिना केनचित्प्रकारेण तस्य विघ्नं करोति। साधुभ्यो वा भक्तपानोपाश्रयोपकरणभेषजादिकं दीयमानं निवारयति। तेन चैतत्कुर्वता मोक्षमार्गः सर्वोऽपि विघ्नितो भवति। तथा अपरेषामपि सत्त्वानां दानलाभभोगपरिभोगविघ्नं करोति, मन्त्रादिप्रयोगेण च

परस्य वीर्यमपहरति । हताच्च बन्धनिरोधादिभिः परं निश्चेष्टं करोति । छेदनभेदनादिभिः परस्येन्द्रियशक्तिमुपहन्ति स किमित्याह–अर्जयति–निर्वर्त्तयति पञ्चमप्रकारमप्यन्तरायं कर्म, येनार्जितेन सता दानभोगादिलाभमीप्सितं कञ्चिन्न लभत इति गाथार्थः ॥ २६ ॥ तदेवं सामान्यतो विशेषतश्च कर्म्मणः प्रत्यया निरूपिताः, साम्प्रतं द्वारगाथाद्वये यत् प्रतिज्ञातं 'जेसु ठाणेसु बंधं उदयमुदीरणाहिं चे'त्यादि तत्प्रतन्यते । तत्र बन्धस्थानानि तावन्मूलप्रकृतीनां चत्वारि भवन्ति । तद्यथा–सप्तविधबन्धोऽष्टविधबन्धः षड्विधबन्ध एकविधबन्धश्चेति । तत्र सूक्ष्मसम्परायादर्वाक् सर्वसंसारिणामायुर्बन्धकालादन्यत्र प्रतिसमयमायुर्वर्ज्याः सप्त कर्मप्रकृतीर्बध्नतां सप्तविधबन्धः । तेषामेव यथासम्भवमायुर्बध्नतामष्टविधबन्धः । सूक्ष्मसम्परायस्य त्वेकस्य मोहायुर्वर्ज्याः षट्प्रकृतीर्बध्नतः षड्विधबन्धः । उपशान्तमोहादीनां त्वेकमेव सातं बध्नतामेकविधबन्धः । उदयस्थानानि तु त्रीणि भवन्ति, तद्यथा–अष्टविधोदयः सप्तविधोदयश्चतुर्विधोदयश्चेति । तत्रोपशान्तमोहादर्वागष्टानामपि कर्म्मप्रकृतीनां वेदनादष्टविधोदयः । उपशान्ते क्षीणे वा मोहनीयकर्म्मणि सप्तविधोदयः । घातिकर्म्मक्षये चतुर्विधोदयः । उदीरणायां तु पञ्च स्थानानि भवन्ति, तद्यथा–अष्टविधस्योदीरणा सप्तविधस्य षड्विधस्य पञ्चविधस्य द्विविधस्य चेति । तत्र परिपूर्णा अष्टापि कर्म्मप्रकृतीरुदीरयतामष्टविधस्योदीरणा भवति । वक्ष्यमाणयुक्त्या त्वायुष उदीरणायामपगतायां सप्तविधस्य, वेदनीयायुषोस्तूदीरणायामपगतायां षड्विधस्य, वेदनीयायुर्मोहनीयोदीरणायां त्वपगतायां पञ्चविधस्य, नामगोत्रे एव केवले उदीरयतां क्षीणमोहसयोगिकेवलिनां द्विविधस्योदीरणा भवति । तदुक्तं–" [1]बंधट्ठाणा चउरो तिन्नि य उदयस्स हुंति ठाणाणि । पंच य

१ बन्धस्थानानि चत्वारि त्रीणि चोदयस्य भवन्ति स्थानानि । पञ्च चोदीरणाया मूलप्रकृतिषु स्थानानि (संयोगमत पर्व सम्भे) ॥ १ ॥

उदीरणाए मूलपयडीसु ठाणाणि ( संजोगं अओ परं वोच्छं) ॥ १ ॥" इयं च गाथा किञ्चिद्वाचनाभेदतः सूत्रेऽपि दृश्यते । किन्तु प्रक्षेपकत्वान्न प्रत्यक्षरं विव्रियते । स्वयं सूत्रानुसारतो भावनीयेति । तत्र यथोद्देशं निर्देश इति कृत्वा बन्धस्थानानि तावद्गुणस्थानेषु चिन्तयति–

भा० पडणीय अंतराइय इच्चाइ इगारसाहि गाहाहिं । तासिं अत्थो सुगमो अह य भणइ जेसु ठाणेसु ॥ ४५ ॥ बंधं उदय-मुदीरणविहिं च पयस्स एस भावत्थो । जेसु ठाणेसु गुणसन्निएसुं बंधाइया हुंति ॥ ४६ ॥ तिन्निवि दाराओ तत्थ बंध-ठाणा उ मूलपयडीणं । बंधट्ठाण इमाए गाहाए आह तहि पढमं ॥ ४७ ॥ बंधुदयुदीरणाणं भावत्थोऽयं भणिज्जइ तत्थ । मिच्छाइबंधहेऊहिं वाससुन्नससुगोव्व ॥ ४८ ॥ सव्वत्तोवि हु पुग्गल-निचिए लोयम्मि कम्मजोगेहिं । इह कम्मवग्गणा पुग्गलेहि जीवस्स सव्वचो ॥ ४९ ॥ अग्गीअयपिंडो इव अन्नोन्नाणुगयसरिससंबंधो । बंधो भन्नइ तेसिं जहट्ठिइए अबद्धाणं ॥ ५० ॥ पुग्गलाणं अपवत्तग-करणविसेसा सभावओ वावि । उदयप्पत्ताण विवाग-वेयणं होइ इह उदओ ॥ ५१ ॥ तेसिंपि पुग्गलाणं अकालपत्ताण उदयआवलिया । समइच्छियाण जीव-प्पभावओ तत्थ दुइयाए ॥ ५२ ॥ जं किर उदयावलिए पवेसणं सा उदीरणा भणिया । तिन्हंपि य संजोगो (गं) एयपयत्थो सुगम पत्र ॥ ५३ ॥ एगछसगट्ठभेया बंधट्ठाणा हवंति ते चउरो । चउसत्तअट्ठउदय-ट्ठाणा सत्तट्ठ छप्पंच ॥ ५४ ॥ दुन्नि य उदीरणाए इय भावणिया उ वित्तिओ नेया । अह पत्तेयं पभणइ बंधुदयाईणि उ गुणेसु ॥ ५५ ॥

१ 'बन्धट्ठाणाचउरो' इति प्रक्षिप्तगाथया ।

छसु ठाणगेसु सत्तट्ठविहं बंधंति तिसु य सत्तविहं । छव्विहमेगो तिन्नेगबंधगाऽबंधगो एगो ॥ २७ ॥

टी० मिथ्यादृष्टिसास्वादनाविरतदेशविरतप्रमत्ताप्रमत्तगुणस्थानलक्षणेषु षट्सु स्थानेषु वर्त्तमाना जीवाः सप्तविधमष्टविधं वा बध्नन्ति । तत्रायुर्बन्धकालादन्यत्रानुसमयं सप्तविधं बध्नन्ति । आयुर्बन्धकाले त्वायुषा सहाष्टविधं बध्नन्ति । 'तिसु य सत्तविहं' ति चः पुनरर्थे, त्रिषु पुनः सम्यग्मिथ्यादृष्ट्यपूर्वकरणानिवृत्तिबादरगुणस्थानेषु वर्त्तमाना जन्तवः सप्तविधमेव बध्नन्ति । सम्यग्मिथ्यादृष्टिर्हि तद्भावे वर्त्तमानो न म्रियते नाप्यायुर्बध्नाति तत्स्वाभाव्यादितरयोस्त्वतिविशुद्धत्वात् तद्बन्धाभाव इति । एकः पुनः सूक्ष्मसम्परायो मोहनीयायुर्वर्ज्याः षडेव प्रकृतीर्बध्नाति । मोहनीयस्य बादरसम्परायहेतुत्वादस्य च तदभावादायुषस्तु घोलनापरिणामनिवर्त्यत्वादस्य चातिविशुद्धत्वात् तद्बन्धाभावः । त्रयस्तूपशान्तक्षीणमोहसयोगिकेवलिनो योगव्यापारादेकं सातावेदनीयं बध्नन्ति, न शेषाणि तद्बन्धहेत्वभावादिति । एकस्त्वयोगिकेवली योगव्यापारस्याप्यभावादबन्धक इति गाथार्थः ॥२७॥ तदेवं सामान्यतो बन्धविधिर्गुणस्थानेष्वभिहितः । साम्प्रतं तेष्वेवोदयविधिमाह—

भा० छसु पढमाइगाहाछगं तहिं छसु इमाएँ गाहाए । बंध तहिं इगदुगचउपणछगसत्तसु गुणेसु छसु ॥ ५६ ॥ बंधंति सगट्ठविहं आउयबंधो अ नत्थि सत्तविहं । अट्ठविहमाउबंधे सत्त तिअट्ठमनवगुणेसु ॥५७॥ आउविणा तह सुहुमे मोहेण विणा उ छच्च तह तिन्नि । उवसंताई सायं बंधंति अबंधगो जोगी ॥ ५८ ॥

सत्तट्ठविहछ(विह)बंधगा वि वेयंति अट्ठगं नियमा । एगविहबंधगा पुण चत्तारि व सत्त वेयंति ॥२८॥

टी० इह यथासम्भवं ये सप्तविधबन्धका अष्टविधबन्धकाः षड्विधबन्धकाश्चानन्तरं मिथ्यादृष्ट्यादयः सूक्ष्मसम्परायान्ता

उदीरणाए मूलपयडीसु ठाणाणि ( संजोगं अओ परं वोच्छं) ॥ १ ॥" इयं च गाथा किञ्चिद्वाचनाभेदतः सूत्रेऽपि दृश्यते। किन्तु प्रक्षेपकत्वान्न प्रत्यक्षरं विव्रियते। स्वयं सूक्तानुसारतो भावनीयेति । तत्र यथोद्देशं निर्देश इति कृत्वा बन्धस्थानानि तावद्गुणस्थानेषु चिन्तयति-

भा० पडणीय अंतराइय इच्चाइ इगारसाहि गाहाहिं। तासिं अत्थो सुगमो अह य भणइ जेसु ठाणेसु ॥ ४५ ॥ बंधं उदयमुदीरणतिहिं च एयस्स एस भावत्थो। जेसु ठाणेसु गुणसन्निएसुं बंधाइया हुंति ॥ ४६ ॥ तिन्निवि दाराओ तत्थ बंधठाणा उ मूलपयडीणं । बंधट्ठाण इमाए गाहाए आह तहि पढमं ॥ ४७ ॥ बंधुदयुदीरणाणं भावत्थोऽयं भणिज्जइ तत्थ। मिच्छाइबंधहेऊहिं वासपुन्नसमुग्गोव ॥ ४८ ॥ सव्वत्तोवि हु पुग्गल-निचिए लोयम्मि कम्मजोगेहिं । इह कम्मवग्गणा पुग्गलेहि जीवस्स सव्वत्तो ॥ ४९ ॥ अग्गीअयपिंडो इव अन्नोन्नाणुगमसरिससंबंधो। बंधो भन्नइ तेसिं जहट्ठिईए अवट्ठाणं ॥ ५० ॥ पुग्गलाणं अपवत्तण-करणविसेसा सभावओ यावि। उदयप्पत्ताण विवाग-वेयणं होइ इह उदओ ॥ ५१ ॥ तेसिंपि पुग्गलाणं अकालपत्ताण उदयआवलिया। समइच्छियाण जीव-प्पभावओ तत्थ छुहणाए ॥ ५२ ॥ जं किर उदयावलिए पवेसणं सा उदीरणा भणिया। तिन्हंपि य संजोगो (गं) एयपयत्थो सुगम एव ॥ ५३ ॥ एगछसगट्ठभेया बंधट्ठाणा हवंति ते चउरो। चउसत्तअट्ठउदय-ट्ठाणा सत्तट्ठ छप्पंच ॥ ५४ ॥ दुन्नि य उदीरणाए इय भावणिया उ वित्तिओ नेया। अह पत्तेयं पभणइ बंधुदयाईणि उ गुणेसु ॥ ५५ ॥

१ 'बन्धट्ठाणाचउरो' इति प्रक्षिप्तगाथया।

छसु ठाणगेसु सत्तट्ठविहं बंधंति तिसु य सत्तविहं । छव्विहमेगो तिन्नेगबंधगाऽबंधगो एगो ॥ २७ ॥

टी० मिथ्यादृष्टिसास्वादनाविरतदेशविरतप्रमत्ताप्रमत्तगुणस्थानलक्षणेषु षट्सु स्थानेषु वर्त्तमाना जीवाः सप्तविधम-ष्टविधं वा बध्नन्ति । तत्रायुर्बन्धकालादन्यत्रानुसमयं सप्तविधं बध्नन्ति । आयुर्बन्धकाले त्वायुषा सहाष्टविधं बध्नन्ति । 'तिसु य सत्तविहं' ति चः पुनरर्थे, त्रिषु पुनः सम्यग्मिथ्यादृष्ट्यपूर्वकरणानिवृत्तिबादरगुणस्थानेषु वर्त्तमाना जन्तवः सप्तविधमेव बध्नन्ति । सम्यग्मिथ्यादृष्टिर्हि तद्भावे वर्त्तमानो न म्रियते नाप्यायुर्बध्नाति तत्स्वाभाव्यादितरयोस्त्वतिविशुद्ध-त्वात् तद्बन्धाभाव इति । एकः पुनः सूक्ष्मसम्परायो मोहनीयायुर्वर्ज्याः षडेव प्रकृतीर्बध्नाति । मोहनीयस्य बादरसम्पराय-हेतुत्वादस्य च तदभावादायुषस्तु 'घोलनापरिणामनिवर्त्यत्वादस्य चातिविशुद्धत्वात् तद्बन्धाभावः । त्रयस्तूपशान्तक्षीणमोह-सयोगिकेवलिनो योगव्यापारादेकं सातवेदनीयं बध्नन्ति, न शेषाणि तद्बन्धहेत्वभावादिति । एकस्त्वयोगिकेवली योगव्या-पारस्याप्यभावादबन्धक इति गाथार्थः ॥२७॥ तदेवं सामान्यतो बन्धविधिर्गुणस्थानेष्वभिहितः । साम्प्रतं तेष्वेवोदयविधिमाह—

भा० छसु एवमाइगाहाछगं तहिं छसु इमाएँ गाहाए । बंध तहिं इगदुगचउपणछगसत्तसु गुणेसु छसु ॥ ५६ ॥ बंधंति सगट्ठविहं आउयबंधो अ नत्थि सत्तविहं । अट्ठविहमाउबंधे सत्त तिअट्ठमनवगुणेसु ॥५७॥ आउविणा तह सुहुमे मोहेण विणा उ छच्च तह तिन्नि । उवसंताई सायं बंधंति अबंधगो जोगी ॥ ५८ ॥

सत्तट्ठविहछ(विह)बंधगा वि वेयंति अट्ठगं नियमा । एगविहबंधगा पुण चत्तारि व सत्त वेयंति ॥२८॥

टी० इह यथासम्भवं ये सप्तविधबन्धका अष्टविधबन्धकाः षड्विधबन्धकाश्चानन्तरं मिथ्यादृष्ट्यादयः सूक्ष्मसम्परायान्ता

उक्तास्ते सर्वेऽपि नियमात्-निश्चयेन परिपूर्णं कर्माष्टकमपि वेदयन्ति, मोहादीनां तेषु क्षयाद्यभावादिति भावः। एकविधबन्धकाः पुनरुपशान्तक्षीणमोहसयोगिकेवलिनश्चत्वारि सप्त वा कर्माणि वेदयन्ति। तत्र घातिकर्मक्षयात् केवली चत्वारि भवोपग्राहीणि वेदयति। उपशान्तक्षीणमोहौ तु मोहोदयाभावाच्छेषाणि सप्त वेदयत इति भावनीयम्। अपरं चेह वा शब्दस्याव्ययत्वेनानेकार्थत्वादिदमपि सूचितं द्रष्टव्यम्, यदुताबन्धकोऽप्ययोगी चत्वारि भवोपग्राहीणि वेदयतीति गाथार्थः ॥ २८ ॥ इदानीमुदीरणाविधिमाह-

भा० सत्तट्ठगाहा उदओ तहि छसत्तट्ठबंधगा दससु। इगबंधा उवसंताईसुं तीसुं इह गुणेसु ॥५९॥ उदओ मिच्छाइदससु अट्ठुदयुवसंमि खीणि सत्तेव। मोहविणा भुवणगइचउरूमा जोगजोगिम्मि ॥ ६० ॥ वासद्दो बहुअत्थो तो वासद्दा इमंपि विन्नेयं। अब्बंधगो य जोगी वेयइ चत्तारि कम्माणि ॥ ६१ ॥ उदयं भणित्तु पभणइ उदीरणं मिच्छादिट्ठि एमाई। गाहाणं चउगेणं तस्स पुणो एस भावत्थो ॥६२॥ उदीरणाएँ आइदुचउपणछसु सत्तड तइए अट्ठ। सगडनवदसगुणेसुं वेयणियाउय विणा छच्च ॥ ६३ ॥ दसमाइसु तिसु पंच उ मोहाऊवेयरहिय तह खीणे। जोगिम्मि य दो गोयं नामं च अजोगि नोदीरे ॥६४॥

मिच्छादिट्ठिप्पभिई अट्ठ उईरंति जा पमत्तो ति। अद्धावलियासेसे तहेव सत्तेवुदीरिंति ॥ २९ ॥

टी० मिथ्यादृष्टेः प्रभृति यावत्प्रमत्तसंयतो यावदद्याप्यावलिकावशेषमात्मीयमायुर्न भवति, तावत्सर्वेऽप्यमी निरन्तरमष्टापि प्रकृतीरुदीरयन्ति, तदुदीरणायोग्याध्यवसायस्य सर्वेष्वपि भावात्। उदीरणास्वरूपं तु प्रागुक्तवद्भावनीयम्। आवलिकावशेषे स्वायुषि तर्हि का वार्त्तेत्याह-'अद्धे'त्यादि,-अद्धा कालस्तत्प्रधानारूपा आवलिका अद्धावलिका।

नामस्थापनाद्यावलिकाव्यवच्छेदेन कालरूपा आवलिकेत्यर्थः । सैवाद्धावलिकाशेषा यत्र तदद्धावलिकाशेषं तस्मिन्नद्धावलिकाशेषे आयुषि यथैव पूर्वमुदीरितवन्तस्तथैव ते उदीरयन्ति, किन्तु सप्तैव प्रकृतीर्न त्वायुष्कम् । आवलिकाशेषस्य तस्योदीरणायाः प्रतिषिद्धत्वादिदमुक्तं भवति–प्रचुरस्थितिकमायुः प्रतिसमयं वेद्यमानं तावदुदीर्यते, यावन्मरणसमये आवलिका शेषा तन्मात्रं च तदनुदीर्यमाणमेव वेद्यते तस्याभाव्यादिति । एवमुत्तरत्रापि सर्वत्र भावनीयमिति । अत्र चाविशेषोक्तावपि सम्यग्मिथ्यादृष्टिरष्टैवोदीरयति, न तु कदाचनापि सप्तेति विशेषो द्रष्टव्यः । सम्यग्मिथ्यादृष्ट्यायुष आवलिकावशेषताया अभावात्, तथायुष्यन्तर्मुहूर्त्तावशेष एव तद्भावं परित्यज्य सम्यक्त्वं मिथ्यात्वं वा नियमात् प्रतिपद्यत इत्यायुष्कस्यावलिकावशेषकालेऽसौ सम्यग्दृष्टिर्वा स्याद् मिथ्यादृष्टिर्वा, न मिश्र इति नास्य सप्तविधोदीरणासम्भव इति गाथार्थः ॥ २९ ॥

भा० मिच्छाइयगाहाए अट्ठ उईरंति इइ च वुत्ते वि । मीसस्सट्ठविहोदीरणा य न हु होइ सत्तविहा ॥ ६५ ॥ मिस्से मिस्सत्तेतर (मिस्सा मिच्छेतत्तर) मुहुत्तमेत्ते य एइ आउंमि । सत्तविहउदीरणया आवलिमेत्ता कहं तत्थ ॥ ६६ ॥ आवलियाए अद्धाविसेसणा नामठवणमाईणं । आवलियाण वुदासेण एत्थ कालावली गज्झा ॥ ६७ ॥

वेयणियाउयवज्जे छक्कम्म उदीरयंति चत्तारि । अद्धावलियासेसे सुहुमो उइरेइ पंचेव ॥ ३० ॥

टी० वेदनीयायुषी वर्जयित्वा शेषाणि षट्कर्माणि चत्वारो जना अप्रमत्तापूर्वकरणाऽनिवृत्तिबादरसूक्ष्मसम्परायलक्षणा उदीरयन्ति, अतिविशुद्धत्वेन वेदनीयायुरुदीरणायोग्याध्यवसायाभावादिह च सूक्ष्मसम्परायस्य षण्णामुदीरणा तावदेव द्रष्टव्या यावदद्यापि मोहनीयमावलिकाशेषं न भवति । तन्मात्रे तर्हि तस्मिन् किं करोति ? इत्याह–अद्धावलिकाशेषे

आवलिकामात्रावशेषे मोहनीयकर्म्मणीति शेषः, सूक्ष्मसम्परायः पञ्चैव ज्ञानदर्शनावरणनामगोत्रान्तरायलक्षणाः प्रकृतीरुदीरयति । आवलिकागतमोहनीयस्योदीरणाभावादिति गाथार्थः ॥ ३० ॥

वेयणियाउयमोहे वज्ज उईरेति दोन्नि पंचेव । अद्धावलियासेसे नामं गोयं च अकसाई ॥ ३१ ॥

टी० वेदनीयायुर्मोहान् वर्जयित्वा शेषाणि पञ्च कर्म्माणि 'दोन्नि' त्ति द्वौ उपशान्तक्षीणमोहावुदीरयतः । तत्र मोहनीयमुदयाभावान्नोदीरयतो 'वेद्यमानमेवोदीर्यते' इतिवचनाद्वेदनीयायुषोस्तु कारणं पूर्वोक्तमेव । ननु किं द्वावपि सर्वदैवैतान्युदीरयतः? नेत्याह–अद्धावलिकाशेषे आवलिकामात्रं प्रविष्टे ज्ञानदर्शनान्तरायकर्म्मणीति शेषः । नामगोत्राख्ये द्वे एव कर्म्मणी उदीरयति । कः ? इत्याह–' अकसाइ ' त्ति न विद्यन्ते कषाया अस्येति ' सर्वधनादे'राकृतिगणत्वान्मत्वर्थीय इन् अकषायी क्षीणमोह इत्यर्थः । इदमुक्तं भवति–क्षीणमोहो ज्ञानदर्शनावरणान्तरायाणि क्षपयन् प्रतिसमयं तावदुदीरयति, यावत्केवलोत्पत्तिमत्यासन्नावावलिकामशेषाणि भवन्ति, तत ऊर्ध्वमनुदीरयन्नेव क्षपयत्यावलिकागतानामुदीरणाभावादिति तदा नामगोत्रयोरेवास्योदीरणासम्भवः । उपशान्तमोहस्तु सर्वदा पञ्चैवोदीरयति, तस्य ज्ञानावरणादीनां क्षयाभावेनावलिकाप्रवेशाभावादिति गाथार्थः ॥ ३१ ॥

उइरेइ नामगोए छक्कम्मविवज्जिया सयोगी उ । वट्टंतो उ अजोगी न किंचि कम्मं उईरेइ ॥ ३२ ॥

टी० सयोगिकेवली पुनर्ज्ञानदर्शनावरणवेदनीयमोहनीयायुष्कान्तरायाणि षट्कर्माणि वर्जयित्वा शेषे नामगोत्राख्ये द्वे एव कर्मणी उदीरयति, वेद्यमानमेव ह्युदीर्यते । तत्र घातिचतुष्टयस्य क्षीणत्वाद्वेदनमेव नास्तीति कुतस्तदुदीरणा स्याद्वेदनीयायुषोस्तूदीरणा प्रागेवोपरतेति नामगोत्रयोरेवेहोदीरणा । ' वट्टंतो उ " इत्यादि । तुः पुनरर्थे तस्य च व्यवहितसम्बन्धोऽ-

योगी पुनर्न किञ्चित्कर्मोदीरयति । कथम्भूतो वर्त्तमानो भवोपग्राहिकर्मचतुष्टयोदयेऽपीति शेषः । ननु यदि तदुदयेऽसौ वर्त्तते तर्हि तानि किमिति नोदीरयतीति चेत् ? उच्यते—उदये सत्यपि योगसव्यपेक्षत्वादुदीरणायास्तस्य च योगाभावादिति गाथार्थः ॥ ३२ ॥ तदेवं बन्धोदयोदीरणाः प्रत्येकं गुणस्थानेपूक्ताः । साम्प्रतं तासामेव सम्भवत इयतीः प्रकृतीर्बध्नंस्तत्सम-कालमेव इयतीर्वेदयति, इयतीश्च उदीरयतीत्येवंलक्षणः संयोगः प्रतिगुणस्थानं पश्चानुपूर्व्याऽयोगिगुणस्थानादारभ्य चिन्त्यते ।

भा० बंधाइतिगं भणियं अह पत्थणुपुविए गुणेसुंपि । तिन्हंपि य संजोगो इयदारं पभणई तत्थ ॥ ६८ ॥

अणुदीरंत अयोगी अणुहवइ चउव्विहं गुणविसालो । इरियावहं न बंधइ आसन्नपुरक्खडोसंतो ॥ ३३ ॥

टी० अयोगिकेवली गुणैर्दर्शनज्ञानचारित्रलक्षणैर्विशालो विस्तीर्णः प्रकर्षप्राप्त इत्यर्थः । स किमित्याह—उदीरणा-विरहितत्वादनुदीरयन्नेव चतुर्विधमघातिचतुष्टयमनुभवति—वेदयति । बन्धमाश्रित्याह—'इरिये'त्यादि । ईरणमीर्या मिथ्या-त्वाविरतिकषायरहितः केवलयोगव्यापार इत्यर्थः, सैव ईर्या जीवशुद्धप्रवेशे पन्था मार्गो यस्य तदीर्यापन्था ईर्यामात्रप्रत्ययं साता-वेदनीयमित्यर्थः, तत्किल पूर्वैरुपशान्तमोहादिभिर्बद्धं अयं पुनस्तदपि न बध्नाति, तत्प्रत्यययोगव्यापाराभावात् । कथम्भूतः सन्नित्याह—'आसन्ने'त्यादि । इह सन् पदेन मोक्ष उच्यते तस्यैव वस्तुवृत्त्या सत्त्वात् । संसारावस्थाविशेषा हि सर्वे कर्ममल-पटलाच्छादितत्वात्, स्वरूपालाभरूपत्वात्, आसन्नः जीवानां वस्तुतोऽसन्तएव. मोक्षपर्यायस्तु कर्ममलपटलविनिर्मुक्तत्वात्, स्वरूपलाभरूपत्वात् सन् उच्यते ततश्च 'पुरक्खडो' इत्युकारस्यालाक्षणिकत्वादासन्नः पुरस्कृतोऽग्रीकृतः सन् मोक्षो येन स आस-न्नपुरस्कृतः सन्, इदमुक्तं भवति—आसन्नमोक्षस्त्वयोगिकेवली अबन्धकोऽनुदीरयंश्चतुर्विधं वेदयतीति गाथार्थः ॥ ३३ ॥

भा० भजोगिरियागहियं गायतेयं पि नेव बंधेइ । आसन्न नियडवत्ती पुरक्खडो सम्मुहो य कओ ॥ ६९ ॥ मंतो
पोरखो जेणं सो भागतपुरक्खडोसंतो । जुयइ पुरक्खडो इह सद्दे ओ (उ) क्खवणविहीणो ॥ ७० ॥

इरियावहमाउत्ता चत्तारि व सत्त चेव वेयंति । उइरिंति दोन्नि पंच व संसारगयम्मि भयणिज्जो ॥ ३४ ॥

टी० अनुस्वारस्य गाथाणिकत्वादीर्यापथे सातावेदनीयकर्मण्यायुक्ता ईर्यापथायुक्ताः—सातवेदनीयबन्धका उपशान्तक्षीण-
मोहसयोगिकेवलीन इत्यर्थः । अमी सातबन्धकाः सन्तो यथासम्भवं चत्वारि वा सप्त वा कर्माणि वेदयन्ति । तत्र सयोगिकेवली
चत्वारि वेदयति, इतरौ तु मोहोदयरहितत्वात् सप्तेति । उदीरयन्ति पुनर्यथासम्भवं द्वे पञ्च वा कर्माणि । सयोगिकेवली नाम-
गोत्राख्ये द्वे एव कर्मणी उदीरयति । तथा क्षीणमोहोऽपि ज्ञानदर्शनावरणान्तरायेष्वावलिकाऽप्रविष्टेषु पञ्च उदीरयति, ततः पूर्वं
पूर्वोक्तयुक्त्या द्वे एवोदीरयति । उपशान्तमोहस्तु सर्वदा पञ्चैवेति । इदमुक्तं भवति—उपशान्तमोहः सातमेकं बध्नन् सप्त कर्माणि वेदयति,
पञ्च उदीरयति । क्षीणमोहस्तु सातमेकं बध्नन् सप्तकर्माणि वेदयति, पञ्च द्वे वा उदीरयति । सयोगिकेवली तु सातमेकं बध्नाति,
चत्वारि भवोपग्राहीणि वेदयति, द्वे नामगोत्रे उदीरयतीति । अत्र प्रासङ्गिकमाह—संसारगते—संसारशेषे संसारविषये वा भजनीयो—
विकल्पनीयोऽस्य उपशान्तादिः कस्यचिदस्ति संसारः कस्यचिन्नास्तीत्यर्थः, क्षीणमोहसयोगिकेवलिनोर्नास्ति पुनः संसार-
स्तद्भवसिद्धिकत्वात् । उपशान्तमोहस्य तु स्यादपुद्गलरूपः अपार्द्धपुद्गलपरावर्त्तसंसारोऽस्त्यादिति गाथार्थः ॥ ३४ ॥

भा० इरियावहमाउत्ता सजोगिखीणोवसंतगा भणिया । जोगि चउ खीणुवसमा सग वेयोदीरणाए उ ॥ ७१ ॥ जोगी
दो खीणो पुण आवरणदुगंमि निग्घणगम्मि । आवलिया अपविट्ठे पण तदुवरि दुन्नुदीरेइ ॥ ७२ ॥ संसारगयम्मि त्ति य

संसारभमणविसयम्मि भयणिज्जा । उवसंतो संसारी, सजोगि खीणा असंसारी ॥ ७३ ॥

उप्पच उईरंतो बंधइ सो छव्विहं तणुकमाओ । अट्ठविहमणुहवंतो सुक्कज्झाणे डहइ कम्मं ॥ ३८ ॥

पूर्वोक्तयुक्त्यैव षड्विधं पञ्चविधं वा उदीरयन्नष्टविधं चानुभवन् षड्वि-

टी० पूर्वोक्तस्वरूपस्तनुकषायः-सूक्ष्मसम्परायः पूर्वोक्तयुक्त्यैव षड्विधं पञ्चविधं वा उदीरयन्नष्टविधं चानुभवन् षड्वि-
टी० पूर्वोक्तस्वरूपस्तनुकषायः–सूक्ष्मसम्परायः स च तस्यामवस्थायां किं करोतीत्याह–विभक्तिव्यत्ययाच्छुक्लध्यानेन प्रतिसमयमनन्तगुणं कर्म

धमुक्तस्वरूपं बध्नाति । स च तस्यामवस्थायां किं करोतीत्याह–विभक्तिव्यत्ययाच्छुक्लध्यानेन प्रतिसमयमनन्तगुणं कर्म

निर्दहति । श्रेणिव्यवस्थितस्य हि जन्तोर्द्धर्मशुक्लध्यानद्वयमपि लघुचूर्ण्याद्यभिप्रायेणाविरुद्धमिति शुक्लध्यानस्यापि ग्रहण-

मिह न विरुध्यते । उक्तं च–" सव्वप्पमायरहिया मुणओ खीणोवसंतमोहा य । ज्झायारो नाणधणा धम्मज्झाणस्स निद्दिट्ठा

॥१॥ एए च्चिय पुव्वाण पुव्वधरा सुप्पसत्थसंघयणा । दुण्ह सयोगाऽजोगा सुक्काण पराण केवलिणो ॥ २ ॥ " अप्रमत्तमुनयः

सामान्येन क्षपका उपशमकाश्च धर्मध्यानध्यातार इति प्रथमगाथाभावार्थः ॥ ये धर्मध्यानध्यातार इति उक्ताः, एत एव

'पुव्वाण'त्ति पूर्वयोः पृथक्त्ववितर्कसविचारैकत्ववितर्काविचारलक्षणयोः शुक्लध्यानाद्यभेदयोः ध्यातारः, किं त्वयं विशेषः

पूर्वधराश्चतुर्दशपूर्वविदस्तदुपयुक्ताः । इदं च विशेषणमप्रमत्तमुनीनां, न निर्ग्रन्थानां, माषतुषमरुदेव्यादीनामपूर्वविदामपि

शुक्लध्यानोपपत्तेः । शेषं सुगमम्, नवरं द्वयोः परयोरन्त्ययोः सूक्ष्मक्रियानिवृत्त्युपरतक्रियाप्रतिपातिलक्षणयोः शुक्लध्या-

नभेदयोः सयोग्ययोगिकेवलिनौ यथासङ्ख्यं ध्याताराविति द्वितीयगाथाभावार्थः । तदेवं क्षपकोपशमकयोः शुक्लध्या-

नस्याप्युक्तत्वान्नेह शुक्लध्यानग्रहणं विरुद्धम् । बृहच्चूर्ण्यभिप्रायस्तु सरागस्य सूक्ष्मसरागस्यापि धर्मध्यानमेव । यत्पुनरिह

शुक्लध्यानाभिधानं तदामन्नवीतरागभावमपेक्ष्योपचारतो द्रष्टव्यम् । वीतरागस्यापीत्थं शुक्लध्यानसम्भवः । " उवसंतो उ पुहुत्तं, झायइ झाणं वियक्कसवियारं । खीणकसाओ झायइ एगत्तवियक्कमवियारं ॥ १ ॥ सुहुमकिरियं सजोगी झायइ झाणं तु चरमकालम्मि । केवलिअजोगिनिच्चं झायइ झाणं समुच्छिन्नं ॥ २ ॥ इत्यलं विस्तरेण ! शेषं बृहच्चूर्णितः स्वयमेवावगन्तव्यम् । अत्र च क्वचिद्धन्धेन शेषं नियमयति । क्वचित्तु शेषेण बन्धमिति सर्वथाऽप्यभिधानेऽविरोधादिति गाथार्थः॥३५॥

*भा० सुहुमोऽहवेयगो इह सुक्कज्झाणेण डहइ कम्मं ति । जं • वुत्तं तं आमन्नवीयरागत्तणमवेक्ख ॥ ७४ ॥ टद्दवमन्नहा ऊ सुहुमस्स उ धम्मझाणमेवेगं । होई एवं पुण गुरुयचुन्निभिप्पायओ वुत्तं ॥ ७५ ॥ लहुचुन्निअभिप्पाएणं सुक्कज्झाण आइय दुभेयं । न विरुद्धं पुवधराण होइ सुत्ते जओ भणियं ॥ ७६ ॥ सवप्पमायरहिया मुणओ खीणोवसंतमोहा य । झायारो नाणधणा धम्मज्झाणस्स निद्दिट्ठा ॥ १ ॥ एए च्चिय पुवाणं पुवधरा सुप्पसत्थसंघयणा । दुन्ह सजोगाऽजोगा सुक्काण पराण केवलिणो ॥ २ ॥ इयगाहाणदुगस्स उ भावत्थोयं जहा उ अपमत्ता । खवगोवसामगा विय धम्मज्झाणस्स झायारो ॥७७ ॥ सवप्पमायइयगाहाए य इमो उ होइ भावत्थो । अह एएचिय गाहाइ होइ एसो उ भावत्थो ॥७८॥ जे धम्मज्झायगा उ एएच्चिय ते वि चेव पुवाणं । आइमगाणं सुक्किलझाणपभेयाण दुन्हपि ॥ ७९ ॥ हुंतीह झायगा किं तु पुवचउदसधरा उ अपमत्ता । एवं विसेसणं अप्पमत्त–साहूण नेयवं ॥ ८० ॥ नो निग्गंथाणं जे मासतुसमाइयाण साहूणं । अपुवधराणवि होइ सुक्कझाणस्स

* १ उपशान्तस्तु पृथक्त्वं ध्यायति ध्यानं वितर्कसविचारम् । क्षीणकषायो ध्यायति एकत्ववितर्कमविचारम् ॥ १ ॥ सूक्ष्मक्रियं सयोगी ध्यायति ध्यानं तु चरमकाले । अयोगिकेवली नित्यं ध्यायति ध्यानं समुच्छिन्नक्रियम् ॥ २ ॥

झायारो एएच्चिय दुइयगाहाइएसत्थो ॥ ८२ ॥
उवउत्ती ॥ ८१ ॥ दुन्हं उ सुक्कझाणगअंतिमभेयाण जोगजोगिजिणा । झायारो एएच्चिय दुइयगाहाइएसत्थो ॥ ८२ ॥ सुहुमकिरियं सजोगी
उवसंतो उ पुहुत्तं झायइ झाणं वियक्कवीयारं । खीणकसाओ झायइ एगत्तवियक्कमवियारं ॥ ८३ ॥ सुहुमकिरियं सजोगी
झायइ झाणं तु चरमकालम्मि । केवलिअजोगिनिच्चं झायइ झाणं समुच्छिन्नं ॥ ८४ ॥

अट्ठविहं वेयंता छव्विहमुइरंति सत्त बंधंति । अनियट्टी य नियट्टी अपमत्तजई य ते तिन्नि ॥ ३६ ॥

टी० अनिवृत्तिनिवृत्त्यप्रमत्तयतयस्त्रयोऽपि ते पूर्वोक्तस्वरूपाः परिपूर्णमष्टविधं वेदयन्तः षड्विधमायुर्वेदनीयवर्जं प्रकृति-
षट्कमुदीरयन्त्यायुर्वर्जं प्रकृतिसप्तकं तु बध्नन्ति । नन्वप्रमत्त आयुरपि बध्नातीति तस्य किमित्यष्टविधोऽपि बन्धो नोक्तः;
सत्यं, किन्तु नासौ स्वयं तद्बन्धमारभते । अपि तु प्रमत्तेनैवारब्धं कदाचित्समर्थयत इति ज्ञापनार्थं सतोऽप्यविवक्षा । 'अप्रम-
त्तयतिश्च' इति सूत्रे चशब्दात्सोऽप्युक्तो द्रष्टव्य इति गाथार्थः ॥ ३६ ॥ तदेवं पश्चानुपूर्व्या प्रायो नामग्राहमयोगिकेवलिन
आरभ्याप्रमत्तपर्यन्तं बन्धादिभिः संयोगमभिधायाधस्तनानां सामान्येन युगपद्विवक्षुराह-

भा० आउयबंधारंभं पमत्तठाणे करित्तु अपमत्ते । ठाणम्मि समत्थेई जई विहु कयावि किर तहवि ॥ ८५ ॥ न
भणिज्जइ अडविहबंधगो त्ति अहवा चसद्दओ सोऽवि । इह भणिओ दट्ठव्वो एवं पच्छाणुपुव्वीए ॥ ८६ ॥ बंधाइयसंजोगं
अपमत्तंतं भणित्तु अह ताण । मिच्छासासाइयाण छगुणाणं भणइ संजोगं ॥ ८७ ॥

अवसेसट्ठविहकरा वेयंति उदीरया वि अट्ठण्हं । सत्तविहगा वि वेइंति अट्ठगमुइरणे भज्जा ॥ ३७ ॥

टी० अवशेषा ये भणितशेषा मिथ्यादृष्ट्यादयः प्रमत्तावसानास्ते अष्टविधं कुर्वन्तीत्यभिधानलक्षणत्वात् कृदादीनां

ष्यत्पयेऽष्टविधकरा अष्टविधका सन्तः किमित्याह—वेदयन्त्यष्टाविति गम्यते। उदीरका अप्यष्टानामेव। ननु सप्त किमिति नोदीरयन्तीति चेत्? उच्यते, सप्तविधोदीरणा हि वेद्यमानायुष आवलिकाप्रवेशकाल एव प्रागुक्ता, सा चाष्टविधं बध्नतां न सम्भवति। अष्टविधबन्धो ह्यायुर्बन्धकाल एव भवति नान्यदा, आयुर्बन्धश्च वेद्यमानायुस्त्रिभागे त्रिभागत्रिभागे वा यावदन्तर्मुहूर्त्ते शेष एव सति भवति, तदा चाष्टविधस्यैवोदीरणा। अतो युक्तमुक्तमष्टविधं बध्नतोऽष्टानामेवोदीरका इति। अत एव चात्र बन्धादिसंयोगचिन्तायाः प्रत्येकचिन्तातो व्यक्तो विशेषः समुपलक्ष्यते। प्रत्येकचिन्तायां सप्ताष्टविधबन्धस्य सप्ताष्टविधोदीरणायाश्चाभीषां सामान्येनैवोक्तत्वादत्र तु संयोगचिन्तायामष्टविधं बध्नतामष्टविधस्यैवोदीरणेति विशेषव्यवस्थापितत्वादिति। 'सत्तविहगावी'त्यादि। सप्तविधमपि बध्नन्त इतितात्पर्यम्, वेदयन्ति तावदष्टविधमेव। 'उईरणे भज्ज'ति। उदीरणापारिप्यं सप्तविधमष्टविधं वा उदीरयन्ति वेद्यमानायुष आवलिकाप्रवेशकाले ह्यायुर्वर्जत्वात् सप्तविधं, ततोऽन्यत्राष्टविधमित्यर्थः। अपरं नेह सम्यग्मिथ्यादृष्टिरायुर्बन्धरहितत्वात् सर्वदैव सप्तविधं बध्नाति, अष्टविधं वेदयत्युदीरयत्यपि। प्रागुक्तयुक्त्याऽष्टविधमेव न कदाचित्सप्तविधमपीति द्रष्टव्यम्। एतच्च गुणस्थानकानि भूम्यादावालिख्य यन्त्रकं कृत्वाऽवहितधिया सर्वं भावनीयमिति गाथार्थः॥ ३७॥ तदेतावता 'बन्धं उदयं उदीरणविहिं तिण्हंपि तेसिं संयोगमि'ति व्याख्यातम्। साम्प्रतं बन्धविधानद्वारम्। तत्र बन्धविधान् बन्धभेद उच्यते—स च मोदकदृष्टान्तेन प्रकृतिस्थित्यनुभागप्रदेशलक्षणः प्राग्दर्शित इति। एवं प्रकृतिबन्धो वक्तव्यस्तस्य च चत्वार्यनुयोगद्वाराणि। तद्यथा—प्रकृतिवर्णना, साद्यादिप्ररूपणा, भूयस्कारादिप्ररूपणा, स्वामित्वप्ररूपणा चेत्यतः प्रकृतिवर्णना तावदुच्यते—तत्र कर्मणो ज्ञानावरणादेः स्वभावविशेषाः प्रकृतय उच्यन्ते।

ताश्च मूलोत्तरभेदाद् द्विधा भवन्ति । काः पुनस्ता इत्याशङ्कयाह–

भा० अवसेसा मिच्छाई पमत्तयंता उ तेसुवि अट्ठबंधा । सगबंधगा वि अड वेययंति य उदीरणे भज्जा ॥ ८८ ॥ वेइज्जमाणआउस्सा–वलियाए पविसकालम्मि । सत्तविहा आउविणा सेसगकालम्मि अट्ठविहा ॥ ८९ ॥ आउयबंधविरहिओ मिस्सो बंधेइ सत्त वेयइ य । उद्दीरइ अट्ठविहं न कयाइ उदीरई सत्त ॥ ९२ ॥ तिन्हं पि य संजोगो दारंति भणितु संपयं भणई । बंधविहाणद्दारं विहाणसद्दो उ भेयत्थो ॥ ९३ ॥ नेओ तहिं दाराइं चत्तारि महत्थयाइ एयाइं । पयइट्ठीअणुभाग–प्पएसबंधाभिहाणाइं ॥ ९२ ॥ हुंति तहिं पयइपभिइचउन्हमवबोहणत्थमेत्थ बुहा । मोयगदिट्ठंतं वन्नयंति जह मोयगो कोइ ॥ ९३ ॥ वायावहारवत्थूनिप्पन्नो हणइ पयइए वायं । एवं पित्तसिलेसमवहारिदवेहि निप्पन्नो ॥ ९४ ॥ पित्तसिलेसं अवहणइ सोवि ट्ठिइए उ कोवि दिणमेगं । चिट्ठइ अन्नो दिणदुग–माई ता जावमासाइ ॥ ९५ ॥ कालं पविचिट्ठइ नो परेण सविणा–समेइ तह सोवि । अणुभावेण सिणिद्धत्तण–महुरत्तणगुणेणं च ॥ ९६ ॥ कोइ इगगुणणुभावो अन्नो दुतिमाइसंखगुणभावो । तह कोवि कणिकाइय दव्वप्पमाणपएसेहिं ॥ ९७ ॥ कोइ इगपसइमाणो अवरो दुतिपसइमाणओ होइ । एवं इह कम्मंपि हु नाणा–णावरणमाईहिं ॥ ९८ ॥ बहुपुग्गलेहि जणियं पयईए किंचि नाणमावरेइ । किंची दंसण किंची सुहदुक्खे जणइ एमाई ॥ ९९ ॥ ठिइए तंपिय तीसं कोडाकोडाइ कालपरिमाणं । अणुभावेणं तं पिहु इगदुट्ठाणगतिठाणाई ॥ २०० ॥ मंदयरमंदतिव्वाइरसजुयं तंपि किल पएसेहिं । अप्पबहुपएसेहिं निप्फन्नं होइ कम्मं तु ॥ १ ॥ अह पढमं वत्तव्वो पयडियबंधो तहिं च चत्तारि । अणुओग–दुवाराइ तहिं पढमं पयडिवन्नणया ॥ २ ॥ दुइयं सायाइपरूवणा उ तइयं तु भूयकाराइ । वन्नणया तह तुरियं सामित्तपरूवणा

नेव ॥ १ ॥ इइ पनरसगाहाहिं भणिस्सइय तस्य पयडिबंधम्मि ।

नाणस्स दंसणस्स य आवरणं वेयणीयमोहणियं । आउयनामं गोयं तहंतरायं च पयडीओ ॥ ३७ ॥

पंच नव दोन्नि-अट्ठावीसा चउरो तहेव बायाला । दोन्नि य पंच य भणिया पयडीओ उत्तरा चेव ॥ ३८॥

टी० अत्र प्रथमगाथया ज्ञानावरणाद्या अष्टौ मूलप्रकृतय उक्ताः । द्वितीयगाथया तु प्रतिमूलप्रकृतिसम्भविन्यो यथासङ्ख्यं पञ्चादिका उत्तरप्रकृतय इति समुदायार्थः । अधुना गाथाद्वयोद्दिष्टानामेव प्रकृतीनां समुत्कीर्तना क्रियते । तत्र ज्ञानस्यावरणं पञ्चधा भवतीति सम्बन्धः, तद्यथा–आभिनिबोधिकज्ञानावरणं, श्रुतज्ञानावरणं, अवधिज्ञानावरणं, मनःपर्यायज्ञानावरणं, केवलज्ञानावरणं चेति । दर्शनस्यावरणं नवविधं, तद्यथा–निद्रा, निद्रानिद्रा, प्रचला, प्रचलाप्रचला, स्त्यानर्द्धिः, चक्षुर्दर्शनावरणं, अचक्षुर्दर्शनावरणं, अवधिदर्शनावरणं, केवलदर्शनावरणं चेति । वेदनीयं द्विधा, सातवेदनीयमसातवेदनीयं चेति । मोहनीयमष्टाविंशतिधा, तत्र त्रिधा दर्शनमोहनीयप्रकृतयस्तद्यथा–मिथ्यात्वं सम्यग्मिथ्यात्वं सम्यक्त्वं चेति । चारित्रमोहनीयप्रकृतयस्तु पञ्चविंशतिः, तद्यथा–षोडश कषायाः, नव नोकषायाः । तत्र कषायाः–अनन्तानुबन्धी क्रोधो मानो माया लोभश्च, एवमप्रत्याख्यानावरणप्रत्याख्यानावरणसञ्ज्वलना अपि प्रत्येकं चत्वारः चत्वारो वक्तव्याः, सर्वेऽपि षोडश । नव नोकषाया इमे–स्त्रीपुंनपुंसकलक्षणं वेदत्रयं, हास्यरत्यरतिशोकभयजुगुप्सालक्षणं हास्यादिषट्कं चेति । सर्वा अप्यष्टाविंशतिमोहनीयप्रकृतयः । आयुष्कं नारकतिर्यङ्मनुष्यदेवायुष्कभेदाच्चतुर्धा । नाम द्विचत्वारिंशद्भेदम् । तत्र चतुर्दश पिण्डप्रकृतयः, अष्टाविंशतिः प्रत्येकप्रकृतयः । तत्र पिण्डप्रकृतयो गतिनाम, जातिनाम, शरीरनाम, अङ्गोपाङ्गनाम, सङ्घातनाम, बन्धननाम,

संहनननाम, संस्थाननाम, वर्णनाम, गन्धनाम, रसनाम, स्पर्शनाम, आनुपूर्वीनाम, विहायोगतिनामेत्येताश्चतुर्दशापि पिण्डप्रकृतय उच्यन्ते। गतिनामादिभिर्वक्ष्यमाणचतुरादिभेदानामत्र पिण्डनत्वप्रतिपादनादिति। प्रत्येकप्रकृतयस्त्वष्टाविंशतिरिमाः—त्रसनाम, स्थावरनाम, बादरनाम, सूक्ष्मनाम, पर्याप्तनाम, अपर्याप्तनाम, प्रत्येकनाम, साधारणनाम, स्थिरनाम, अस्थिरनाम, शुभनाम, अशुभनाम, सुभगनाम, दुर्भगनाम, सुस्वरनाम, दुःस्वरनाम, आदेयनाम, अनादेयनाम, यशःकीर्तिनाम, अयशःकीर्तिनाम, अगुरुलघुनाम, उपघातनाम, पराघातनाम, उच्छ्वासनाम, आतपनाम, उद्योतनाम, निर्माणनाम, तीर्थंकरनाम चेति। एवं सर्वा अप्येता द्विचत्वारिंशन्नामप्रकृतयः। उपलक्षणं चैताः सूत्रे प्रोक्ताः विवक्षान्तरेण हि सप्तषष्टिरपि नामप्रकृतयो भवन्ति, तथा त्रिनवतिरप्युत्तरशतं च। तत्र सप्तषष्टिर्भेदा गत्यादिपिण्डप्रकृतयो नरकगत्यादिभेदेन भिद्यन्ते तदा भवन्ति। तद्यथा—गतिनाम चतुर्द्धा, नरकगतितिर्यग्गतिमनुष्यगतिदेवगतिनामभेदादिति। जातिनाम पञ्चधा, एकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियजातिनामभेदादिति। शरीरनाम पञ्चधा, औदारिकवैक्रियाहारकतैजसकार्मणनामभेदादिति। अङ्गोपाङ्गनाम त्रिधा—औदारिकवैक्रियाहारकाङ्गोपाङ्गनामभेदादिति। बन्धनसंघातननामकर्मणी अत्र पक्षे न गृह्येते, तयोः शरीराश्रितत्वाच्छरीरनामान्तर्गतत्वेनैव विवक्षितत्वादिति। संहनननाम षोढा, वज्रर्षभनाराचऋषभनाराचनाराचार्द्धनाराचकीलिकासेवार्त्तसंहनननामभेदादिति। संस्थाननाम षोढा—समचतुरस्रन्यग्रोधपरिमण्डलसादिवामनकुब्जहुण्डसंस्थाननामभेदादिति। वर्णगन्धरसस्पर्शा अप्यत्र पक्षे भेदरहिता एव एकैकस्वरूपाश्चत्वारो गृह्यन्ते। आनुपूर्वी नाम चतुर्द्धा, नरकतिर्यग्मनुष्यदेवानुपूर्वीनामभेदादिति। विहायोगतिनाम द्वेधा, प्रशस्तविहायोगतिनामअप्रशस्तविहायोगतिनाम चेति। एवमेते एकोनचत्वा-

तिसंग्रहगत्यादिपिण्डप्रकृतिभेदा अनन्तरोक्तत्रसनामादिप्रत्येकप्रकृतिभेदैरष्टाविंशत्या सह नामप्रकृतीनां सप्तषष्टिर्भवति। त्रिनवतिस्तु यदा शरीरनाम्नः पृथगौदारिकवैक्रियाहारकतैजसकार्मणबन्धनभेदाद् बन्धननाम पञ्चधा विवक्ष्यते। सङ्घातनामापि शरीरपञ्चकभेदात् पञ्चधा, एवमेता दश। वर्णनामापि कृष्णादिभेदात् पञ्चधा, गन्धनाम सुरभिदुरभिनामभेदाद् द्विधा, रसनाम तिक्तरसादिभेदात् पञ्चधा, स्पर्शनाम कर्कशनामादिभेदादष्टधा, एवमेता विंशतिप्रकृतयः। एतासां मध्याद्वर्णगन्धरसस्पर्शानां सामान्यतश्चतुर्णां सप्तषष्टिपक्षेऽपि गृहीतत्वात् तदपगमे शेषाः षोडश सर्वासां मीलने षड्विंशतिर्भवति। ततः पूर्वोक्तायाः सप्तषष्टेर्मध्ये चैतत्प्रक्षेपे नामप्रकृतीनां त्रिनवतिर्भवति। इह च प्रकारान्तरविवक्षया बन्धननाम पञ्चदशविधमपि भवति, तद्यथा–औदारिकौदारिकबन्धननाम औदारिकतैजसबन्धननाम औदारिककार्मणबन्धननाम औदारिकतैजसकार्मणबन्धननाम एवं वैक्रियाहारकयोरपि प्रत्येकं चत्वारि २ बन्धनानि वक्तव्यानि। केवलमौदारिकस्थाने वैक्रियमाहारकं च वक्तव्यम्। तथा तैजसर्बन्धननाम तैजसकार्मणबन्धननाम कार्मणर्बन्धननामेत्येवमेताः पञ्चदश[1] बन्धननामप्रकृतयः। अत्र च सामान्यत औदारिकादिबन्धनपञ्चकस्य त्रिनवतिमध्ये पूर्वमेव प्रक्षिप्तत्वाच्छेषा दश प्रक्षिप्यन्ते। जातं नामप्रकृतीनां त्र्युत्तरशतं। गोत्रं द्विधा, उच्चैर्गोत्रं नीचैर्गोत्रं चेति। अन्तरायं पञ्चधा, दानलाभभोगोपभोगवीर्यान्तरायभेदादिति। एवं च कृत्वा ज्ञानावरणे पञ्चप्रकृतयो, दर्शनावरणे नव, वेदनीये द्वे, मोहनीये सम्यक्त्वमिश्रवर्जाः षड्विंशतिः, आयुषि चतस्रः, नाम्नि भेदान्तरसम्भवेऽपि सप्तषष्टिः, गोत्रे द्वे, अन्तराये पञ्च, एवमेतद्विंशत्युत्तरं प्रकृतिशतं बन्धे पुरस्तादुपयोक्ष्यते। तदेवं प्रकृतिसमुत्कीर्तना कृता।

१ 'बन्धननामशतत्रयशकेन सह षड्विंशतिप्रकृतयो भवन्ति' इतिप्र.

साम्प्रतं प्रतिप्रकृतिभावार्थं उच्यते–तत्रापि यथोद्देशं निर्देश इति पूर्वं ज्ञानावरणमुच्यते । तत्र ज्ञायते परिच्छिद्यते वस्त्वनेनेति ज्ञानं ज्ञातिर्वा, सामान्यविशेषात्मके वस्तुनि विशेषग्रहणात्मको बोध इत्यर्थः। आव्रियते आच्छाद्यते अनेनेत्यावरणं मिथ्यात्वादि-सचिवजीवव्यापाराहृतकर्मवर्गणान्तःपातिविशिष्टपुद्गलसमूह इत्यर्थः । ज्ञानस्यावरणं मूलप्रकृतिस्तस्य प्रथमभेद आभिनि-बोधिकज्ञानावरणं, तत्र अभीत्याभिमुख्ये, नीतिर्नैयत्ये, ततश्चाभिमुखो वस्तुयोग्यदेशावस्थानापेक्षी, नियत इन्द्रियाण्याश्रित्य स्वस्वविषयापेक्षी, बोधनं बोधो अभिनिबोधः स्वार्थिकतद्धितोत्पादात् स एवाभिनिबोधिकम् । अभिनिबुध्यत इत्यभिनिबोध इति कर्त्तरि वा, अथवा अभिनिबुध्यते आत्मना स इति कर्म्मणि स एवाभिनिबोधिकमिति । ततश्चाभिनिबोधिकं च तत् ज्ञानं चाभिनिबोधिकज्ञानमिन्द्रियपञ्चकमनोनिमित्तोऽश्रुतानुसारी बोध इत्यर्थः । तच्च द्विधा, श्रुतनिश्रितमश्रुतनिश्रितं च, तत्र प्रायः श्रुताभ्यासमन्तरेणापि यत्सहजविशिष्टक्षयोपशमवशादुत्पद्यते, तदश्रुतनिश्रितमौत्पत्तिक्यादिबुद्धिचतुष्टयम । यत्तु पूर्वं श्रुतपरिकर्मितमतेर्व्यवहारकाले त्वश्रुतानुसारितया समुत्पद्यते, तत् श्रुतनिश्रितम्, तच्चतुर्द्धा भवति, तद्यथा–"अवग्रह, ईहा, अपायो, धारणा चे"ति । पुनरवग्रहो द्विधा, व्यञ्जनावग्रहोऽर्थावग्रहश्च, तत्र व्यज्यते प्रकटीक्रियते शब्दादिरर्थोऽनेनेति व्यञ्जनं, किं तदिति चेत् ? उच्यते–उपकरणेन्द्रियस्य कदम्बपुष्पाद्याकृतेः श्रोत्रघ्राणरसनस्पर्शलक्षणस्य शब्दगन्धरसस्पर्शपरिणतद्रव्याणां च यः परस्परसम्बन्धः प्रथममुपश्लेषमात्रं तदिह व्यञ्जनमुच्यते, अपरं चेन्द्रियेणाप्यर्थस्य व्यज्यमानत्वात् तदपीन्द्रियं व्यञ्जन-मुच्यते, ततश्च व्यञ्जनेन इन्द्रियलक्षणेन व्यञ्जनस्य इन्द्रियविषयसम्बन्धलक्षणस्यावग्रहणं परिच्छेदनमेकस्य व्यञ्जनशब्दस्य लोपाद्व्यञ्जनावग्रहः । 'किमपीद'मित्यव्यक्तज्ञानरूपार्थावग्रहादधोऽव्यक्ततरज्ञानमात्रमित्यर्थः, अयं च नयनमनोवर्ज्येन्द्रिय-

तर्क- ॥४१॥

चतुष्पभेदाच्चतुर्धा, नयनमनसोरप्राप्यकारित्वेन विषयसम्बन्धाभावादस्य नेन्द्रियस्य विषययोः सम्बन्धग्राहकत्वादिति भावः। अर्यत इत्यर्थः, तस्य शब्दरूपादिभेदानामन्यतरेणापि भेदेनानिर्द्धारितस्य सामान्यरूपस्यावग्रहणमर्थावग्रहः 'किमपीद'मित्यव्यक्तज्ञानमित्यर्थः, स च मनःसहितेन्द्रियपञ्चकजन्यत्वात् षोढा, अवगृहीतस्यैव वस्तुनोऽपि किमयं भवेत् स्थाणुरेव नतु पुरुष इत्यादिवस्तुधर्मान्वेषणात्मकं ज्ञानमीहा, ईहनमीहेति कृत्वा, "अरण्यमेतत् सवितास्तमागतो न चाधुना सम्भवतीह मानवः। मायस्तदेतेन खगादिभाजा भाव्यं स्मरारातिसमाननाम्ना ॥ १ ॥" इत्याद्यन्वयधर्मघटनव्यतिरेकधर्मनिराकरणाभिमुखतालिङ्गितो विशेषज्ञानहेतुरिति हृदयम्। साऽपि मनःसहितेन्द्रियपञ्चजन्यत्वात् षोढैव, ईहितस्यैव वस्तुनः स्थाणुरेवायमित्यादिनिश्चयात्मको बोधविशेषोऽपायोऽयमपि पूर्ववत् षोढैव। तथा 'निश्चितस्यैवाविच्युतिस्मृतिवासनारूपं धरणं धारणा साऽप्युक्तवत् षोढैव। तदेवमर्थावग्रहादीनां चतुर्णां प्रत्येकं षड्विधत्वात् व्यञ्जनावग्रहभेदचतुष्टयेन सह श्रुतनिश्रिताभिनिबोधिकज्ञानमष्टाविंशतिविधं भवति। अश्रुतनिश्रितेन औत्पत्तिक्यादिबुद्धिचतुष्टयेन सह द्वात्रिंशद्विधं भवति। अथवा "बहुबहुविधक्षिप्रानिश्रितासन्दिग्धध्रुवाणां सेतराणामि"ति वचनादष्टाविंशतिरपि द्वादशधा भिद्यते, तथाहि—बहूनां श्रोतॄणामविशेषेण प्राप्तिविषयस्थेऽपि शङ्खभेर्यादितूर्यसमुदाये क्षयोपशमवैचित्र्यात् कश्चिदवग्रहादिभिः बहु गृण्हाति एकहेलास्फालितानामपि शङ्खादितूर्याणां पृथक् पृथक् शब्द गृण्हातीत्यर्थः १। अपरस्त्वबहु गृण्हाति, अव्यक्ततूर्यध्वनिमेवोपलभत इत्यर्थः २। अन्यस्तु योषिदादिवाद्यमानतारमधुरमन्द्रत्वादिबहुपर्यायोपेतान् शङ्खादिध्वनीन् पृथग् जानातीति बहुविधग्राहीत्युच्यते ३। एकद्विपर्यायोपेतांस्तु तानेव जानानोऽबहुविधग्राही ४। अन्यस्तु क्षिप्रमचिरेणार्थं जानाति ५। अन्यस्तु विमृश्य विमृश्य चिरेणेति

करणम् ॥४१॥

६ । अन्यस्त्वनिश्रितमलिङ्गं गृह्णाति, न पुनः पताकयेव देवकुलं ७ । अन्यस्तु पताकया देवकुलमिव लिङ्गनिश्रया, गृह्णाति ८ । तथा यदसंशयं गृह्णाति, तदसन्दिग्धं ९ । संशयोपेतं तु गृह्णाति, तत् सन्दिग्धं १० । तथा यदेकदा गृहीतं तत्सर्वदैवावश्यं गृह्णाति, न पुनः कालान्तरे तद्ग्रहणे परोपदेशादिकमपेक्षते तद् ध्रुवं ११ यत्पुनः कदाचिदेव गृह्णाति न सर्वदा तदध्रुवं १२ एवमेतैर्द्वादशभिर्भेदैरवग्रहादयः पूर्वोक्तभेदयुक्ता वस्तु गृह्णन्तीत्यष्टाविंशत्या द्वादशभिर्गुणितया त्रीणि शतानि षट्त्रिंशानि तानि चाश्रुतनिश्रितबुद्धिचतुष्टयेन सह चत्वारिंशानि त्रीणि शतानि भेदानामाभिनिबोधिकज्ञानस्य भवन्ति । तत्रैतावद्भेदभिन्नस्या-संवावच्छेदमेव यदावरणस्वभावं कर्म तदाभिनिबोधिकज्ञानावरणमेकग्रहणेन गृह्यते, चक्षुषः पटलमिवेति । तथा श्रवणं श्रुतमभिलापप्लावितार्थग्रहणमत्यय उपलब्धिविशेषः, श्रुतं च तज्ज्ञानं च श्रुतज्ञानं, अथवा श्रूयते असाविति श्रुतं शब्दश्चासौ कारणे कार्योपचाराद् ज्ञानं च श्रुतज्ञानं, शब्दो हि श्रोतुः साभिलापज्ञानस्य कारणं भवतीति सोऽपि श्रुतज्ञानमुच्यते । इन्द्रिय-मनोनिमित्तः श्रुतानुसारी अभिलापप्लावितो ज्ञानविशेषः श्रुतज्ञानमिति तात्पर्यम् । तच्च विंशतिभेदं, तद्यथा—" पज्जय-अक्खरपयसंघाया पडिवत्ति तह य अणुओगो । पाहुडपाहुडपाहुडवत्थुपुव्वा य ससमासा ॥ १ ॥ " अस्य व्याख्या-पर्यायश्च अक्षरं च पदं च सङ्घातश्च पर्यायाक्षरपदसङ्घाताः ' पडिवत्ति 'त्ति प्रतिपत्तिः प्राकृतत्वात् लुप्तविभक्तिको निर्देशः । तथाऽनुयोगो अनुयोगद्वारलक्षणः प्राभृतप्राभृतं च प्राभृतं च वस्तु च पूर्वं च प्राभृतप्राभृतप्राभृतवस्तुपूर्वाणि, प्राकृतत्वा-ल्लिङ्गव्यत्ययः, चः समुच्चये । एते पर्यायादयः श्रुतस्य दशभेदाः कथंभूता इत्याह—' ससमास 'त्ति समासः सङ्क्षेपो-मीलक इत्यर्थः, सह समासेन वर्तन्ते ससमासास्तेनश्च प्रत्येकं सम्बन्धः, तद्यथा—पर्यायः पर्यायसमासोऽक्षरमक्षरसमास एवं

शेषेष्वप्यष्टसु भेदेषु योजनीयमिति विंशतिभेदं श्रुतं भवतीति गाथाक्षरार्थः। भावार्थस्त्वयम्—पर्यायो ज्ञानस्यांशोऽविभागपलि-
च्छेद इत्यनर्थान्तरं तत्रैको ज्ञानांशः पर्यायोऽनेके तु ज्ञानांशाः पर्यायसमासः, एतदुक्तं भवति—लब्ध्यपर्याप्तस्य सूक्ष्मनिगोद-
जीवस्य यत्सर्वजघन्यं श्रुतज्ञानमात्रं तस्मादन्यत्र जीवान्तरे यः एकः श्रुतज्ञानांशोऽविभागपलिच्छेदरूपो वर्त्तते स पर्यायः १।
ये बुद्ध्यादयः श्रुतज्ञानाविभागपलिच्छेदा नानाजीवेषु वृद्धा लभ्यन्ते ते समुदिताः पर्यायसमासः २। अत्राह—ननु निगोद-
जीवसम्भवी पर्यायः पर्यायसमासो वा कथमिह श्रुतज्ञानभेदत्वेन गृह्यते? तेषां मिथ्यादृष्टित्वेन तच्छ्रुतज्ञानस्य मिथ्यारूपत्वात्,
सम्यक्श्रुतविचारस्य नेह प्रस्तुतत्वात्, सत्यं, किन्तु सम्यगसम्यक्त्वतामुत्सृज्य सामान्यश्रुतज्ञानमात्रभेदाभिधानस्यैव
विवक्षितत्वाददोषः। अक्षरं त्रिधा—संज्ञाक्षरं व्यञ्जनाक्षरं लब्ध्यक्षरं चेति। तत्र संज्ञाक्षरं विचित्रलिपिस्वरूपं, यथा घटाकृतिष्ठकार
इत्यादि। व्यञ्जनाक्षरं तु जीवव्यापारनिष्पन्नवाग्द्रव्यसमूहं। लब्ध्यक्षरं तु शब्दश्रवणरूपादिदर्शनादेरर्थविनिश्चायकान्तःप्लव-
मानाकारादिवर्णोपलब्धिरूपम्। अनेनैव चेहाधिकारः, श्रुतज्ञानरूपत्वादस्यैव, न त्वाद्ययोर्जडत्वात्। तत्र अकारादिलब्ध्यक्ष-
राणामन्यतरदक्षरम् ३। एतेषामेव द्व्यादिसमुदयोऽक्षरसमासः ४। पदं त्वर्थपरिसमाप्तिः पदमित्याद्युक्तिसद्भावेऽपि येन केन
चित्पदेनाष्टादशपदसहस्रादिप्रमाणा आचारादिग्रन्था गीयन्ते तदिह गृह्यते, तस्यैव द्वादशाङ्गश्रुतपरिमाणेऽधिकृतत्वाच्छ्रुत-
भेदानामेव नेह प्रस्तुतत्वात् तस्य च पदस्य तथाविधाम्नायाभावात् प्रमाणं न ज्ञायते, तत्रैकं पदं पदमुच्यते ५।
द्व्यादिपदसमुदायस्तु पदसमासः ६। "गइइंदिए य काए" इत्यादिगाथाप्रतिपादितद्वारकलापस्यैकदेशो यो गत्यादिकस्तस्या-
प्येकदेशो यो नरकगत्यादिस्तत्र जीवादिमार्गणा यका क्रियते सा सङ्घातः ७। द्व्यादिमत्या[illegible] सङ्घातसमासः ८।

गत्यादिद्वाराणामन्यतरैकपरिपूर्णगत्यादिद्वारे जीवादिमार्गणाप्रतिपत्तिः । ९ । द्वारद्वयादिमार्गणा तु प्रतिपत्तिसमासः १० । " संतपयपरूवणया दव्वपमाणं च"इत्याद्यनुयोगद्वाराणामन्यतरदेकमनुयोगद्वारमुच्यते ११ । तद्द्वयादिसमुदायस्त्वनुयोगद्वारसमासः १२ । प्राभृतान्तर्वर्त्ती अधिकारविशेषः प्राभृतप्राभृतं १३ । तद्द्वयादिसंयोगस्तु प्राभृतप्राभृतसमासः १४ । वस्त्वन्तर्वर्त्ती अधिकारविशेषः प्राभृतं १५ । तद्द्वयादिसंयोगस्तु प्राभृतसमासः १६ । पूर्वान्तर्वर्त्ती अधिकारविशेषो वस्तु १७ । तद्द्वयादिसंयोगस्तु वस्तुसमासः १८ । पूर्वमुत्पादादिप्रतीतं १९ । तद्द्वयादिसंयोगस्तु पूर्वसमासः २० । एवमेते संक्षेपतः श्रुतज्ञानस्य विंशतिर्भेदा दर्शिताः । विस्तरार्थिना तु बृहत्कर्म्मप्रकृतिचूर्णिरन्वेषणीया । एते च पर्यायादयः श्रुतभेदा यथोत्तरं तीव्रतीव्रतरादिसयोपशमलभ्यत्वादित्थं निर्दिष्टा इति भावनीयमिति । प्रकारान्तरेण श्रुतज्ञानं चतुर्दशादिभेदस्वरूपमपि भवति । तच्च "अक्खरसण्णीसम्मं सादीयं खलु सपज्जवसियं च । गमियं अंगपविट्ठं सत्तवि एए सपडिवक्खा ॥ १ ॥ " इत्याद्यनुसारत आवश्यकादिभ्योऽवसेयमिति । तस्यैतावद्भेदभिन्नस्य श्रुतज्ञानस्यावरणस्वभावं कर्म्म श्रुतज्ञानावरणम् । अत्र चाभिनिबोधिकश्रुतज्ञानयोः स्वामिकालकारणविषयपरोक्षत्वैस्तुल्यमवसेयम् । तथाहि—स्वामी द्वयोरप्येको "जत्थ मइनाणं तत्थ सुयनाणं जत्थ सुयनाणं तत्थ मइनाण'मिति वचनात् । तथा कालोऽप्येको नानाजीवानाश्रित्य द्वयोरपि सर्वकालमनुच्छेदात् एकजीवं तु प्रतीत्य सातिरेकषट्षष्टिसागरोपमस्थितित्वात् । कारणमपि मनःषष्ठेन्द्रियपञ्चकलक्षणं तुल्यमेव । विषयोऽपि सर्वद्रव्यक्षेत्रकालौदयिकादिभावलक्षणस्तुल्य एव । परोक्षत्वेन च द्वेऽपि तुल्ये इति । आह—यद्येवं तर्हि द्वयोरप्येकत्वमस्तु ! भेदे

१ सत्पदप्ररूपणाद्रव्यप्रमाण च । २ अक्षरं संज्ञि सम्यक् सादिकं खलु सपर्यवसितं च । गमिकमङ्गप्रविष्टं सप्तापि एते सप्रतिपक्षा. ॥ १ ॥ ३ यत्र मतिज्ञानं तत्र श्रुतज्ञानं यत्र श्रुतज्ञानं तत्र मतिज्ञानम् ।

हेत्वभावादभेदहेतूनां चाभिहितत्वात्, तदयुक्तं, भेदहेत्वभावस्यासद्भत्वात्, तथाहि—स्वाम्यादिभिरभेदे सत्यपि लक्षणभेदादनयोर्भेदः। स चाभिमुखो नियतो बोधोऽभिनिबोधः, श्रवणं श्रुतमित्यादिना दर्शित एव। तथा मतिपूर्वं श्रुतं प्रवर्त्तत इति हेतुफलभावाद्भेदो। न ह्यवग्रहादिभिरपरिच्छिन्ने वस्तुनि जातुचिच्छ्रुतं प्रवर्त्तते। तथा भेदभेदाद्भेदोऽष्टाविंशत्यादिभेदं मतिज्ञानमुक्तं, विंशत्यादिभेदं तु श्रुतम्। तथा मूकेतरभेदाद्भेदो, मूकं हि मतिज्ञानम्, अपरप्रत्यायकत्वात्, मुखरं च श्रुतज्ञानं, परप्रत्यायकत्वात्। तथा काललक्षणविषयभेदादपि भेदः, प्रायः साम्प्रतकालविषयत्वादाभिनिबोधिकस्य, त्रिकालविषयत्वाच्च श्रुतस्येति। स्वाम्यादिभिरभेदेऽपि लक्षणादिभिर्मतिश्रुतभेदसिद्धिः। अथ सर्वथा भेदमनयोर्मृगयते भवांस्तदयुक्तम्। किं हि नाम तद्वस्त्वस्ति यत्सर्वथा वस्त्वन्तराद्भिद्यते, घटादयोऽपि ह्याकारादिभिरेवान्यतो भिद्यन्ते, सत्त्वप्रमेयत्वादिभिः पुनस्तुल्या एवेति। कोऽत्र मतिश्रुतयोः सर्वथा भेदचिन्तायां तवाभिनिवेशोऽत्र बहु वक्तव्यम्, तत्तु नोच्यते, ग्रन्थविस्तरभयाद्विशेषावश्यके च प्रपञ्चतोऽभिहितत्वादित्यलं प्रसङ्गेन। तथा अवधानमवधिरिन्द्रियाद्यनपेक्षमात्मनः साक्षादर्थग्रहणम्। अवधिरेव ज्ञानमवधिज्ञानं अथवा अवधिरेव मर्यादा तेनावधिना रूपिद्रव्यमर्यादात्मकेन ज्ञानमवधिज्ञानं, तच्चाऽनन्तद्रव्यभावविषयत्वात् तत्तारतम्यविवक्षया अनन्तभेदं, असङ्ख्येयक्षेत्रकालविषयत्वात् तत्तारतम्यविवक्षयाऽसङ्ख्येयभेदं, प्रकारान्तरविवक्षया त्वनुगामुकादिभेदत आवश्यकादिभ्योऽनुसरणीयम्। तस्यावरणमथ्येनावच्छेदभिन्नमेकग्रहणेन गृह्यते अवधिज्ञानावरणमिति। तथा संज्ञिभिर्जीवैः काययोगेन मनोवर्गणाभ्यो गृहीतानि मनोयोगेन मनस्त्वेन परिणमय्यालम्ब्यमानानि द्रव्याणि मनांसीत्युच्यन्ते, तेषां मनसां पर्यायाश्चिन्तनानुगुणाः परिणामास्तेषु ज्ञानं मनःपर्यायज्ञानम्। अथवा यथोक्तस्वरूपाणि मनांसि पर्येत्यवगच्छतीति

मनःपर्यायम् । कर्मण्यण्, मनःपर्यायं तज्ज्ञानं चेति-विशेषणसमासः । तच्च द्विधा, ऋजुमतिविपुलमतिभेदादिति । मननं मतिः विषयपरिच्छित्तिरित्यर्थः । ऋज्वी अल्पतरविशेषविषयतया मुग्धा मतिर्यस्य तदृजुमतिः, विपुला बहुतरविशेषतया पट्वी मतिर्यस्य स तद्विपुलमतिः । तत्र ऋजुमतेरर्द्धतृतीयाङ्गुलहीनो मनुष्यलोकः क्षेत्रतो विषयः, विपुलमतेस्तु स एव सम्पूर्णो निर्मलतरश्च । कालतस्त्वेतावति क्षेत्रे भूतभाविनोः पल्योपमासङ्ख्येयभागयोरतीतानागतानि संज्ञिमनोरूपाणि मूर्त्तद्रव्याणीति कर्मस्तवटीका । अन्ये तु व्याचक्षते—वर्त्तमानकाले मन्यमानद्रव्याणां भूतभाविनोः पल्योपमासङ्ख्येयभागयोर्येऽतीतानागतपर्यायास्तान् पश्यति, तच्चायुक्तमिव लक्ष्यते । यतो वर्त्तमानमनोद्रव्याणामतीतानागतान् पर्यायान् पश्यन्नसौ किञ्चिन्तानुकूलान् पश्यत्यन्यान्वा । तत्राद्यः पक्षो न युक्तो, यतो भूतभाविपल्योपमासङ्ख्येयभागमध्ये यान्यसञ्जातमनःपरिणामानि द्रव्याणि तत्क्षण एव च जातमनोवर्गणापरिणामानि तानि गृहीत्वा यदा कश्चिच्चिन्तयति, तदा तत्सम्बन्ध्यतीतानागतपर्यायान् मनःपर्यायज्ञानी किं परिच्छिनत्तु तावति काले तद्द्रव्याणां चिन्तानुकूलपर्यायाणामेवाभावात् । किञ्चैवं व्याख्यायमाने तेनैव विवक्षितवर्त्तमानकालचिन्तकेनान्यैर्वा चिन्तकैर्यदतीतदिवसादिषु चिन्तितं तन्मनःपर्यायज्ञानिनोऽविषयः प्राप्नोति, तच्चिन्ताद्रव्याणां वर्त्तमानचिन्ताद्रव्येभ्यः प्रायो विभिन्नत्वान्न चैतदिच्छन्ति वृद्धाः । द्वितीयपक्षस्तु सर्वथोपेक्षणीय एवं, चिन्तानानुकूलपर्यायाणां मनःपर्यायज्ञानविषयत्वेनानिष्टत्वात्तस्माद्भूतभाविनोः पल्योपमासङ्ख्येयभागयोस्तत्तत्कालभाविचिन्तानुकूलपर्यायान्वितानि संज्ञिभिर्विमृश्यमानमनोद्रव्याण्येव तत्तत्कालसम्बन्धित्वेन पश्यति । 'जीतकल्पभाष्येऽपि चोक्तं "कालं उज्जमई

१ 'मानद्रव्यपर्यायाणां' इति सि. २ कालत ऋजुमतिर्जघन्योत्कृष्टेऽपि पल्योपमस्य । भागमसंख्येयमतीतमेष्यं वा कालद्विके ॥ १ ॥ जानाति पश्यति तान् मन्यमानान्तु संज्ञिजीवानाम् । तानेव विपुलमतिः वितिमिरशुद्धान्तु जानाति च ॥२॥

नरलोगम्मि पज्जत्तस्स। भावमसंखेज्जइम अतीयमेस्सं च कालदुगं ॥ १ ॥ जाणइ पासइ ते उ मणिज्जमाणे उ सण्णिजीवाणं। ते चेव य विउलमई वितिमिर सुद्धे उ जाणइ य ॥ २ ॥ 'ते उ त्ति' ताननन्तप्रादेशिकाननन्तमनःपरिणतस्कन्धानिति गम्यानुसंधानं सम्बध्यत इत्यलं विस्तरेण, तदत्र तु केवलिनो विदन्तीति। द्रव्यतोऽपि च तान्येव। भावतस्तु तत्पर्यायाँश्चिन्तनानुगुणपरिणतिरूपा ऋजुमतेर्विषयः, चिन्तनीयं तु बाह्यमर्थं मूर्तममूर्तं वा त्रिकालगोचरमप्यनुमानादेव जानाति, न साक्षात्, यतः-"एवंपरिणतान्येवान्येतानि मनोद्रव्याणि नत एतदन्यथानुपपत्तेरयमनेनार्थश्चिन्तितः" इति लेखाक्षरदर्शनात्, यद्वाऽर्थमिव प्रत्यक्षीकृतमनोद्रव्येभ्यश्चिन्त्यमर्थमनुमिमीते। स चैव बाह्याभ्यन्तररूपो द्विविधोऽपि विषयः स्फुटतरो बहुतरश्च विपुलमतेर्विषयत्वेनावगेयः। एवमेतयोर्द्वयोरपि मनःपर्यायज्ञानभेदयोर्यदावरणस्वभावं कर्म तन्मनःपर्यायज्ञानावरणम्। यथा केवलमेकमसहायमसाधारणमनन्तमपरिशेषं चोच्यते। तत्रैकं तत्राये शेषछाद्मस्थिकज्ञानदर्शनाभावात्, असहायं त्विन्द्रियमनःप्रकाशादिसहायनिरपेक्षत्वेनार्थपरिच्छेदात्, असाधारणं त्वनन्यसदृशत्वात्, अनन्तं त्वपर्यवसितकालावस्थायित्वात्, अपरिशेषं-परिपूर्णं सम्पूर्णद्रव्यादिविशेषग्राहित्वात्; केवलं च तज्ज्ञानं च केवलज्ञानं तस्यावरणं केवलज्ञानावरणम्। अत्र चाद्यानि चत्वार्यावरणानि देशघातीनि स्वस्वज्ञानावरणोद्धरितज्ञानदेशघातित्वात्, केवलज्ञानावरणं तु सर्वघाति वक्ष्यमाणयुक्त्या सर्वार्थज्ञानस्य सर्वघातित्वात्, एवमेतानि पञ्चावरणान्युत्तरप्रकृतयः संनिपत्यन्ते तु सामान्येन ज्ञानावरणं मूलप्रकृतिर्यथाङ्गुलीपञ्चकनिष्पन्ना मुष्टिः, मृन्मयरूपनीलावादिसमुदायनिष्पन्नो वा दासः, घृतगुडकणिक्कादिनिष्पन्नो वा मोदक इत्यादि, एवमुत्तरत्रापि भावनीयम्। उक्तं पञ्चविधं ज्ञानावरणमिति। इदानीं दर्शनावरणमुच्यते-तत्र दृश्यतेऽनेनेति दर्शनम्। दृष्टिर्वा

दर्शनं सामान्यविशेषात्मके वस्तुनि सामान्यग्रहणात्मको बोध इत्यर्थः, तस्यावरणस्वभावं कर्म्म दर्शनावरणं मूलप्रकृतिस्तस्य प्रथमभेदो निद्रा, तत्र द्रा कुत्सायां गतौ, नियतं द्राति कुत्सितत्वमविस्पष्टत्वं गच्छति चैतन्यमनयेति निद्रा, नखच्छोटिकादिमात्रेणैव सुखाववोध्या स्वापावस्थेत्यर्थः, कारणे कार्योपचारात् तद्विपाकवेद्या कर्म्मप्रकृतिरपि निद्रेत्युच्यते। तथा निद्रातिशायिनी निद्रा निद्रानिद्रेति मध्यपदलोपी समासो दुःखप्रबोधा स्वापावस्थेत्यर्थः, तस्यां हि चैत्यन्यस्यात्यन्तमस्फुटतरीभूतत्वाद्बहुभिर्घोलनाप्रकारैः प्रबोधो भवति, अतःसुखप्रतिबोधनिद्रापेक्षया तस्या अतिशायित्वम्, तद्विपाकवेद्या कर्म्मप्रकृतिरपि तथोच्यते। प्रचला-उपविष्टः ऊर्द्ध्वस्थितो वा प्रचलति विघूर्णयत्यस्यां स्वापावस्थायामिति प्रचला, तद्विपाकवेद्या कर्मप्रकृतिरपि तथोच्यते। प्रचलातिशायिनी प्रचला प्रचलाप्रचला, सा हि चङ्क्रमणादिकुर्वतः स्वप्तुर्भवतीति। स्थानस्थितस्वप्तृभवां प्रचलामपेक्ष्यास्या अतिशायिनीत्वं तद्विपाकवेद्या कर्म्मप्रकृतिरपि प्रचलाप्रचला। स्त्याना बहुत्वेन सङ्घातमापन्ना गृद्धिरभिकाङ्क्षा जाग्रदवस्थाध्यवसितार्थसाधनविषया यस्यां स्वापावस्थायां सा स्त्यानगृद्धिः, तस्यां जाग्रदवस्था व्यवसितमर्थमुत्थाय साधयति। स्त्याना वा पिण्डीभूता ऋद्धिरात्मशक्तिरूपा अस्यामिति स्त्यानर्द्धिरित्यप्युच्यते, तद्भावे हि प्रथमसंहननस्य केशवार्द्धबलसदृशी शक्तिर्भवति। श्रूयते ह्येतदागमे, क्वचित् प्रदेशे द्विरदेन दिवा खलीकृतः क्षुल्लकस्त्यानर्द्ध्युदये वर्त्तमानस्तस्मिन्नेव द्विरदे बद्धाभिनिवेशो रजन्यामुत्थाय तद्दन्तयुगलमुत्पाट्य स्वोपाश्रयद्वारे क्षिप्त्वा पुनः सुप्तवानित्यादि। अथवा, स्त्याना जडीभूता चैतन्यर्द्धिस्त्यायपीति स्त्यानर्द्धिरिति। तादृशविपाकवेद्या कर्म्मप्रकृतिरपि स्त्यानगृद्धिः स्त्यानर्द्धिर्वा। तदेतन्निद्रापञ्चकं दर्शनावरणक्षयोपशमलब्धात्मलाभानां दर्शनलब्धीनामावारकमुक्तम्। अधुना यद्दर्शनलब्धीनां मूलत एव लाभमावृणोति तदिदं दर्शनावरण-

चतुष्कमुच्यते । चक्षुषा वस्तुसामान्यांशग्रहणात्मकं दर्शनं चक्षुर्दर्शनं, तस्यावरणं चक्षुर्दर्शनावरणम्, अचक्षुषा चक्षुर्वर्जेन्द्रियचतुष्टयेन मनसा च यद्दर्शनं यथोक्तरूपं तदचक्षुर्दर्शनं तस्यावरणमचक्षुर्दर्शनावरणम्, अवधिना रूपिद्रव्यमर्यादया अवधिरेव वा करणनिरपेक्षरोधरूपो दर्शनं सामान्यार्थग्रहणमवधिदर्शनं, तस्यावरणमवधिदर्शनावरणम्, केवलेन सम्पूर्णवस्तुतत्त्वग्राहकबोधविशेषरूपेण यद्दर्शनं वस्तु सामान्यांशग्रहणं तत्केवलदर्शनं, केवलमेव वा दर्शनं केवलदर्शनं, तस्यावरणं केवलदर्शनावरणम् । इह च सर्वत्र दर्शनं सामान्यार्थग्रहणमुच्यते, यत उक्तं–जं सामन्नग्गहणं भावाणं नेव कट्टुमागारं । अविसेसिऊण अत्थे दंसणमिति वुच्चई समए ॥ १ ॥ अत्र च चक्षुर्दर्शनावरणोदये एकद्वित्रीन्द्रियाणां मूलत एव चक्षुर्न भवति, चतुष्पञ्चेन्द्रियाणां तु भूतमपि चक्षुस्तथाविधे तदुदये विनश्य तिमिरादिना वाऽस्पष्टं भवति । चक्षुर्वर्जशेषेन्द्रियमनसां तु यथासम्भवमचक्षुर्दर्शनावरणोदयादप्राप्त्यमित्युक्तं नवविधं दर्शनावरणम् । आरोग्यविषयोपभोगादिजनितमाह्लादरूपं सुखं सातमुच्यते, तद्रूपेण विपाकेन वेद्यत इति सातवेदनीयम् । अनारोग्यादिजनितं दुःखमसातं तद्रूपेण विपाकेन वेद्यत इत्यसातवेदनीयमित्युक्तं द्विविधं वेदनीयम् । मुह्यन्ति सत्कृत्येभ्यः पराङ्मुखी भवन्ति, जीवा अनेनेति मोहनीयम् । तत्र तत्त्वार्थश्रद्धानं दर्शनं तन्मोहयति विपर्यासं गमयतीति दर्शनमोहनीयम् । तत्त्रिविधं मिथ्यात्वादि । तत्र मिथ्यात्वमेकविधादिरूपं पूर्ववद् द्रष्टव्यम्, तादृशविपाकवेद्यं कर्मापि मिथ्यात्वम् । सम्यग्मिथ्यात्वं तत्त्वार्थश्रद्धानस्यार्द्धविपर्यस्तत्वमुच्यते, नैकान्तशुद्धमशुद्धं वा जिनप्रणीततत्त्वश्रद्धानमित्यर्थः, तादृशविपाकवेद्यं कर्म सम्यग्मिथ्यात्वम् । अविपर्यस्तजिनप्रणीततत्त्वश्रद्धानभावेन तु वेद्यमानं कर्म सम्यक्त्व-

१ यत् सामान्यग्रहणं भावानां नैव कृत्वाकारम् । अविशेष्यार्थान् दर्शनमित्युच्यते समये ॥ १ ॥

मिति । चरन्ति परमपदं गच्छन्ति जीवा अनेनेति चरित्रं तदेव चारित्रं, अष्टप्रकारं कर्म्म चयरिक्तीकरणाद्वा चारित्रं, सर्वसावद्य-
योगनिवृत्तिरूपो जीवपरिणाम इत्यर्थः, तन्मोहयतीति चारित्रमोहनीयम् । तत्र षोडश कषायाः, कषायशब्दार्थः प्रागनिरूपित
एव । तत्रानन्तं भवमनुबध्नन्तीत्येवंशीला अनन्तानुबन्धिनो, यद्यपि चैतेषां शेषकषायोदयरहितानामुदयो नास्ति, तथाप्य-
वश्यमनन्तसंसारमौलकारणमिथ्यात्वोदयाक्षेपकत्वादेषामेवानन्तानुबन्धित्वव्यपदेशः, शेषकषाया हि नावश्यं मिथ्यात्वोदय-
माक्षिपन्ति, अतस्तेषामुदययौगपद्ये सत्यपि नायं व्यपदेशः, इत्यसाधारणमेतेषामेवैतन्नामेति । ते च चत्वारः, क्रोधोऽक्षान्ति-
परिणतिरूपः, मानो गर्वो जात्याद्युद्भवममार्दवं, माया वञ्चनाद्यात्मिका जीवपरिणतिः, लोभोऽसन्तोषात्मको जीवपरिणाम
इति, एतद्विपाकायावेद्याः कर्म्मप्रकृतयोऽपि तन्नामधेयाः, एते चत्वारोऽपि क्रोधादयो यथासङ्ख्यं क्षितिधररेखाशैलस्तम्भघं-
शीमूलकृमिरागसमाना अनन्तानुबन्धिन इत्यवसेयाः । त एव च क्रोधादयो यथाक्रमं पृथिवीरेखास्थिमेषशृङ्गकर्दम-
रागसमाना अप्रत्याख्यानावरणा उच्यन्ते, नञोऽल्पार्थत्वादल्पं प्रत्याख्यानमप्रत्याख्यानं देशविरतिरूपं तदप्याद्वृण्वन्ती-
त्यप्रत्याख्यानावरणाः । त एव च क्रमेण रेणुरेखाकाष्ठगोमूत्रिकाखञ्जनरागसमानाः प्रत्याख्यानावरणा अभि-
धीयन्ते, प्रत्याख्यानं सर्वविरतिरूपमावृण्वन्तीति कृत्वा । त एव यथासंख्यं जलरेखातिणसल्तावंशावलेख-
हरिद्रारागसमानाः सञ्ज्वलना इत्युच्यन्ते, परीषहादिसम्पाते चारित्रमपीषज्ज्वलयन्तीति कृत्वा संशब्दस्ये
षदर्थत्वादिति, निर्दिष्टाः षोडशापि कषायाः । इदानीं नव नोकषाया उच्यन्ते, तत्र नोशब्दः साहचर्यवचनः, कषायैः
सहचरा नोकषायास्तेषां हि केवलानां न प्राधान्यमस्ति, किन्तु कषायैरनन्तानुबन्ध्यादिभिः सहोदयं यान्ति, तद्विपाकसदृशमेव

रिपाकमादर्शयन्तीत्यर्थः, दुश्चरदन्यसंसर्गमनुवर्तन्त इति हृदयम् । एषु च वेदत्रये यदुदये स्त्रियाः पित्तोदये मधुराभिला-
षवत् पुंस्यभिलाषः समुत्पद्यते, स फुंफुमाग्निसमानः स्त्रीवेदः । यदुदये पुंसः श्लेष्मोदयादम्लाभिलाषवत् स्त्रियामभिलाषो भवति,
स तृणाग्निज्वालासमानः पुंवेदः । यदुदये पण्डकस्य पित्तश्लेष्मोदये मज्जिकाभिलाषवदुभयोरपि स्त्रीपुंसयोरभिलाषः समुदेति
स महानगरदाहाग्निसमानो नपुंसकवेदः । यदुदये सनिमित्तमनिमित्तं वा हसति तद्धास्यमोहनीयम् । येन रमणीयेषु
वस्तुषु रमो ममोदते तद्रतिमोहनीयम् । तद्विपरीतमरतिमोहनीयम् । येन प्रियविप्रयोगादिविक्लवमनाः शोचनाक्रन्दनपरिदेव-
नादि करोति तच्छोकमोहनीयम् । येन सनिमित्तमनिमित्तं वा बिभेति तद्भयमोहनीयम् । येन शकृदादिबीभत्सपदार्थेभ्यो
जुगुप्सते तत् जुगुप्सामोहनीयमित्युक्ता नोकषायास्तदभिधानाच्चोक्तं चारित्रमोहनीयं, मोहनीयं चाष्टाविंशतिविधमिति ।
इदानीमायुः प्रतिपाद्यते, आयाति भवाद्भवान्तरं सङ्क्रामतां जन्तूनां निश्चयेनोदयमागच्छतीत्यायुरिति नैरुक्तीशब्दव्युत्पत्तिः ।
यद्यपि च सर्वं कर्म उदयमायाति, तथाप्यस्यायुषो विशेषः, यतः शेषं कर्म बद्धं सत्किञ्चित्तस्मिन्नेव भवे उदयमायाति,
किञ्चित्तु भवेद्योदयभुक्तं जन्मान्तरेऽपि स्वविपाकेन उदये नायात्येवेत्युभयथाऽपि व्यभिचारः । आयुषि त्वयं नास्ति, यद्धस्य
तस्मिन्नेव भवेऽवेदनाज्जन्मान्तरेऽपि स्वविपाकतोऽवश्यं वेदनादिति विशिष्टस्यैवोदयागमनस्य विवक्षितत्वात्, तस्य
चायुष्येव सद्भावात् तस्यैवेदमाख्येति । अथवा आयान्त्युपभोगाय तस्मिन्नुदिते सति तद्भवप्रायोग्याणि सर्वाण्यपि
शेषकर्माणीत्यायुस्तच्च चतुर्धा, नारकस्य सतो वेद्यमानमायुष्कं नारकायुष्कं, तिरश्चां तिर्यगायुष्कं, मनुष्याणां मनुष्यायुष्कं,
देवानां देवायुष्कमिति । इदानीं नाम प्रोच्यते नमयति परिणमयत्यात्मानं तैस्तैर्गत्यादिभिः पर्यायैरिति नाम । अथवा

नारकादिरयं एकेन्द्रियादिर्वा असावित्यादिकं नाम यस्य कर्म्मण उदये जीवो लभते तत्कर्म्मण्युपचारतो नामेति । तत्र गच्छन्ति प्राप्नुवन्ति तथाविधकर्म्मोदयसचिवा जीवास्तामिति गतिः, नारकादिपर्यायपरिणतिरित्यर्थः, तद्विपाकवेद्या कर्म्मप्रकृतिरपि गतिः, सैव नाम गतिनाम । ततश्च नरकविषये गतिनाम नरकगतिनाम नारकशब्दव्यपदेश्य पर्यायनिबन्धनं नरकगतिनामेति हृदयं । एवं तिर्यङ्मनुष्यदेवगतिनामापि वाच्यमिति । ननु सर्वेऽपि पर्याया जीवेन गम्यन्ते प्राप्यन्ते इति सर्वेषामपि गतित्वप्रसङ्ग इति नैवं, यतो गच्छतीति गौरित्यादिवदविशेषेण व्युत्पादिता अपि शब्दा रूढितो विशेषे वर्त्तन्त इत्यदोषः । जननं जातिरेकेन्द्रियादिशब्दव्यपदेश्येन पर्यायेण जीवानामुत्पत्तिस्तद्भावनिबन्धनभूतं नाम जातिनाम, तच्चैकद्वित्रिचतुःपञ्चेन्द्रियजातिनामभेदात् पञ्चधा, तत्रैकस्य स्पर्शनेन्द्रियज्ञानस्यावरणक्षयोपशममात्तदेकविज्ञानभाज एकेन्द्रियाः, एवं यस्य यावन्तीन्द्रियाणि तस्य तान्याश्रित्यानेनाभिलापेन तावज्ज्ञेयं, यावत् पञ्चानां स्पर्शनरसनघ्राणचक्षुःश्रोत्रज्ञानानामावरणक्षयोपशमात्पञ्चविधज्ञानभाजः पञ्चेन्द्रियाः, तेषामेकेन्द्रियाणां जातिनामैकेन्द्रियजातिनामेत्येवं यावत्पञ्चेन्द्रियजातिनाम । अत्राह—नन्वनेन जातिनाम्ना किं भावेन्द्रियमेकादिकं जन्यते ? उत द्रव्येन्द्रियम् ? आहोस्विदेकेन्द्रियोऽयम् ? इत्यादिव्यपदेश इति त्रयी गतिः । यद्याद्यः पक्षः स न युक्तो, भावेन्द्रियस्य श्रोत्रादीन्द्रियज्ञानावरणक्षयोपशमजन्यत्वात् "क्षयोपशमिकानीन्द्रियाणी"ति वचनात्, अथ द्रव्येन्द्रियं जन्यते, तदप्यसारं, द्रव्येन्द्रियस्येन्द्रियपर्याप्तिनामोदयजन्यत्वात्, एकेन्द्रियादिव्यपदेशस्त्वेकादीन्द्रियज्ञानावरणक्षयोपशमपर्याप्तिनामभ्यामेव संत्स्यति, किमन्तर्गडुना जातिनाम्नेति । अत्रोच्यते-आद्यविकल्पद्वयं तावदनभ्युपगमादेव निरस्तं, यत्पुनरुक्तमेकेन्द्रियादिव्यपदेशस्त्वित्यादि, तदयुक्तं, यत इन्द्रियज्ञानावरणक्षयोपशम

इन्द्रियपर्याप्तिश्च यथामद्रव्यं भावेन्द्रियजनने द्रव्येन्द्रियनिर्वर्त्तने च कृतार्थो, कथमेकेन्द्रियादिव्यपदेशनिबन्धनपरिणतिलक्षणं जनयितुमलं, न ह्यन्यसाध्य कार्यमन्यः साधयति, अतिप्रसङ्गात्, तस्मादेकेन्द्रियादीनां समानजातीयजीवान्तरेण सह समाना भावा शक्तिपरिणतिरेकेन्द्रियादिशब्दवाच्या अवश्यं जातिनामकर्मोदय एवाभ्युपगन्तव्या। तथाहि—बकुलादीनामनुमानादिसिद्धे इन्द्रियपञ्चकक्षयोपशमे सत्यपि पञ्चेन्द्रियशब्दव्यपदेश्यपञ्चेन्द्रियजातिनामकर्मोदयजन्यविशिष्टबाह्यपरिणत्यभावान्न पञ्चेन्द्रियव्यपदेशो भवति। यद्येवं गोऽश्वभुजगभ्रमेलकादिशब्दव्यपदेश्यस्यापि पर्यायस्य कारणं किञ्चित्कर्माभ्युपगन्तव्यमिति चेत्? नैवं, जातिनामकर्मवैचित्र्यादेव तत्सिद्धेः, न चाऽनेकान्तेन युक्त्युपन्यास एवाग्रहः कार्यः, आगमोपपत्तिगम्यत्वात् तस्य, तदुक्तं—आगमश्चोपपत्तिश्च सम्पूर्णदृष्टिकारणम्। अतीन्द्रियाणामर्थानां सद्भावप्रतिपत्तये ॥१॥ शीर्यत इति शरीरं प्रतिक्षणं शागवस्थाश्चयापचयाभ्यां विनश्यतीत्यर्थः, तच्च पञ्चविधमौदारिकादिवर्गणापुद्गलैः क्रियत इति तद्भेदात् पञ्चधा, औदारिकशरीरादिपूर्वोपवर्णितस्वरूपं तद्विपाकवेद्यं कर्म्मापि तन्नामकं पञ्चधैव। तत्र यस्य कर्म्मण उदयादौदारिकवर्गणापुद्गलान् गृहीत्वा औदारिकशरीरत्वेन परिणमयति, तदौदारिकशरीरनाम। एवं वैक्रियाहारकतैजसकार्मणशरीरनामस्वपि स्वस्ववर्गणापुद्गलग्रहणपरिणामेन कारणत्वं वाच्यम्, यावद्यस्य कर्म्मण उदयात्कार्मणवर्गणापुद्गलान् गृहीत्वा कार्मणशरीरत्वेन परिणमयति, तत्कार्मणशरीरनाम। इदं च सत्यपि समानवर्गणापुद्गलमयत्वे स्वकार्यभूतात् कार्म्मणशरीरादन्यदेव, इदं हि कार्म्मणशरीरस्य कारणभूता नामकर्म्मण उत्तरप्रकृतिः, कार्मणशरीरं पुनरेतदुदयसम्पादितत्वादेतत्कार्यं, निःशेषकर्म्मणां प्ररोहभूमिराधारो वा संसारात्मनां च गत्यन्तरसङ्क्रमणे साधकतमं करणमित्यन्यदेव स्वकार्यात्कार्मणशरीरात्कारणभूतं प्रस्तुतं कार्म्मणशरीर-

नामकर्मेति । अङ्गानि शिरउरउदरपृष्ठबाहूरुसंज्ञितान्यष्टौ, तदवयवभूतानि त्वङ्गुल्यादीन्युपाङ्गानि, शेषाणि तु तत्प्रत्यवयवभूता-
न्यङ्गुलिपर्वरेखादीन्यङ्गोपाङ्गानि, अङ्गानि च उपाङ्गानि अङ्गोपाङ्गानि चेतिद्वन्द्वः, एकपदशेषेऽङ्गोपाङ्गानीति भवति । तानि च
यस्य कर्मण उदयादाद्येषु त्रिषु शरीरेषु भवन्ति तत्त्रिविधमङ्गोपाङ्गनाम । तत्र यदुदयादौदारिकशरीरत्वेन परिणतानां
पुद्गलानामङ्गोपाङ्गविभागेन परिणतिर्भवति तदौदारिकशरीराङ्गोपाङ्गनाम । एवं वैक्रियाहारकाङ्गोपाङ्गनाम्नोरपि वाच्यम् ।
तैजसकार्मणयोस्तु जीवप्रदेशसंस्थानानुरोधित्वान्नास्त्यङ्गोपाङ्गसंभव इति । एषां चाङ्गोपाङ्गादिशरीररचनाऽसंहतानां पुद्गलानां
न सम्भवत्यतोऽन्योऽन्यसन्निधानलक्षणपुद्गलसंहतेः कारणं सङ्घातनाम तच्च शरीरपञ्चकभेदात् पञ्चधा । तत्र यस्य कर्मण
उदयादौदारिकशरीरत्वपरिणतान् पुद्गलानात्मा सङ्घातयति पिण्डयत्यन्योन्यसन्निधानेन व्यवस्थापयति, तदौदारिकसङ्घा-
तनामेत्येवं वैक्रियादिशरीरचतुष्टयेऽपि वाच्यमिति । एतेषां च पुद्गलानामौदारिकादिशरीरनाम्नः सामर्थ्याद् गृहीतानां सङ्घा-
तनामसामर्थ्यादन्योऽन्यसन्निधानेन सङ्घातितानामन्योन्यसंश्लेषकारिबन्धननाम । एतदपि शरीरपञ्चकभेदात् पञ्चधा, तत्र
पूर्वगृहीतैरौदारिकपुद्गलैः सह परस्परं च गृह्यमाणानौदारिकपुद्गलानुदितेन येन कर्मणा बध्नात्यात्माऽन्योन्यसंसक्तान्करोति
तदौदारिकशरीरबन्धननाम, दारुपाषाणादीनां जतुरालाप्रभृतिश्लेषद्रव्यवत् । एवं वैक्रियादिचतुष्केऽपि वाच्यम् ।
अथवौदारिकौदारिकबन्धनादिभेदादिदं पञ्चदशधा पूर्वमुक्तं, तत्र पूर्ववदौदारिकपुद्गलैः सह गृह्यमाणौदारिकपुद्गलानां येन
बन्धः क्रियते, तदौदारिकौदारिकबन्धननाम, एवमौदारिकस्य तैजसेन सह येन बन्धः क्रियते, तदौदारिकतैजसबन्धननामेत्यनया
दिशा पञ्चदशापि बन्धनानि वाच्यानि, यदि त्विदं शरीरपुद्गलानामन्योन्यसंश्लेषकारि बन्धननाम न स्यात् ततस्तेषां शरीर-

परिणतया संस्थानमप्यसम्बद्धत्वात्स्यनाहतकुण्डस्थितसंहतास्तीमितशक्तूनामिवैकत्र स्थैर्यं न स्यात् इति । संहन्यमानशरीरपुद्गलानां कपालादीनां लोहपट्टादिवदुपकारिसंहननमस्थिरचनाविशेषस्तत्पुनरौदारिकशरीर एव, नान्येष्वस्थ्यादिरहितत्वात् तेषां, तच्च षोढा, वज्रर्षभनाराचादि, तत्र वज्रं कीलिका, ऋषभः परिवेष्टनपट्टो, नाराचं उभयतो मर्कटबन्धः । ततश्च द्वयोरस्थ्नोरुभयतो मर्कटबन्धेन बद्धयोः पट्टाकृतिना तृतीयेनास्थ्ना परिवेष्टितयोरुपरि तदस्थित्रयभेदिकीलिकाकारं वज्रनामकमस्थि भवति यत्र तद्वज्रर्षभनाराचं प्रथमम्, ऋषभवर्जं वज्रनाराचं द्वितीयं, वज्रवर्जमृषभनाराचमित्यन्ये, वज्रर्षभवर्जं तु नाराचं तृतीयं, एकतोऽपि मर्कटबन्धः द्वितीयपार्श्वे कीलिकाविद्धमर्द्धनाराचं चतुर्थं, ऋषभनाराचवर्जं कीलिकाविद्धास्थिद्वयसञ्चितं कीलिकाख्यं पञ्चमम्, अस्थिद्वयपर्यन्तसंस्पर्शलक्षणां सेवां ऋतमागतं निपातनात् सेवार्त्तं षष्ठमितीदं षड्विधं संहननं यदुदयाद्भवति शरीरे तदपि तत् भंगिनं षड्विधं संहनननाम । संस्थानमवयवरचनात्मिका शरीराकृतिस्तदपि षोढा समचतुरस्रादि । तत्र समाः शरीरलक्षणशास्त्रोक्तप्रमाणलक्षणाऽविसंवादिन्यश्चतस्रोऽस्रयो यस्य तत्समचतुरस्रं समासान्तोऽप्रत्ययः, अस्रयश्चेह चतुर्दिग्विभागोपलक्षिताः शरीरावयवास्ततश्च सर्वेऽप्यवयवा यथोक्तलक्षणप्रमाणाव्यभिचारिणो यस्य न न्यूनाधिकास्तत्समचतुरस्रं, इदं च सर्वावयवेषु लक्षणादिभिस्तुल्यत्वात् तुल्यमुच्यते । न्यग्रोधवत्परिमण्डलं न्यग्रोधपरिमण्डलं, यथा न्यग्रोध उपरि सम्पूर्णावयवोऽधस्तनभागे तु न तथा तथैवेदमपि, नाभेरुपरि विस्तरबहुलं सम्पूर्णलक्षणादिभागमधस्तु न तथेति । सादीति आदिरिहोत्सेधाख्यो नाभेरधस्तनो देहभागो गृह्यते तेन आदिना यथोक्तलक्षणप्रमाणभाजा सह वर्तते यत्तत्सादि सर्वमेव हि शरीरमविशिष्टेन आदिना सह वर्तत इति सादित्वविशेषणान्यथानुपपत्ते-

रधस्तनकायस्य विशिष्टता लभ्यते, सादि उत्सेधबहुलं परिपूर्णलक्षणादियुक्तोत्सेधमित्यर्थो नाभेस्तूपरि लक्षणादिविसंवादीति । वामन मडहकोष्ठं पाणिपादशिरोग्रीवं यथोक्तलक्षणादियुक्तं शेष तूरउदरपृष्ठादिरूप कोष्ठं शरीरमध्ये मडहं लक्षणादिरहित यत्र तद्वामनमित्यर्थः, अधस्तनकायमडहं कुब्जं पाणिपादशिरोग्रीवलक्षणोऽधस्तनकायो, मडहो लक्षणादिविसंवादी यत्र शेषं तु मध्यकोष्ठं यथोक्तलक्षणादियुक्तं तत्कुब्जं वामनविपरीतमित्यर्थः, अन्ये तु दर्शितलक्षणव्यत्ययेन प्रथमं कुब्जं ततो वामनं पठन्तीति । हुण्डं तु सर्वावयवेषु प्रायो लक्षणादिविनिर्मुक्तं भवति यस्यैकोऽप्यवयवः प्रायो न लक्षणादियुक्तो भवति तत्सर्वं त्राऽसंस्थितं हुण्डमित्यर्थः, उक्तं च "तुछ वित्थडबहुलं, उस्सेहबहुं च मडहकोट्ठं च । हेट्ठिल्लकायमडहं सव्वत्थासंठियं हुंडं ॥ १ ॥ इति अस्याप्यर्थः संस्थानपट्कस्यापि यथाक्रमं लक्षणसूचको व्याख्यात एव । यदुदयादिदं पड्विधं संस्थानं वपुषि भवति तदपि कर्मैतन्नामकमिति । 'वर्ण' वर्णक्रियाविस्तारगुणवचनेष्विति चुरादौ पठ्यते । ततश्च वर्ण्यतेऽलङ्क्रियते गुणवत्क्रियते चित्रभूषयाघनेनेति वर्णः कृष्णादिः पञ्चधा ' किण्हा नीला लोहियहालिद्दा चेव तहेव सुक्किलया' इति वचनात् । स च जन्तुशरीरेषु यदुदयाद्भवति तद्वर्णनाम । तथा 'गन्ध' अर्दन इति, गन्ध्यते आघ्रायत इति गन्धो द्विधा सुरभीतरभेदात् । तथा 'रस' आस्वादनस्नेहनयोः रस्यते आस्वाद्यत इति रसस्तिक्तादिः पञ्चधा, ' तित्तगकडुयकसाया अंबिलमहुरा रसा य पंचभवे' इति वचनात् । 'स्पृश' स्पर्शे स्पर्श्यत इति स्पर्शः, कर्कशादिरष्टधा, ' कक्खडमिउगुरुलहुया सीयाउ-

१ तुच्छं विस्तरबहुलमुत्सेधबहुं च मडभकोष्ठं च । अधस्तनकायमडभं सर्वत्रासंस्थितं हुण्डम् ॥१॥ २ कृष्णनीललोहितहालिद्रा एव तथा च शुक्लता. ३ तिक्तकटुककषाया आम्लमधुरा रसा पञ्च भवेयुः. ४ कर्कशमृदुगुरुलघुकाः शीतोष्णौ च स्निग्धरूक्षौ च.

सिणा य निरुद्धत्ता य' इति वचनात्। एवमेतेऽपि गन्धादयो यदुदयाद्भवन्ति, तान्यपि गन्धरसस्पर्शनामानि बोद्धव्यानीति। द्विसमयादिना विग्रहेण भवान्तरोत्पत्तिस्थानं गच्छतो जीवस्यानुश्रेणिनियता गमनपरिपाटीहानुपूर्वीत्युच्यते तद्विपाकवेद्या कर्म्मप्रकृतिरप्यानुपूर्वी। सा च चतुर्विधा, तत्र नरकगत्या सहचरितानुपूर्वी नरकगत्यानुपूर्वी तत्समकालं च वेद्यमानत्वात् तत्सहचारित्वं। एवं तिर्यङ्मनुष्यदेवानुपूर्व्योऽपि वाच्याः। गमनं गतिः, सा चेह पादादिविहरणात्मिका देशान्तरप्राप्तिहेतुर्द्वीन्द्रियादीनां प्रवृत्तिरभिधीयते, नैकेन्द्रियाणां, पादाद्यभावात्। विहायसा नभसा गतिर्विहायोगतिर्ननु च विहायसः सर्वगतत्वात् ततोऽन्यत्र गतिर्न सम्भवत्येवेति व्यवच्छेद्याभावात् विहायसा विशेषणमनुपपन्नम्, सत्यमेतत्, किन्तु यदि गतिरित्येवोच्यते, ततो नाम्नः प्रथमप्रकृतिरपि गतिरस्तीति पौनरुक्त्यशङ्का स्यादतस्तद्व्यवच्छेदार्थं विहायोग्रहणं कार्यं, विहायसा गतिः प्रवृत्तिर्न तु भवगतिर्नरकगत्यादिकेति। सा च द्विधा, प्रशस्ता अप्रशस्ता च। तत्राद्या गजकलभकादम्बकवृषभादीनां इतरा तु खरोष्ट्रोलादीनां तद्विपाकवेद्या कर्म्मप्रकृतिरपि तन्नामिका द्विधैवेत्युक्ताः पिण्डप्रकृतयः। अधुना प्रत्येकप्रकृतयस्तत्र त्रस्यन्त्युष्णाद्यभितप्ताः सन्तस्तस्मादुद्विजन्ते, छायाद्युपसर्पन्तीति त्रसास्तत्पर्यायविपाकवेद्यं कर्म्मापि त्रसनाम। तिष्ठन्तीत्येवंशीला उष्णाद्यभितापेऽपि तत्परिहारासमर्थाः 'कसिपिसिभासीशस्थाप्रमदां चेति वरप्रत्यये स्थावराः पृथिव्यादयः एकेन्द्रियास्तत्पर्यायविपाकवेद्यकर्म्मापि स्थावरनाम। तेजोवायूनां तु स्थावरनामोदयेऽपि चलनं स्वाभाविकमेव, न तूष्णाद्यभितापेन द्वीन्द्रियादीनामिव विशिष्टमिति। यस्योदयाज्जीवा बादराः स्थूरा भवन्ति तद्बादरनाम, न चेह चक्षुर्ग्राह्यत्वं बादरत्वमिष्टं, बादरस्यापि एकैकस्य पृथिव्यादिशरीरस्य चक्षुर्ग्राह्यत्वाभावात्, तस्माज्जीवविपाकित्वेन जीवस्यैव कश्चिद्बादर-

परिणामं जनयत्येतन्न पुद्गलेषु, किन्तु जीवविपाक्यप्येतच्छरीरपुद्गलेष्वपि काञ्चिदभिव्यक्तिं दर्शयति, तेन बादराणां बहुतरसमुदितपृथिव्यादीनां चक्षुषा ग्रहणं भवति, न सूक्ष्माणाम्। जीवविपाकिकर्म्मणः शरीरे स्वशक्तिप्रकटनमयुक्तमिति चेन्नैवं, जीवविपाक्यपि क्रोधो भ्रूभङ्गत्रिवलीतरङ्गितालिकफलकरक्तमस्वेदजलकणनेत्राघातास्त्रत्वपरुषवचनवेपथुप्रभृतिविकारं कुपितनरशरीरेऽपि दर्शयति, विचित्रत्वात् कर्म्मशक्तेरिति। यस्योदयात् सूक्ष्माः पृथिव्यादयः पञ्च भवन्ति, तदपि जीवविपाकिसूक्ष्मनामकर्म्मेति। पर्याप्तिराहारादिपुद्गलदलिकग्रहणपरिणमनहेतुः पुद्गलोपचयजः शक्तिविशेषः। सा च षड्भेदात् षोढा, तद्यथा—यया बाह्याहारमादाय खलरसरूपतया परिणमयति सा शक्तिराहारपर्याप्तिः। यया तु रसीभूतमाहारं रसासृग्मांसमेदास्थिमज्जशुक्ररूपसप्तधातुतया परिणमयति सा शरीरपर्याप्तिः। यया तु धातुभूतमाहारमिन्द्रियतया परिणमयति सेन्द्रियपर्याप्तिः। यया तूच्छ्वासप्रायोग्यवर्गणाद्रव्यमादायोच्छ्वासतया परिणमय्य मुञ्चति, सोच्छ्वासपर्याप्तिः। यया तु भाषाप्रायोग्यं वर्गणाद्रव्यमादाय भाषारूपतया परिणमय्य मुञ्चति, सा भाषापर्याप्तिः। यया तु मनःप्रायोग्यवर्गणाद्रव्यमादाय मनस्त्वेन परिणमय्य मुञ्चति, सा शक्तिर्मनःपर्याप्तिः। यदुक्तं—आहारसरीरिंदियऊसासवओमणोभिनिव्वत्ति। होइ जओ दलियाउ करणं पई सा उ पज्जत्ती ॥ १ ॥ अस्या व्याख्या—इह पर्याप्तिर्द्विधा, लब्धितः करणतश्च। तत्र योऽग्रे स्वप्रायोग्याः सर्वा अपि पर्याप्तीः समर्थयिष्यते तस्य योग्यतया लब्धिमाश्रित्य भवान्तरालादावपि पर्याप्तिरस्ति। करणपर्याप्तिस्त्वर्थक्रियां प्रति साधकतमत्वात्करणान्याहारशरीरादीन्युच्यन्ते, तानि यदा सर्वाण्यपि स्वप्रायोग्याण्यारभ्यन्ते तदा भवतीत्यतो लब्धिपर्याप्तिव्यवच्छेदेन करणपर्याप्तिलक्षणमाह—'करणं पई' इत्यादि, तुशब्दो लब्धिपर्याप्तिरस्याभेदख्यापनार्थो भिन्नक्रमश्च

करणे तु वर्णितस्वं प्रति करणमाश्रित्य पुनः सा पर्याप्तिः कासामित्याह—आहारशरीरेन्द्रियोच्छ्वासवाचोमनसामभिनिर्वृत्ति-निष्पत्तिर्भवति यतो दलिकादाहारशरीरादिप्रायोग्यवर्गणापुद्गलसमूहलक्षणात्तद्दलिकं करणमाश्रित्य पर्याप्तिरित्यर्थः । ननु पर्याप्तिः पुद्गलोपचयजः शक्तिविशेषो व्याख्यातः, तत्कथमनाहारादिनिर्वर्तकं दलिकं पर्याप्तित्वेनोच्यते ? सत्यं, शक्तिरेव पर्याप्तिः, किन्तु तस्या आहारादिप्रायोग्यदलिकैरेवोपचयः क्रियते, अतः कारणे कार्योपचारात् तदपि दलिकं पर्याप्तित्वेनोक्तमित्यदोषः । तदेवमेता यथास्वमेकेन्द्रियविकलेन्द्रियसंज्ञिपञ्चेन्द्रियाणां चतुष्पञ्चषट्सङ्ख्याः पर्याप्तयो यस्योदयाद्भवन्ति, तत्पर्याप्तकं नाम । येषां हि पर्याप्तयः सन्ति, ते मत्वर्थीयाल्प्रत्यये पर्याप्तास्त एव पर्याप्तकास्तद्विपाकवेद्यं कर्मापि पर्याप्तकनाम । ननु शरीरपर्याप्त्यैव शरीरं भविष्यति, किं पूर्वोपवर्णितशरीरनाम्ना ? नैतदेवं, साध्यभेदात्, तथाहि—शरीरनाम्ना जीवेन गृहीतानां पुद्गलानामौदारिकादिशरीरत्वेन परिणतिः साध्या, शरीरपर्याप्तिस्त्वारब्धशरीरस्य परिसमाप्तिरिति । ता एव यथास्वं भक्तयो विकला अपर्याप्तय उच्यन्ते, ता यस्योदयाद्भवन्ति, तदपर्याप्तनाम । शब्द-व्युत्पत्तिस्त्वर्थः । यस्योदयात् प्रत्येकं शरीरं भवत्येकैकस्य जीवस्यैकैकं शरीरमित्यर्थः, तत्प्रत्येकनाम । यस्योदयादनन्तानां जीवानां साधारणमेकं शरीरं भवति, तत्साधारणनाम । यदुदयाद्दन्तास्थिप्रभृतिस्थिरावयवानां निष्पत्तिर्भवति तत् स्थिर-नाम । यदुदयेन भ्रूजिह्वाद्यवयवा अस्थिरा भवन्ति, तदस्थिरनाम । यस्योदयान्नाभेरुपरि शिरःप्रभृतिशुभावयवा भवन्ति तच्छुभनाम । शिरः प्रभृतिभिर्हि स्पृष्टः परो हृष्यतीति तेषां शुभत्वम् । यस्योदयान्नाभेरधः पादादयोऽशुभावयवा भवन्ति तदशुभनाम । पादादिभिर्हि स्पृष्टः परो रुष्यतीति तेषामशुभत्वम् । यदुदयान्मधुरगम्भीरोदारस्वरो भवति, तत् सुस्वरनाम ।

यदुदयात् स्वरभिन्नहीनदीनस्वरो भवति तदु स्वरनाम। यदुदयात् सर्वस्य प्रियः प्रल्हादकारी भवति तत् सुभगनाम। तद्विपरीतं तु दुर्भगनाम। यदुदयेन यत्किञ्चिदपि ब्रुवाणः सर्वस्योपादेयवचनो भवति तदादेयनाम। यदुदयाद्युक्तमपि ब्रुवाणः परिहार्यवचनो भवति तदनादेयनाम। सामान्यतस्तपःशौर्यत्यागादिसमुपार्जितयशसा कीर्त्तनं संशब्दनं श्लाघनं यशःकीर्त्ति-रथवा सर्वदिग्गामिनी पराक्रमकृता वा सर्वजनोत्कीर्त्तनीयगुणता यश उच्यते। एकदिग्गामिनी दानपुण्यकृता वा कीर्त्तिर्यशश्च कीर्त्तिश्च यशःकीर्त्ती ते यदुदयाद्भवतः तद्यशःकीर्त्तिनाम। तद्विपर्ययादयशःकीर्त्तिनाम। सर्वप्राणिनां शरीराणि यदुदया-दात्मीयात्मीयापेक्षया नैकान्तगुरूणि नैकान्तलघूनि भवन्ति तदगुरुलघुनाम। एकान्तगुरुत्वे हि वोढुमशक्यानि स्युरेकान्तल-घुत्वे तु वायुनाऽपि ह्रियमाणानि धारयितु न पारयेरन्निति। स्वशरीरावयवैरेव प्रतिजिह्वावृन्दलम्बकचौरदन्तादिभिः शरीरान्तर्वर्द्धमानैर्यदुदयादुपहन्यते पीड्यते तदुपघातनाम। यदुदयादुःप्रधृष्यतया शरीराकृतिः परानाहन्त्यभिभवति तत्परा-घातनाम। यदुदयादुच्छ्वसनलब्धिरात्मनो भवति तदुच्छ्वासनाम। सर्वलब्धीनां क्षायोपशमिकत्वादौदयिकीलब्धिर्न सम्भ-वतीति चेन्नैतदस्ति, वैक्रियाहारकादिलब्धीनामौदयिकीनामपि सम्भवाद्वीर्यान्तरायक्षयोपशमोऽपि च तत्र निमित्तीभवतीति सत्यप्यौदयिकत्वे क्षायोपशमिकव्यपदेशोऽपि न विरुध्यते। अस्त्वेवं किन्तूच्छ्वासनाम्नैवोच्छ्वसनस्य सिद्धत्वादुच्छ्वास-पर्याप्तिर्निर्विषयेति चेत् ? नैवं, सतीमप्युच्छ्वासनामोदयजनितामुच्छ्वसनलब्धिमात्मशक्तिविशेषरूपामुच्छ्वासपर्याप्तिमन्तरेण व्यापारयितुं न शक्नुयाद् यथाहि-शरीरनामोदयेन गृहीता अप्यौदारिकादिशरीरपुद्गलाः शक्तिविशेषरूपां-शरीरपर्याप्ति विना शरीररूपतया परिणमयितुं न शक्यन्त इति शरीरनाम्नः पृथगिष्यते शरीरपर्याप्तिरेवमत्राप्युच्छ्वासनाम्नः पृथगुच्छ्वास-

पर्याप्तिरेष्ट्व्या, तुल्ययुक्तित्वादिति । यदुदयाज्जन्तुशरीराण्यात्मनाऽनुष्णान्यप्युष्णप्रकाशलक्षणमातपं कुर्वन्ति तदातपनाम, तदुदयश्च रविबिम्बादौ पार्थिवशरीरेष्वेव, न वह्न्यादिषु, सत्यपि हि तेषूष्णप्रकाशरूपत्वेऽसावातपो न भवति, किं तर्हि तत्र तेजोजन्तुशरीराण्येवोष्णस्पर्शोदयेनोष्णानि लोहितवर्णनामोदयात्तु प्रकाशयुक्तानि भवन्तीति । यदुदयाज्जन्तुशरीराण्यनुष्णप्रकाशात्मकमुद्योतं कुर्वन्ति, यथा यतिदेवोत्तरवैक्रियचन्द्रग्रहनक्षत्रताराररत्नौषधिमणिप्रभृतयस्तदुद्योतनाम । यदुदयाज्जन्तुशरीरेष्वङ्गप्रत्यङ्गानां प्रतिनियतस्थानवृत्तिता भवति, तत्सूत्रधारकल्पं निर्माणनाम । तदभावे हि तद्भृतककल्पैरङ्गोपाङ्गनामादिभिर्निर्वर्तितानामपि शिर उर उदरादीनां स्थानवृत्तेरनियमः स्यात् । यदुदयाज्जीवः सदैव मनुजासुरलोकपूज्यमुत्तमोत्तमं धर्मतीर्थस्य प्रवर्तयितृत्वमवाप्नोति तत्तीर्थकरनामेत्युक्तं सप्रभेदं नामेति ॥ अधुना गोत्रमुच्यते—तत्र 'गुङ्शब्दे' इत्यस्माद्धातोर्गूयते संशब्द्यते यथावस्थितरूपतया अनेन उच्चैर्नीचैः कुलोत्पत्त्यादिलक्षणेन पर्यायेणेति पूत्प्रत्यये गोत्रम्, तादृशविपाकवेद्या कर्मप्रकृतिरपि गोत्रम् । तच्च द्विधा उत्तमजातिकुलबलरूपतपऐश्वर्यश्रुतलाभाख्यैरष्टभिः प्रकारैर्वेद्यत इत्युच्चैर्गोत्रम् । तद्विपर्ययान्नीचैर्गोत्रं, गुणहीनोऽप्युत्तमजात्यादिवशाज्जनैः पूज्यते, जात्यादिहीनस्तु गुणवानपि निन्द्यत इत्युक्तं गोत्रम् ॥ अधुनान्तरायम् । तत्र जीवं चार्थसाधनं चान्तराऽयते पततीत्यन्तरायं जीवस्य दानादिकमर्थं सिसाधयिषोर्विघ्नोभूयाऽन्तरा पततीत्यर्थः । तच्च पञ्चधा, दानस्यान्तरायं दानान्तरायमेवं लाभादिष्वपि वाच्यमिदमुक्तं भवति, सत्यपि दातव्ये वस्तुनि समागते च गुणवति पात्रे दानस्य चोत्तमं फलविशेषं विद्वा(द)नपि यदुदयाद्दातुं नोत्सहते, तद्दानान्तरायम् । प्रसिद्धादपि दातुर्गृहे विद्यमानमपि च देयमर्थजातं याच्ञाकुशलो गुणवानपि च याचको यदुदयान्न लभते तल्लाभान्तरायम् । सकृद्भुज्यत इति भोगः आहारमाल्यविले-

चित्सरावर्त्तन्ते, ता ध्रुवबन्धिन्यस्ताश्च सप्तचत्वारिंशद्भवन्ति, तद्यथा–ज्ञानावरणानि पञ्च, दर्शनावरणानि नव, मिथ्यात्वं, षोडश कषायाः, भयं, जुगुप्सा, तैजसकार्मणवर्णगन्धरसस्पर्शागुरुलघूपघातनिर्माणानि, अन्तरायाणि पञ्चेति । तदुक्तं–"नाणं-तरायदसगं दंसणनवमिच्छ सोलस कसाया । भयदुगंच्छानिम्माणअगुरुवण्णाइउवघायं ॥ १ ॥ तेयाकम्मं च इमा सीयालीसं हवंति धुवबंधा । तेवत्तरि पगईओ सेसाओ अधुवबन्धाओ ॥ २ ॥" त्ति एतासां सप्तचत्वारिंशतो ध्रुवबन्धिनीनां प्रकृतीनां साद्यादयश्चत्वारोऽपि विकल्पा प्राप्यन्ते । तत्र ज्ञानावरणपञ्चकचक्षुरचक्षुरवधिकेवलदर्शनचतुष्टयान्तरायपञ्चकलक्षणानां चतुर्दशप्रकृतीनां सूक्ष्मसम्परायचरमसमये व्यवच्छिन्नबन्धानामुपशान्तमोहोऽबन्धको भूत्वा पुनरपि प्रतिपततो यदैता बध्नाति, तदैतासां सादिर्बन्धः । उपशान्तमोहगुणस्थानं चाप्राप्तपूर्वाणां पूर्वोक्तहेतुतोऽनादिर्ध्रुवाध्रुवौ यथासङ्ख्यमभव्यभव्यपेक्षया पूर्ववद्वक्तव्यौ । सञ्ज्वलनचतुष्टयस्य त्वनिवृत्तिबादरे बन्धव्यवच्छेदं कृत्वोपरि गत्वा पुनः प्रतिपतितस्य जन्तोस्तानेव बध्नतः सादिस्तद्बन्धस्तच्च स्थानमप्राप्तपूर्वस्यानादिः । ध्रुवाध्रुवौ यथाक्रममभव्यभव्ययोः पूर्ववद्वाच्यौ । निद्राप्रचलातैजसकार्मणवर्णगन्धरसस्पर्शागुरुलघूपघातनिर्माणभयजुगुप्सालक्षणानां त्रयोदशानां प्रकृतीनामपूर्वकरणे यथास्थानं बन्धव्यवच्छेदं कृत्वोपरि गत्वा प्रतिपत्य पुनस्ता एव बध्नतः सादिस्तद्बन्धः शेषास्त्वनाद्यादयः पूर्ववद्वाच्याः । चतुर्णां प्रत्याख्यानावरणानां देशविरतसम्यग्दृष्टौ बन्धव्यवच्छेदं कृत्वोपरि गत्वा प्रतिपत्य पुनस्तानेव बध्नतः सादिस्तद्बन्धः, शेषास्त्रयः पूर्ववत् । अप्रत्याख्यानावरणानां

१ ज्ञानान्तरायदशकं दर्शननव मिथ्यात्वं षोडशकषाया । भयदुर्गुच्छानिर्माणागुरुलघुवर्णादिषूपघातम् ॥ १ ॥ तैजसकार्म्मणं चेमाः सप्तचत्वारिंशत् भवन्ति ध्रुवबन्धिन्यः । त्रिसप्ततिः प्रकृतयः शेषास्त्वध्रुवबन्धिन्य इति ॥ २ ॥

चतुर्णामविरतसम्यग्दृष्टौ बन्धव्यवच्छेदस्तदुपरि च देशविरतादौ गत्वा पुनः प्रतिपत्य तानेव बध्नतः सादिः, शेषास्त्रयः पूर्ववत् । स्त्यानर्द्धित्रिकमिथ्यात्वानन्तानुबन्धिनां मिथ्यादृष्टिः सम्यक्त्वमवाप्याबन्धको भूत्वा प्रतिपत्य च यदा पुनस्तानेव बध्नाति, तदैतद्बन्धः सादिः शेषास्त्वनाद्यादयः पूर्ववद्भाव्या इति । ' साई अद्धुवियाओ सेसा परियत्तमाणीओ 'त्ति, परावर्त्यन्तेऽपरस्याः प्रकृतेर्बन्धारम्भेण बन्धान्निवर्त्यन्ते इति परावर्त्तमानाः, परावृत्य २ विमुच्य २ पुनः पुनर्बध्यन्त इत्यर्थः, ताश्च त्रिसप्ततिर्भवति । तद्यथा-सातासाते, वेदत्रयं, हास्यरतियुगलं, अरतिशोकयुगलं, चत्वार्यायूंषि, चतस्रो गतयः, पञ्चजातयः, औदारिकवैक्रियाहारकशरीराणि त्रीणि, षट्संस्थानानि, त्रीण्यङ्गोपाङ्गानि, षट्संहननानि, चतस्र आनुपूर्व्यः, पराघातं, उच्छ्वासं, आतपं, उद्योतं, विहायोगतिद्वयं, त्रसादिविंशतिः, तीर्थंकरं, उच्चैर्गोत्रं, नीचैर्गोत्रं चेतिएतासु च मध्ये सातासातस्त्रीपुंनपुंसकवेदौदारिकवैक्रियाद्याः प्रकृतयस्तावत्परस्परविरुद्धत्वात् युगपन्नबध्यन्त इति परावर्त्तमाना उच्यन्ते । पराघातोच्छ्वासनाम्नी तु पर्याप्तकनाम्नैव सह बध्यते, नापर्याप्तकनाम्नेति तयोः परावर्त्तमानता । आतपं त्वेकेन्द्रियप्रायोग्यबन्धेनैव सह बध्यते नान्यदा । उद्योतं पुनस्तिर्यग्गतिसहचरितमेव बध्यते, नान्यदेति तयोः परावर्त्तमानता । तीर्थंकराहारके तु यथाक्रमं सम्यक्त्वसंयमगुणवन्त एव बध्नन्ति नापरे, इत्यनयोरपि परावर्त्तमानता । तदेवमेताः परावर्त्तमानास्त्रिसप्ततिप्रकृतयो ध्रुवबन्धिनीभ्यः शेषा उद्धरिता बन्धमाश्रित्य सादिका अध्रुवाश्च भवन्ति, नियतकाल एव बध्यमानत्वात् सादिरेतासां बन्धोऽध्रुवबन्धित्वादेव जातोऽपि पुनर्निवर्त्तन्त इत्यध्रुव इति तात्पर्यमिति गाथार्थः ॥ ४० ॥ साम्प्रतं मूलप्रकृतिबन्धस्थानानि, तेषु च भूयस्कारालपतरावस्थितावक्तव्यकलक्षणबन्धभेदान् प्ररूपयन्नाह-

भा० एत्तोत्तरासु सायाइवन्नणं तत्थ ताव धुवअधुवा। जहसंखं सगचत्ता तिवत्तरी चिय इमा ताओ ॥ २० ॥
धुववंधी भय १ कुच्छा १ कसाय १६ मिच्छं१तराय ५ आवरणा १४। वन्नचउ ४ तेयकम्मा२ गुरुलहु १ निमिणो१
वघाया १ य ॥२१॥ अधुवुरल २ विउव २ हारग २ गइ ४ जाई५ खगइ २ आणुपुवी य ४। संघयणा ६ गी ६ तसवीसु २०
स्सासं १ तित्था १ यवु१ज्जोयं १ ॥ २२ ॥ परघाय १ वेयणीयाउ४ ४ गोय २ हासाइदुजुयल ४ तिवेयं ३। इयपय-
डीओ भणिया तेवत्तरि अधुववंधा उ ॥ २३ ॥ तत्थ धुवाणं बंधो चउविगप्पो जहा उ पणनाणा। विग्घपण दंसचउगं
इगदसमगुणी न वंधेइ ॥२४॥ दसमगुणी नो बंधइ संजलणाणं चउक्कयं तह य। नामधुववंधिनवगं निद्ददुगं भयदुगुंछा १ य
॥ २५ ॥ एत्थ किर नाम धुववंधि- नवगमेवं भणंति तव्विउणो। वन्नचउ ४ तेय१कम्मा१गुरुलहु १ निमिणो१वघाया १ य
॥ २६ ॥ नो वंधइ नवमगुणी छट्ठगुणी पच्चखाणचउगं च। नो वंधइ देसजई अप्पच्चक्खाणचउगं च ॥ २७ ॥ अणचउगं
मिच्छत्तं थीणतिगं नो य वंधए सासो। उवसंतसुहुममाई जइया किर पडिया ते पुण वि ॥२८॥ वंधंति भणियपयडीतइया इह
होइ साइवंधो चि। वंधोणाई उवसंत-माइठाणं अपत्ताणं ॥ २९ ॥ भवाणं वंधंते अद्धुववंधो धुवो अभवाणं। परियत्तमाणि-
याओ अद्धुविया इह भणिज्जंति ॥ ३० ॥ तासि अधुवत्तमेवं भाविज्जइ जह पराघा उस्सासं। पज्जत्तेणेव समं बज्झइ नन्नत्थ
उ अधुवा ॥ ३१ ॥ एगिंदियपाओगियवंधसमं आयवं तु वंधेइ। नोज्जोयं तिरियगई पवंधए नेयमन्नत्थ ॥ ३२ ॥ तित्थयरा-
हारदुगं नो वंधइ सम्मसंजमेहि विणा। सायासायाथीपुमपभिईं सेसाउ पयडीओ ॥ ३३ ॥ जुगवं नो बज्झंती परोप्परं
जेण ता विरुद्धाओ। इय तेवत्तरिअधुवा परिमिय समए व बज्झंति ॥ ३४ ॥ इय साईओ जेणं वंधो जाओ पुणो नियत्तेइ।

इय अधुवत्तं ताहि अणाइ धुवसंभवो नत्थि ॥ ३९ ॥

चत्तारि पगइठाणाणि तिन्नि भूगारअप्पतरगाणि । मूलपगडीसु एवं अवट्ठिओ चउसु नायव्वो ॥ ४१ ॥

टी० इहपूर्वं तावद्भूयस्कारादीनां स्वरूपमुच्यते–तत्रैकविधाद्यल्पतरबन्धको भूत्वा, यत्र पुनरपि षड्विधादिबहुविधबन्धको भवति, स प्रथमसमये भूयस्कारबन्धः । यत्र त्वष्टविधादिबहुविधबन्धको भूत्वा पुनरपि सप्तविधाद्यल्पतरबन्धको भवति स प्रथमसमय एवाल्पतरबन्धः । यत्र तु प्रथमसमये एकविधादिबन्धको भूत्वा द्वितीयसमयादिष्वपि तावन्मात्रमेव बध्नाति सोऽवस्थितबन्धः । यत्र तु सर्वथाऽबन्धको भूत्वा पुनः प्रतिपत्य बन्धको भवति, असावाद्यसमयेऽवक्तव्यकबन्धो, अयं तूत्तरप्रकृतीनामेव भवति, न मूलप्रकृतीनां, तासां सर्वथाऽबन्धकस्यायोगिकेवलिनः सिद्धस्य वा प्रतिपाताभावेन पुनर्बन्धाभावात्, तदेवमसौ चतुर्द्धा बन्धो भवति । तदुक्तं–" एकादहिगे पढमो एकादीऊणगम्मि बीओ य । तत्तियमेत्ते तइओ पढमे समये अवत्तव्वो ॥ १ ॥ सूत्रेऽपि दृश्यते असौ, केवलं प्रक्षेपगाथेति । इदानीं प्रकृतगाथार्थः प्रस्तूयते, तत्र मूलप्रकृतिबन्धस्थानानि पूर्वोक्तस्वरूपाणि चत्वारि भवन्ति, तद्यथा–एकविधस्य बन्धः षड्विधस्य सप्तविधस्य अष्टविधस्य च । इह चोक्तलक्षणा भूयस्कारबन्धास्त्रयोऽल्पतरबन्धा अपि त्रयो भवन्ति, तद्यथा–आयुर्बन्धकालेऽष्टविधं बद्ध्वा पुनरप्यायुर्बन्धोपरमे सप्तविधं बध्नत आद्यसमये प्रथमोऽल्पतरबन्धो द्वितीयादिसमयेषु त्ववस्थितबन्धः । सप्तविधबन्धादपि सूक्ष्मसम्परायावस्थायां षड्विधबन्धगतस्याद्यसमये द्वितीयोऽल्पतरबन्धो द्वितीयादिसमयेषु त्ववस्थितबन्धः । षड्विधबन्धादप्युपशान्तमोहाद्यवस्थायामेकविधबन्धगतस्या-

१ एकादधिके प्रथम: एकादूनके द्वितीयश्च । तावन्मात्रकतृतीय: प्रथमे समयेऽवक्तव्य: ॥ १ ॥ २ प्रक्षेपेऽपि प्र. ।

यसमये तृतीयोऽल्पतरबन्धो द्वितीयादिसमयेषु त्ववस्थितबन्ध इति त्रयोऽल्पतरबन्धाः। एकविधं च बद्ध्वा उपशान्तमोहात्करणात् प्रतिपत्य सूक्ष्मसम्पराये पुनः षड्विधं बध्नत आद्यसमये प्रथमो भूयस्कारबन्धो - द्वितीयादिसमयेषु त्ववस्थितबन्धस्ततोऽप्यथ स्मात् प्रतिपत्य सप्तविधं बध्नत आद्यसमये द्वितीयो भूयस्कारबन्धो द्वितीयादिसमयेषु त्ववस्थितबन्धः। आयुर्बन्धकाले त्वष्टविधबन्धकस्याद्यसमय एव तृतीयो भूयस्कारबन्धो द्वितीयादिसमयेषु त्ववस्थितबन्ध इति त्रयो भूयस्कारबन्धाः। एवं'ति यथा भूयस्काराल्पतरबन्धावगमनात्वं मूलप्रकृतिषु विषये यान्येकविधबन्धादीनि चत्वारि बन्धस्थानानि। तेषु चतुर्ष्वपि बन्धस्थानेष्ववस्थितो भवति, ज्ञातव्योऽवस्थितबन्धश्चतुर्विधोऽपि बोद्धव्यश्च इत्यर्थः। चतुर्ष्वपि बन्धस्थानेषु द्वितीयादिसमयेषु तस्यावश्यंभावित्वात् स च भूयस्काराल्पतरप्रथमसमयाद्धावित्व एवावक्तव्यकबन्धस्तु मूलप्रकृतिषु न भवतीत्युक्तमेवेति गाथार्थः ॥ ४१ ॥ साम्प्रतमुत्तरप्रकृतिषु बन्धस्थानानि। तेषु च यथासम्भवं भूयस्कारादीनाह—

भा० इगि मूलपयडिबंधस्स य चत्तारि हुंति ठाणाणि। एगविहछव्विहसत्तविहअडविहबंधाभिहाणाणि ॥ ३६ ॥ तत्थेगविहाईसुं पंचट्ठाणेसु चउसु पत्तेयं। भूयक्कारप्पयरोऽवट्ठियओ तह अवत्तव्वो ॥३७॥ बंधो चउहा तत्थ य इगाइअप्पयरबंधगो होउं। तो पुणरवि तब्भेयाइयाण बहुबंधगो होइ ॥ ३८॥ सो भूयगारबंधो पढमे समयम्मि जत्थऽडविहाइ। बहु बंधियपुणरवि गंतविहाई अप्पयरबंधि ॥ ३९ ॥ अप्पयरबंधगो सो पढमे समयम्मि जत्थिगविहाइ। पढमसमयम्मि बंधइ दुइयाइ सु ति य तम्मेत्त ॥४०॥ बंधइ सोऽवट्ठियओ बंधो जत्थ उ न किंचि बंधेउ। पुण पडियबंधगो सो उ आइसमये अवत्तव्वो ॥४१॥ एगो उवसमपदीण देर नो मूलपयडिणं नत्थि। अब्बंधगो अजोगी नो बंधइ सो पुण तदुत्तं ॥ ४२॥ एगादहिगे पढमो एगाई-

ऊणगो उ बीओ उ । तत्तियमेत्तो तइओ पढमे समये अवत्तव्वो ॥४३॥ एवं च ठिए इगछग-सत्तट्ठविहेसु बंधठाणेसु । चउसु-
वि तिन्नंतराइं वुड्ढीए भूयकाराइं ॥ ४४ ॥ एवं तिन्निप्पयरा नवरं हाणीएँ ते किर हवंति। तब्भावणिया सुगमा एगविहाईसु
चउसुं तु ॥ ४५ ॥ दुइयसमयाइसुं ठाणेसु हो अवट्ठिओ बंधो । सुत्ते अओ य भणियं अवट्ठिओ चउसु नायव्वो ॥ ४६ ॥
अवत्तव्वो नो मूलि-गासु संभवइ इइ पुरा भणियं । संपइ उत्तरयपडिसु बंधट्ठाणाणि तेसुं च ॥ ४७ ॥ बंधा भूयकाराइया उ
जहसंभवं मुणेयव्वा । तत्थ य पढमं तिन्नी ठाणाणी दंसणे वोच्छं ॥ ४८ ॥

तिन्नि दस अट्ठठाणाणि दंसणावरणमोहनामाणं । एत्थ य भूओगारो सेसेसेगं हवइ ठाणं ॥ ४९ ॥

टी० इह दर्शनावरणस्योत्तरप्रकृतीनां त्रीणि बन्धस्थानानि भवन्ति, मोहस्य दश, नाम्नोऽष्टाविति यथासङ्ख्य सम्ब-
न्धः । एष्वेव च त्रिषु कर्मसु ' भूओगारो 'त्ति द्वारस्यादिशब्दस्य दर्शनाद्भूयस्कारादयश्चत्वारोऽपि बन्धविकल्पा भवन्ति ।
तदुक्तं–" भूयोगारग्गहणे गहिया सेसा हवंति चत्तारि । सुत्ते तालपलंबे लुत्तो जह आदिसद्दो उ ॥ १ ॥ " कथमिति चेत् ?
उच्यते–दर्शनावरणोत्तरप्रकृतीनां तावदमूनि त्रीणि बन्धस्थानानि, नवविधं षड्विधं चतुर्विधं चेति । तत्र निद्रापञ्चकं चक्षुर-
चक्षुरवधिकेवलदर्शनावरणचतुष्टयं चेत्येतन्नवविधं, एतच्च सास्वादनं यावद्बध्यते, ततः परं स्त्यानर्द्धित्रिकस्य बन्धो व्यवच्छि-
द्यते, अतो मिश्रादिषु शेषं षड्विधं बध्नत आद्यसमये प्रथमोऽल्पतरबन्धः । एतच्च षड्विधमपूर्वकरणसङ्ख्येयभागं यावद्बध्नाति ।
ततः परं निद्राद्विकस्य बन्धे व्यवच्छिन्ने शेषं चतुर्विधं बध्नत आद्यसमये द्वितीयोऽल्पतरबन्धः । एतच्चतुर्विधं सूक्ष्मसम्परायं

१ भूयस्कारग्रहणे गृहीताः शेषा भवन्ति चत्वारि । सूत्रे तालपलम्बे लुप्तः यथाऽऽदिशब्दस्तु ॥ १ ॥

यावद्बध्यते। ततः कम्पनिपुणापि प्रतिपत्य षड्विधं बध्नत आद्यसमये प्रथमो भूयस्कारबन्धस्ततोऽपि प्रतिपत्य नवविधं बध्नत आद्यसमये द्वितीयो भूयस्कारबन्धोऽत्र च नवविधादिषु त्रिष्वपि बन्धस्थानेषु द्वितीयादिसमयेषु तदेव बध्नतोऽवस्थितबन्धाः, यदा तूपशान्तमोहावस्थायां दर्शनावरणप्रकृतीनां सर्वथाऽबन्धको भूत्वा पुनरद्धाक्षयेणैव प्रतिपत्य चतुर्विधं बध्नाति, तदाद्यसमयेऽवक्तव्यकबन्धो भूयस्काराद्युचितलक्षणायोगात् भूयस्कारादिभिर्विकल्पैर्वक्तुं न शक्यन्त इति कृत्वा, द्वितीयादिसमयेषु त्वत्राप्यवस्थितबन्धः। यदा तूपशान्तमोहावस्थायामेवायुःक्षयेणानुत्तरसुरेषूत्पद्यते तदा तत्र प्रथमसमय एव षड्विधं बध्नतो द्वितीयोऽवक्तव्यकबन्धो द्वितीयादिसमयेषु त्ववस्थितबन्धस्तदेवमत्र द्वौ भूयस्कारबन्धौ द्वावल्पतरबन्धौ द्वाववक्तव्यकबन्धौ अवस्थितबन्धास्तु गणनया एव भवन्तोऽपि बन्धस्थानानि त्रीण्येवेति तद्भेदास्त्रय एव भवन्ति। मोहनीयस्योत्तरप्रकृतिबन्धस्थानानि दशामूनि भवन्ति। २२। २१। १७। १३। ९। ५। ४। ३। २। १। तत्र मिथ्यात्वं, षोडश कषायाः, अन्यतर एको वेदो, हास्यरतियुगलारतिशोकयुगलयोरन्यतरद्युगलं भयं जुगुप्सेत्येतद् द्वाविंशतिविधं मिथ्यादृष्टिरेव बध्नाति। एषैव द्वाविंशतिर्मिथ्यात्वरहिता एकविंशतिर्भवति, नवरं वेदः स्त्रीपुंवेदयोरन्यतरो वाच्यः, तां च सास्वादन एव बध्नाति। अनन्तानुबन्धिचतुष्टयवर्ज्याः द्वादश कषायाः पुंवेदः पूर्वोक्तयुगलद्वयेऽन्यतरद्युगलं भयं जुगुप्सा चेत्येताः सप्तदश। ता एव प्रत्याख्यानावरणचतुष्टयवर्ज्यास्त्रयोदश भवन्ति। तद्बन्धश्च देशविरत एव भवति। ता एव प्रत्याख्यानावरणचतुष्टयवर्ज्या नव प्रमत्तो ऽप्रमत्तोऽपूर्वकरणाश्चैता एव बध्नीतः, नवरं हास्यरतियुगलमेवानयोर्बन्धमेति, नारतिशोकयुगलम्। चत्वारः सञ्ज्वलनाः पुरुषवेदश्चेत्येताः पञ्चानिवृत्तिबादरो बध्नाति। पुंवेदबन्धे व्यवच्छिन्ने

स एव सञ्ज्वलनचतुष्टयं बध्नाति । क्रोधबन्धे व्यवच्छिन्ने शेषं सञ्ज्वलनत्रयं स एव बध्नाति । मानबन्धे व्यवच्छिन्ने शेषं सञ्ज्वलनद्वयं स एव बध्नाति । मायाबन्धे व्यवच्छिन्ने शेषमेकं सञ्ज्वलनलोभं स एव बध्नाति, नान्ये । एषु च दशसु बन्धस्थानेषु नव भूयस्कारबन्धा भवन्ति । एकविधबन्धादि प्रतिपत्योपशमश्रेण्यां द्विविधं बध्नत आद्यसमये प्रथमो भूयस्कारबन्धो द्विविधात्त्रिविधे गतस्य द्वितीय, एवं चतुर्थे तावद्वेयम्, यावदेकविंशतिबन्धात् द्वाविंशतिबन्धं गतस्य नवमो भूयस्कारबन्धः । अल्पतरबन्धास्त्वष्टौ द्वाविंशतिविधबन्धात् सप्तदशविधबन्धं गतस्याद्यसमये प्रथमोऽल्पतरबन्धः । सप्तदशविधात्त्रयोदशविधं गतस्य द्वितीयस्ततोऽपि नवविधे गतस्य तृतीय इत्येवं तावद्वेयम्, यावद् द्विविधबन्धादेकविधबन्धं गतस्याष्टमोऽल्पतरबन्धः । ननु द्वाविंशतिबन्धादेकविंशतिगमनेन नवमोऽल्पतरबन्धः कस्मान्नोक्त इति चेत् ? नैवम्, असम्भवादेव, तथाहि द्वाविंशतिं मिथ्यादृष्टिरेव बध्नात्येकविंशतिं तु सास्वादन एवेत्युक्तं, न च मिथ्यादृष्टिरनन्तरभावेन सास्वादनत्वं व्रजति । येन द्वाविंशतेरेकविंशतिगमनं स्यात्, किन्तूपशमसम्यग्दृष्टिरेव सास्वादनभावं प्रतिपद्यते, तस्मात् द्वाविंशतेः सप्तदशबन्धगमनमेव भवतीत्यष्टावेवाल्पतरबन्धाः । अवक्तव्यकबन्धौ तु द्वौ भवतः । यदा सूपशान्ताद्धाक्षयेण प्रतिपत्य पुनरेकं सञ्ज्वलनलोभं बध्नाति तदाद्यसमये प्रथमोऽवक्तव्यकबन्धोऽथोपशान्तमोहावस्थायामेवायुःक्षयेण सुरेष्वनुत्तरसुरेषूत्पद्यते, तदाऽऽद्यसमय एव सप्तदशविधं बध्नतो द्वितीयोऽवक्तव्यकबन्धः । दशस्वपि मोहनीयबन्धस्थानेषु द्वितीयादिसमयेष्ववस्थितबन्धो लभ्यत इत्यवस्थितबन्धा दश । म-
देरे " नव भूयगारबंधा अट्ठेव य हुंति अप्पतरबंधा । दो अव्वत्तगबंधा अवट्ठिया दस उ मोहम्मि ॥ १ ॥ नाम्नोऽष्टौ बन्ध-

१ नव भूयस्कारबन्धा अष्टौ एव भवन्त्यल्पतरबन्धाः । द्वौ अवक्तव्यकबन्धौ अवस्थिता दशैव मोहे ॥ १ ॥

[illegible]कार बन्धः । इतोऽपि [illegible]

स्थानान्यमूनि । २३ । २५ । २६ । २८ । २९ । ३० । ३१ । १ । तत्र तैजसं कार्मणं वर्णादिचतुष्कं अगुरुलघूपघातं निर्माणमित्येता नव प्रकृतयो ध्रुवबन्धिन्यः सर्वैरपि चतुर्गतिकजीवैरप्राप्तविशिष्टगुणैः प्रतिसमयमवश्यं बध्यमानत्वात्तथा तिर्यग्गतिस्तिर्यगानुपूर्वी एकेन्द्रियजातिः औदारिकशरीरं हुण्डसंस्थानं स्थावरं बादरसूक्ष्मयोरन्यतरत् अपर्याप्तकं प्रत्येकसाधारणयोरन्यतरत् अस्थिरं अशुभं दुर्भगं अनादेयं अयशःकीर्त्तिरित्येताश्चतुर्दश प्रकृतयो ध्रुवबन्धिनीभिर्नवभिः सह त्रयोविंशतिर्भवत्येतां चैकद्वित्रिचतुःपञ्चेन्द्रियाणामन्यतरो मिथ्यादृष्टिरेवापर्याप्तैकेन्द्रियप्रायोग्यं बध्नाति, पञ्चविंशतिं पुनः पर्याप्तैकेन्द्रियप्रायोग्यां तत्रोत्पादयोग्या नाना जीवा बध्नन्ति तत्र च त्रयोविंशतिः पूर्वोक्तैव पराघातोच्छ्वासाभ्यां सह पञ्चविंशतिर्भवति । नवरमपर्याप्तकस्थाने पर्याप्तकं, स्थिरास्थिरशुभाशुभयशःकीर्त्त्ययशःकीर्त्तीनां परावृत्तिर्वाच्या । एवमेषा पञ्चविंशतिरन्येषामपि विकलेन्द्रियादिजीवानां प्रायोग्या नानाभङ्गैः सम्भवति, केवलं ग्रन्थविस्तरभयात् परस्थानत्वाच्च नेहोच्यते, 'सप्ततिकायां' च तद्विस्तरोऽन्वेषणीयः । एवमुत्तरेष्वपि बन्धस्थानेषु गमनिकामात्रमेवाभिधास्यत इति । एषैव पञ्चविंशतिरातपोद्योतयोरेकतरप्रक्षेपे षड्विंशतिर्भवति । सा च पर्याप्तैकेन्द्रियप्रायोग्यैव बध्यते, नान्यप्रायोग्या । बन्धकाश्च तत्रोत्पादकयोग्या जीवा द्रष्टव्याः । अष्टाविंशतिं तु देवगतिप्रायोग्यां तिर्यग्मनुष्यास्तत्प्रायोग्यविशुद्धा बध्नन्ति । तद्यथा-देवगतिर्देवानुपूर्वी पञ्चेन्द्रियजातिर्वैक्रियद्विकं समचतुरस्रं, उच्छ्वासं पराघातं प्रशस्तविहायोगतिस्त्रसं बादरं पर्याप्तं प्रत्येकं स्थिरास्थिरयोः शुभाशुभयोर्यशःकीर्त्त्ययशःकीर्त्त्योः पृथगेकैकमन्यतरद्वाच्यम्, सुभगं सुस्वरमादेयमित्येता एकोनविंशतिर्नवभिर्ध्रुवबन्धिनीभिः सहाष्टाविंशतिर्भवति । एतस्या अष्टाविंशतेर्मध्ये तीर्थकरनामबन्धे प्रक्षिप्ते एकोनत्रिंशद्भवति । तां च सम्यग्दर्शनिनो मनुष्या एव बद्धतीर्थ-

करनामानो देवगतिप्रायोग्यां बध्नन्ति। अथवा पर्याप्तपञ्चेन्द्रियतिर्यक्प्रायोग्यापीयमेकोनत्रिंशदुच्यते। तत्र पर्याप्तैकेन्द्रि-
यप्रायोग्या या पञ्चविंशतिरुक्ता, तस्या मध्ये औदारिकाङ्गोपाङ्गेऽन्यतरसंहननेऽन्यतरस्वरे विहायोगतौ चान्यतरस्यां क्षिप्ता-
यामसौ भवति। नवरमेकेन्द्रियजातिस्थाने पञ्चेन्द्रियजातिनाम स्थावरस्थाने त्रसं वाच्यम्। इदानीं त्रिंशदुच्यते, सा च
पूर्वोक्ताया अष्टाविंशतेर्मध्ये आहारकद्विकक्षेपे भवति। केवलं स्थिरशुभयशःकीर्तय एव वाच्याः, न प्रतिपक्षाः, बन्धकौ चास्या
अप्रमत्तापूर्वकरणाविति। अथवा कश्चिदिह बद्धतीर्थंकरनामकर्मा दिवि समुत्पन्नः, पुनरपि मनुष्येषूत्पत्स्यत इति मनुष्यगति-
प्रायोग्यां तीर्थंकरनामसहितां त्रिंशतिं देवो बध्नाति। तद्यथा—मनुष्यद्विकं पञ्चेन्द्रियजातिरौदारिकद्विकं समचतुरस्रं वज्रर्षभनारा-
चं पराघातं उच्छ्वासं प्रशस्तविहायोगतिस्त्रसादिचतुष्कं स्थिरास्थिरयोः शुभाशुभयोर्यशःकीर्त्ययशःकीर्त्योः पृथगेकैकं वा-
च्यम्। सुभगं सुस्वरं आदेयं तीर्थंकरमित्येता एकविंशतिर्नवभिर्ध्रुवबन्धिनीभिः सह त्रिंशद्भवति। इदानीमेकत्रिंशदुच्यते सा
च देवगतिप्रायोग्या आहारकद्विकबन्धसहिता या पूर्वं त्रिंशदुक्ता तन्मध्ये तीर्थंकरनामबन्धे प्रक्षेपे भवति। तां चाप्रमत्तयतिः
कियन्तमपि भागं यावदपूर्वकरणश्च देवगतिप्रायोग्यामेव बध्नाति। एकविधबन्धं तु यशःकीर्तिस्वरूपमपूर्वकरणानिवृत्ति-
बादरसूक्ष्मसम्परायाः स्वरूपेणैव बध्नन्ति, नतु कस्यचित्प्रायोग्यं, देवगतिप्रायोग्यस्यापि बन्धस्यापूर्वकरणमध्ये व्यवच्छिन्नत्वा-
त्। तदेवं स्वरूपतोऽष्टावप्युक्तानि सङ्क्षेपतो बन्धस्थानानि, साम्प्रतमेतेषु प्रकृता भूयस्कारादय एव विचिन्त्यन्ते। तत्रेह भूयस्का-
रबन्धाः षट्। तथाहि कस्यचिदपर्याप्तैकेन्द्रियप्रायोग्यां त्रयोविंशतिं बद्ध्वा तत्प्रायोग्यविशुद्धिवशात् पञ्चविंशतिविधं बन्धं ग-
तस्याद्यसमये प्रथमो भूयस्कारबन्धः। इतोऽपि तत्प्रायोग्यविशुद्धितः षड्विंशतिबन्धं गतस्य द्वितीयस्तथैवाष्टाविंशतिबन्धं

गतस्य तृतीय एवमुपर्युपरि तावज्ज्ञेयम्, यावदाहारकद्विकसहितां त्रिंशतं बद्ध्वा एकत्रिंशद्बन्धे गतस्याद्यसमये षष्ठो भूयस्कारबन्धोऽपरा यशःकीर्तिलक्षणमेकविधं बद्ध्वा श्रेणेर्निपततः पुनरपूर्वकरणे एकत्रिंशतं बध्नतः षष्ठ एव भूयस्कारबन्धः, न सप्तमः, एकत्रिंशल्लक्षणस्थानकस्योभयथाऽप्येकत्वादिति । अल्पतरबन्धास्तु सप्त तत्रापूर्वकरणे देवगतिप्रायोग्यामष्टाविंशतिमेकोनत्रिंशतं वा त्रिंशतं वा एकत्रिंशतं वा बद्ध्वा तद्बन्धव्यवच्छेदे एकविधबन्धं गतस्याद्यसमये प्रथमोऽल्पतरबन्धः । एकत्रिंशद्बन्धाच्च त्रिंशद्बन्धं गतस्य द्वितीयोऽल्पतरबन्धः । एतच्च कथं सम्भवतीत्युच्यते—इह, कश्चिदाहारकद्विकतीर्थकरनामसहितां पूर्वाभिहितामेकत्रिंशतं बद्ध्वा दिवि समुत्पन्नस्तस्य प्रथमसमय एव मनुष्यगतिप्रायोग्यां पूर्वोक्तामेव त्रिंशतं बध्नत एकत्रिंशतस्त्रिंशद्गमने सम्भवति । ततस्तस्यैव दिवश्च्युत्वा मनुष्येषूत्पन्नस्य पुनरपि देवप्रायोग्यां पूर्वोक्तां तीर्थकरनामसहितां पूर्वाभिहितामेवैकोनत्रिंशतं बध्नतस्तृतीयोऽल्पतरबन्धः । यदा तु तिर्यग्मनुष्याणामन्यतरस्तिर्यक्प्रायोग्यां पूर्वोक्तामेकोनत्रिंशतं बद्ध्वा तथाविधविशुद्धिवशाद्देवगतिप्रायोग्यामष्टाविंशतिं बध्नाति तदा चतुर्थः । अष्टाविंशतेश्च तथाविधसंक्लेशवशादेकेन्द्रियप्रायोग्यं षड्विंशतिबन्धं गतस्य पञ्चमस्ततोऽपि पञ्चविंशतिबन्धं गतस्य षष्ठः, ततोऽपि त्रयोविंशतिबन्धं गतस्याद्यसमये सप्तमोऽल्पतरबन्धः । अवक्तव्यकबन्धास्त्विह त्रयो भवन्ति । तत्रोपशान्तमोहावस्थायां नामकर्मणोऽबन्धको भूत्वा इहैवोपशान्ताद्धाक्षयेण प्रतिपत्य यदा पुनरप्येकविधं बध्नाति, तदाद्यसमये प्रथमोऽवक्तव्यकबन्धः, अथोपशान्तमोहावस्थायामेवायुःक्षयेणाबन्धको भूत्वाऽनुत्तरसुरेषूत्पद्यते, उपात्ततीर्थकरनामा च भवति, तदा तस्य तत्र प्रथमसमय एव मनुष्यगतिप्रायोग्यां पूर्वोक्तस्वरूपां तीर्थकरसहितां त्रिंशतं बध्नतो द्वितीयोऽवक्तव्यकबन्धोऽथानुपात्ततीर्थकरनामा तदा तीर्थकरनामरहितां तत्रैव मनु-

व्यगतिप्रायोग्यामेकोनत्रिंशतं बध्नतस्तृतीयोऽवक्तव्यकबन्धः । एषु चाष्टस्वपि बन्धस्थानेषु द्वितीयादिसमयेषु सर्वत्रावस्थितब-
न्धो लभ्यत इत्यवस्थितबन्धा अष्टौ, तदेवं 'छब्भूयगारबंधा सत्तेव भवंति अप्पतरबंधा । तिन्नवत्तगबंधा अवट्ठिया अट्ठनाम-
म्मि ॥१॥ तदेवं गाथाद्यपादत्रयं व्याख्यातम् । 'सेसेसेगं हवइ ठाणं'ति शेषेषु भणितोद्धरितेषु ज्ञानावरणवेदनीयायुर्गोत्रान्तरा-
यलक्षणेषु पञ्चसु कर्म्मसु वीप्सया गम्यमानत्वादेकैकमेव बन्धस्थानं भवति । तत्राद्यकर्म्मणि मतिज्ञानावरणाद्युत्तरप्रकृतिप-
ञ्चकस्य समुदितमेवैकं बन्धस्थानं मिथ्यादृष्टेरारभ्य सूक्ष्मसम्परायं यावद्भवति, एवमन्तरायपञ्चकस्यापि वाच्यम् । वेदनीयस्याप्येक-
मेव स्थानं सातमसातं वा । आयुषश्चतुर्णामायुषामन्यतरैकायुष्कलक्षणमेकमेव बन्धस्थानम् । गोत्रस्य तु नीचैर्गोत्रमितरद्वा एकं
बन्धस्थानम् । अत्र च सूचकत्वात् सूत्रस्यैतत् स्वयमेव द्रष्टव्यम् । यदत्र कर्मपञ्चकेऽपि भूयस्काराऽल्पतरबन्धौ न सम्भवतस्तल्ल-
क्षणायोगाच्छेषौ तु द्वौ वेदनीयवर्ज्यकर्म्मचतुष्टये सम्भवतस्तथाहि–ज्ञानावरणान्तरायगोत्राणामुपशान्तमोहावस्थायामायुषस्त्व-
पूर्वकरणाद्यवस्थायां सर्वथैवाबन्धको भूत्वा प्रतिपत्य यदा पुनस्तान्येव बध्नाति, तदा प्रथमसमयेऽवक्तव्यकबन्धो अथवा आयु-
षस्तु यदा त्रिभागादिसमयादौ बन्धकस्तदा प्रथमसमयेऽवक्तव्यकबन्धो द्वितीयादिसमयेषु त्ववस्थितबन्धः । वेदनीयद्विकस्य
त्ववस्थितबन्धोऽस्ति प्रभूतकालमवस्थितत्वेन बध्यमानत्वादवक्तव्यकस्तु न सम्भवति । स हि सर्वथाऽबन्धको भूत्वा यदा प्र-
तिपत्य पुनस्तदेव बध्नाति, तदा सम्भवति । न चैतद्वेदनीयेऽस्तीत्युक्तत्वात्, तदेवं "नाणावरणे तह आउयम्मि गोयम्मि
अंतराए य । चउसु अवत्तगबंधा अवट्ठिओ वेयणिज्जम्मि ॥ १ ॥" इति गाथार्थः । तदेवं भूयस्कारादिप्रकारैश्चिन्तितः प्रकृति-

१ षड्भूयस्कारबन्धाः सप्तैव भवन्त्यल्पतरबन्धाः । त्रयोऽवक्तव्यकबन्धा अवस्थिता अष्टौ नाम्नि ॥ १ ॥

बन्धः, साम्प्रतं स एव स्वामित्वद्वारेण चिन्त्यते । कः कासां प्रकृतीनां बन्धमाश्रित्य स्वामीत्यत्राह—
बन्धः, साम्प्रतं स एव स्वामित्वद्वारेण चिन्त्यते । कः कासां प्रकृतीनां बन्धमाश्रित्य स्वामीत्यत्राह—

भा० बंधट्ठाणं पढमं नवेव छच्चेव तह य चत्तारि । बंधट्ठाणाणि हवंति तिन्नि इय दंसणावरणे ॥४९॥ जा सायणु नवबंधी थीणतिर- हिओ छबंधि जाणुवो । अपुवा जा सुहुमो निद्दादुगविरहियचउक्कंधी ॥५०॥ भूयक्कारप्पयरावत्तवबंधा उ दुन्नि पत्तेयं । हुंति अवट्टि- यबंधा तिन्नेव य दंसणावरणे ॥५१॥ दंसणावरणे उत्तर-पयडीण नवाइबंधठाणेसु । नवछगचउन्हदो अंतरेसु हाणीएँ वुड्ढीए ॥ ५२ ॥ दो दो अप्पयरभूय-गारबंधा उ तइय उवसंतो । परिवडिय चउविहबंधगो हवा आउयखयम्मि ॥५३॥ छव्विहबंधी तो दोऽवत्तवा तिन्नि हुंति पुवं व । हुंति अवट्टियबंधा इय भावणिया दुइयकम्मे ॥५४॥ बावीसएगवीसा सत्तरसं तेरसेव नव पंच । चउतिग दुगं च एगं बंधट्ठाणाणि दसमोहे ॥ ५५॥ मिच्छं कसायसोलस भयं दुगुंच्छा तिवेयमन्नयरं । हासरई इयरे वा बंधे मिच्छस्स बावीसा ॥ ५६ ॥ मिच्छत्तपयडिरहिया इगवीसा सासणस्स बंधम्मि । अणपीरहिया सत्तरस बंधम्मि मीसअजयाणं ॥५७॥ दुइयकसायविहूणा तेरस देसस्स हुंति बंधम्मि । तइयकसायविहूणा पमत्तविरयाण नव बंधे ॥ ५८ ॥ अपमत्तसंजयाण अपुव- करणेण तह य समणेण । हासरइभयदुगुंच्छा रहिया पंचेव ते हुंति ॥ ५९ ॥ तो पुंकोहाईणं कमेण वोच्छेइ सेसठाणाओ । अ- नियट्टि पंच हाणी जा एगं लोभसंजलणं ॥ ६० ॥ नव भूयगारबंधा अट्ठेव य हुंति अप्पयरबंधा । दो अवत्तगबंधा अवट्ठिया दस उ मोहम्मि ॥ ६१ ॥ एत्थ य बावीसाई दससु मोहस्स बंधठाणेसु । नव अंतराणि तेसुं भूयक्काराउ जइ एत्थ ॥ ६२ ॥ नव भणिया तह अप्पयर-बंधया किमिह नो नव हवंति । जे णिहभणियं अप्पयरबंधया अट्ठ उ हवंति ॥ ६३ ॥ भन्नइ बावी- साओ बंधा इगवीसओ न संभवइ । जेणम्मिच्छद्दिट्ठीणं-तरभावेण सासाणो ॥ ६४ ॥ नो होइ किं तु उवसम-दिट्ठिजिओ

कोइ सासणो होइ । तस्स य किर इगवीसा भणिया वंधस्स ठाणम्मि ॥ ६५ ॥ तम्हा बावीसाओ सतरसबंधम्मि चेव किर-गमणं । होइ अओ इह अट्ठ उ हुंती अप्पयरबंधाओ ॥ ६६ ॥ भूयक्कारप्पयरग-बट्ठियवत्तवयाण बंधाण । मोहम्मि भावणा इह पुव्वुत्तगमेण नेयव्वा ॥ ६७ ॥ तेवीस पन्नवीसा छव्वीसा अट्ठवीसगुणतीसा । तीसेगतीसमेगं बंधट्ठाणाणि नामस्स ॥ ६८ ॥ वन्नचउतेयकम्मगनिम्माणुवघायअगुरुलहुयं च । नव धुवबंधा एए सव्वत्थ मिलंति बंधम्मि ॥ ६९ ॥ तिरिगइदुगनियजाई उरलं हुंडं च थावरं अथिरं । अणएज्जं असुभदुभग अपज्ज नवधुवय अजस च ॥ ७० ॥ पत्तेयसुहुमदुगदुगएगयरमपज्जिगिंदि-तेवीसा । एगिंदियाइ तिरिनर-बंधहि मिच्छेण जुयजीवा ॥ ७१ ॥ सोसासपराघाए खित्ते पणवीसपज्जिगिंदिस्स । होई जोग्गा नवरं थिरसुभजसकित्तिजुयलाणं ॥ ७२ ॥ कन्नेत्थ परावत्ती एसा विगलिंदियाण वि जियाणं । पाओग्गा संभवई पण-वीसा विविहभेगेहिं ॥ ७३ ॥ नवरमिह तित्थयरभया परठाणेताओ (गत्तेणगेह) वुचइय । तव्वित्थरो हु विओसेहि सत्तरीचुन्निओ नेओ ॥ ७४ ॥ नामकम्मस्स तणुयाण पणवीसेसा वि होइ छव्वीसा । उज्जोयआयवाणं एगयरप्पयडिखेवम्मि ॥ ७५ ॥ सा पज्जिगिंदिजोग्गे वज्जइ नन्नजीअपाओग्गा । तत्थोववायजोग्गा जीवा तब्बंधगा नेया ॥ ७६ ॥ देवगइतयणुपुव्वी पणिंदिजाई विउव्वियदुगं च । समचउरं ऊसासं परघायपसत्थविहगगई ॥ ७७ ॥ तसबायरपज्जत्तं पत्तेयं तह थिराणअथिराणं । सुभअसुभजसजसाणं अन्नयरं सुभगसुस्सरयं ॥ ७८ ॥ आएज्जमि गुणवीसं धुवबंधी नवजुयाउ अडवीसं । तिरिमणुयाउ विसुद्धा बंधंती देवभ-वजोग्गं ॥ ७९ ॥ तित्थयरबंधखेवे एगुणतीसं हवंति तं च पुणो । बद्धं तित्थयरकम्म सम्मदिट्ठी नरा चेव ॥ ८० ॥ देवग-ईए जोगं नंधंती अन्नहावि गुणतीसा । तिरिपचिंदियपज्जत्त-जोग्गिया वज्जई उ जहा ॥ ८१ ॥ तत्थय-पज्जेगिंदियपाओग्गा

पंचवीसई जा उ । भणिया तम्मज्झे उरलअंगुवंगंमि खित्तम्मि ॥ ८२ ॥ संघयणसरविहायोगइसुं अन्नयरएसुं खित्तेसु । सा
पंचवीसई जा उ । भणियवं इन्हि तीसइं भणिमो । सा य पुवुत्ताअट्ठावीस-
इगउ नवरमेगिंदि-जाइठाणम्मि पंचिंदी ॥ ८३ ॥ थावरठाणंमि तसं भणियवं इन्हि तीसई भणिमो । सा य पुवुत्ताअट्ठावीस-
इमज्झम्मि हारदुगे ॥ ८४ ॥ खित्तम्मि होइ नवरं थिरसुभजसकित्तिओ य भणियवा वो पडिवक्खो अबधगो उ पइएय अप-
मत्तो ॥ ८५ ॥ तह य नियट्टिगुणी अहव कोइ जीवो उ बद्धतित्थयरो । दिवि उप्पन्नो पुणरवि उववज्जिरसइ मणुस्सेसुं
॥ ८६ ॥ नरगइजोगं तित्थेण सजुयं तीसई सुरो बंधे । तं च इमं मणुयदुगं पणिंदिजाईउरलजुयलं ॥ ८७ ॥ समचउरंस-
वज्जरिसहं परघूसासं पसत्यविहगगई । तसचउग थिरसुभजसजुयलअयर च किर एगं ॥ ८८ ॥ सूसरसुभगाएज्जं तित्थं इ-
गवीसमेव पयडीओ । धुववंधिणीहिं सहिया तीसं एत्तो उ इगतीसं ॥८९॥ सा सुरगइपाओगा आहारगजुयलजुत्तया जा उ।
पुवं भणिया तीसं तम्मज्झे तित्थपक्खेवे ॥ ९० ॥ इगतीसा हवइ तं अपमत्तजई तहा अपुवो वि । किं पी भागं जाव उ सुरग-
इजोग परेरेइ ॥ ९१ ॥ पंथंवी एगविहं अपमत्ताई उ तिन्नि जसकित्ती । बंधंति सरूवेणं न य कस्सइ नेव पाओग ॥ ९२ ॥
देवगईजोग्गो वि हु बंधो अट्ठमगुणम्मि वोच्छिन्नो । इय संखेवा नामे अट्ठवि ठाणाणि भणियाणि ॥९३॥ एत्थ य भूयगारो
इइ सुत्ते थिरइ य उवलक्खणओ । संगहियं दट्ठवं एत्थ सेसपि बंधतिगं ॥९४॥ छब्भूयगार बंधा सत्तेव हवंति अप्पयरबंधा।
तिन्निवत्तगबंधा अवट्ठिया अट्ठनामम्मि ॥ ९५ ॥ एत्थ य भूयक्कारप्पयरावट्ठियमबंधभावणिया । पुवगमेणं नेया नवर किंची
पवक्खामि ॥९६॥ नामस्स बधट्ठाणेसु अडसु सत्तंतरेसु हुंति छऊ । बुड्डीए भूयगार इगेगतीसाएँ अंतरए ॥९७॥ जसमेगविहं
बंधिय-सेणीओ पडिय पुवकरणम्मि । इगतीसं बंधतस्स भूयगारो उ जो होइ॥९८॥ सो छट्ठ एव नो सत्त-मो त्ति इगती-

सद्दठाणस्स । उभओ वि हु एगत्ता इह छट्ठो भूयगारो त्ति ॥९९॥ अपुवंमि य सुरगइजोग्गा अडवीसपभिइठाणाउ । चत्तारि उ बंधित्ता सबोच्छेयम्मि एगविहं ॥ ३०० ॥ बंधंतस्स उ आइम-समए पढमो उ अप्पयरबंधो । इगतीसइबंधाओ तीसइबंधम्मि दुइओ उ ॥ १ ॥ इह होई आहारग-दुगतित्थजुयाओपुवअडवीसा । इगतीसाओ बंधिय-देवोवन्नस्स पढमम्मि ॥ २ ॥ समयम्मि मणुपजोग्गं पुव्वुत्तं तीसई पबंधेइ । सोदियलोयाचविउं माणुस्सेसुं समुववन्नो ॥ ३ ॥ सुरगइजोगं तित्थयर-नामसहियं तु पुवगुणतीसं । बंधंतस्स उ होई तइओ अप्पयरबंधो उ ॥ ४ ॥ तिरिनरअन्नतरो तिरि-जोगं गुणतीससन्नियं बंधं । बंधिय सुद्धिवसाओ अडवीसं सुरगईजोगं ॥५॥ बंधइ तइया तुरिओ बंधो होइ त्ति तहडवीसाओ । संकेसवसागिंदिय-जोगं छवीसईबंधं ॥ ६ ॥ पगयस्स पंचबंधो तो पणवीसाएं छट्ठओ होइ । तत्तो तेवीसाए गयस्स किर सत्तमो बंधो ॥ ७ ॥ होई अप्पयरो इय भणिया सत्तेव अप्पयरबंधा । एत्तो अवत्तवयतिन्नी बंधा उ भावेमि ॥ ८ ॥ उवसंतस्स निवडओ इगबंधे बंधणे अवत्तवो । उवसंतो आउखयंमि बद्धतित्थयरनामा उ ॥ ९ ॥ उववज्जिस्सइ णुत्तर-सुरेसु तस्सवि य पढमसमयम्मि । नरगइयाओग्गं पुवभणियरूवं स तित्थयरं ॥ १० ॥ तीसइ नामं बंधंतयस्स दुइओ अवत्तओ बंधो । अह अणुवज्जियतित्थयरनामगोवस्सिगुणतीसं ॥ ११ ॥ नरगइजोगं बंधंतयस्स तइओ अवत्तबंधो त्ति । इय कम्मतिगं पभणिय-सेसाणि वि संपयं भणइ ॥१२॥ सेसेसेगं हवई ठाणं सुत्तम्मि इय एयं अत्थि । सुत्तत्थऊहगेहिं तस्सत्थो पुण इमो नेओ ॥ १३ ॥ नाणावरणे वेयणियआउगे गोत्तअंतराए य । एयम्मि कम्मपणगे बंधट्ठाणं हवइ एक्कं ॥ १४ ॥ मिच्छाओ जा सुहुमं नाणावरणविग्घपंचगस्सावि । इगमेव बंधठाणं वेयणियाऊणगोत्ताणं ॥ १५ ॥ अन्नयरमेव एक्कं उत्तरपयडिं तु बंध-

धाणस्स । तह पत्थाणुत्तंपि हु अन्ने वि इमे. मुणेयव्वं ॥ १६ ॥ नाणावरणाउम्मि य गोत्ते विग्घे य अंतराए य । ठिय अवत्तगबंधा अवट्ठिओ वेयणिज्जम्मि ॥१७॥ इह भावणिया उवरिमबंधदुगं हवइ वेयणियवज्जे । कम्मचउगम्मि तत्थ वि नाणावरणविग्घगोत्ताणं ॥ १८ ॥ उवसंताउ निवडओ आउस्स अबंधगो नियट्टीओ । परिवडओ समयम्मी पढमम्मिंहो अवत्तिव्वि दसट्ठाण–पभिईण तहेव भावाणं । भावत्थो सव्वो वि हु सत्तरिया चुण्णिओ नेओ ॥ २० ॥ इह ... ॥ २१ ॥

सव्वासिं पयडीणं मिच्छद्दिट्ठीउ बंधगो भणिओ । तित्थयराहारदुगं मोत्तूणं सेसपयडीणं ॥ ४३ ॥

टी० इह ग्रन्थे विंशत्युत्तरं शतं प्रकृतीनामधिक्रियत इति प्रागेव प्रकृतिसमुत्कीर्तनावसरे दर्शितम् । एतासां च सर्वासां विंशत्युत्तरशतलक्षणानां प्रकृतीनां मध्ये तीर्थंकरनाम आहारकद्विकं च मुक्त्वा शेषप्रकृतीनां सप्तदशोत्तरशतलक्षणानां मिथ्यात्वादिभिः प्रत्यनीकत्वादिभिश्च सामान्यविशेषहेतुभिर्मिथ्यादृष्टिर्बन्धक इत्येतत्पर्यन्ते सम्बन्धः । तीर्थंकराहारकद्विकं मुक्त्वा शेषसप्तदशोत्तरशतस्य मिथ्यादृष्टिः स्वामीति भावः, तुशब्दस्य विशेषणार्थत्वात् नानाजीवानप्रतीत्यैतद् द्रष्टव्यमेकजीवस्यैककालमेतावद्बन्धासंभवात्, परं उत्तरत्रापीति गाथार्थः ॥४३॥ तीर्थंकराहारकद्विकं वर्जनं किमितीत्याह–

सम्मत्तगुणनिमित्तं तित्थयरं संजमेण आहारं । बंधंति सेसियाओ मिच्छत्ताई हिं हेऊहिं ॥ ४४ ॥

टी० तीर्थंकरनाम - तावदर्हद्वात्सल्यादिहेतुभिर्बध्यत इति सम्यक्त्वगुणनिमित्तैव तत्प्रतिपत्तिः, पूर्वं बध्यमानमपि च सम्यक्त्वापगमे न बध्यत एव । आहारकद्विकं त्वप्रमत्तयतिसम्बन्धिना विशुद्धसंयमेन बध्यत इति मिथ्यादृष्टेस्तदसम्भवः,

शेषाः पुनः सप्तदशोत्तरं शतं मिथ्यात्वादिहेतुभिर्मिथ्यादृष्टिना बध्यन्त एवेति गाथार्थः ॥ ४४ ॥ नन्वेता मिथ्यादृष्टिप्रायोग्याः
गयों अपि प्रकृतयः उत्तरगुणस्थानेषु गच्छन्त्युत: काश्चिदेवेत्याशङ्क्याह-

सोलस मिच्छत्तंता पणुवीसं हुंति सासणंताओ । तित्थयराउदुसेसा अविरइयंता उ मीसस्स ॥ ४५ ॥

टी० मिथ्यात्वं नपुंसकवेदो नारकायुर्नरकद्विकं एकद्वित्रिचतुरिन्द्रियजातयः हुण्डं सेवार्त्तं आतपं स्थावरं सूक्ष्मं अपर्याप्तकं साधारणमित्येताः षोडशप्रकृतयो मिथ्यात्वेऽन्तस्तत्र भावस्तदुत्तरत्राभाव इत्येवंलक्षणोऽन्तो यासां ता मिथ्यात्वान्ता मिथ्यात्वेनैव सहैता बध्यन्ते, नोत्तरत्र, मिथ्यात्वाभावान्मिथ्यादृष्टिगुणस्थानक एवैता व्यवच्छिद्यन्ते । उत्तरे सास्वादनादयो न बध्नन्तीति भावः । एताहि प्रायो नारकैकेन्द्रियविकलेन्द्रिययोग्यत्वादत्यशुभत्वाच्च मिथ्यादृष्टिरेव बध्नातीति । सप्तदशोत्तरशतादेतद्गमे शेषमेकोत्तरप्रकृतिशतमेवाविरत्यादिहेतुभिः सास्वादनो बध्नातीति । 'पणुवीसं हुंति सासणंताओ 'त्ति स्त्यानर्द्धित्रिकं चत्वारोऽनन्तानुबन्धिनः स्त्रीवेदस्तिर्यगायुस्तिर्यग्द्विकं आद्यन्तवर्जानि पृथक् २ चत्वारि २ संस्थानसंहननानि उद्योतमप्रशस्तविहायोगतिः दुर्भगं दुःस्वरमनादेयं नीचैर्गोत्रमित्येताः पञ्चविंशतिप्रकृतयः सास्वादनेऽन्तो यासां ताः सास्वादनन्ताः, सास्वादन एवैता बध्नाति नोत्तर इत्यर्थः । ततश्चैकोत्तरशतात्पञ्चविंशत्यपगमे शेषाः षट्सप्ततिं तीर्थंकरनामसहितां सप्तसप्ततिमविरतसम्यग्दृष्टिर्बध्नाति । तत्कारणं सम्यक्त्वमस्तीति पूर्वापनीतमपि तीर्थकरनाममात्र प्रक्षिप्यते । ननु सम्यग्मिथ्यादृष्टिः कियतीः प्रकृतीर्बध्नातीत्याह 'तित्थयराउदुसेसे 'त्यादि, अत्रान्तशब्दः समीपवचन एव ततश्चाविरतोऽविरतसम्यग्दृष्टिरन्तः समीपमाश्रयो यासां ता अविरतान्ता अविरताश्रया अविरतसम्यग्दृष्टेर्बन्धप्रायोग्या इति यावत्ता एव मिश्रस्य सम्यग्मिथ्यादृष्टेर्भवन्तीति क्रिया

सम्बध्यते। या एव प्रकृतीरविरतसम्यग्दृष्टिर्बध्नाति, ता एव मिश्रोऽपीत्यर्थः, किं सर्वा नेत्याह—तीर्थकरं चायुर्द्विकं च तीर्थकरायुर्द्विकमिति समाहारस्तस्माच्छेषा उद्धरिता एव बध्नाति। इदमुक्तं भवति इह नारकतिर्यगायुषी यथासङ्ख्यं मिथ्यादृष्टिसास्वादनगुणस्थानकयोर्व्यवच्छिन्ने शेषं तु मनुष्यदेवायुर्द्वयं तिष्ठति, तदपि मिश्रो न बध्नात्येवायुर्बन्धस्यास्य सर्वथा प्रतिषिद्धत्वात्। 'सम्मामिच्छादिट्ठी आउयबंधंपि न करेइ'[1] इति वचनात्। तीर्थकरनाम पुनः सम्यक्त्वाभावादेव न बध्नात्यतस्तीर्थकरनाम्ना मनुष्यदेवायुर्द्वयेन च रहिताः शेषा अविरतसम्यग्दृष्टियोग्या एव चतुःसप्ततिप्रकृतीर्मिश्रो बध्नातीति गाथार्थः ॥४५॥

अविरइयन्ताओ दस विरयाविरयंतिया उ चत्तारि। छच्चेव पमत्तंता एगा पुण अप्पमत्तंता ॥ ४६ ॥

टी० चत्वारोऽप्रत्याख्यानावरणाः मनुष्यायुर्मनुष्यद्विकं औदारिकद्विकं वज्रर्षभनाराचमित्येतासां दशानां प्रकृतीनामविरतेऽन्तोऽविरतसम्यग्दृष्टिरेव बध्नाति नोत्तर इत्यर्थः। नन्वविरतोऽपि सम्यग्दृष्टित्वात् सुरलोकयोग्यमेव बध्नातीति कुतोऽमुष्यापि मनुष्ययोग्यस्य मनुष्यायुष्कादेर्बन्धसम्भव इति चेत्? ननु कर्मशास्त्रापरिकर्मितमतेरिदं वचो, यतो हन्त मनुष्यतिर्यक्ष्वेव व्यवस्थितोऽसौ सुरलोकयोग्यं बध्नाति, नारकदेवेषु तु व्यवस्थितोऽविरतो मनुष्यप्रायोग्यमेवोपरचयतीति तत्र व्यवस्थितस्यास्य मनुष्यायुष्कादिबन्धसम्भवो, देशविरतादयस्तु नरकेषु देवलोकेषु वा न लभ्यन्त इत्युत्तरत्रासामभावोऽतः सप्तसप्ततेर्दशस्वपनीतासु शेषां सप्तषष्टिं देशविरतो बध्नाति। प्रत्याख्यानावरणचतुष्टयस्य विरताविरते देशविरतेऽन्तः, प्रमत्तादयो न बध्नन्ति, तेषां प्रत्याख्यानावरणोदयाभावात्। कषाया हि ये वेद्यन्ते त एव बध्यन्तेऽनन्तानुबन्धिवर्जाः। "जे वेअइ ते बंधेइ"[2] इतिवचनात्,

१ सम्यग्मिथ्यादृष्टिरायुर्बन्धमपि न करोति. २ यान् वेदयते तान् बध्नाति.

अतः सप्तषष्टेः प्रत्याख्यानावरणचतुष्टयापगमे शेषां त्रिषष्टिं प्रमत्तयतिर्बध्नाति। असातं अरतिः शोकोऽस्थिरं अशुभं अयशः-कीर्त्तिरित्येतासां षण्णां प्रकृतीनां प्रमत्तेऽन्तो अप्रमत्तादयो विशुद्धत्वान्न बध्नन्तीति त्रिषष्टेरेतत्प्रकृतिषट्कापगमे शेषा सप्तपञ्चाशत्, तन्मध्ये आहारकद्विकक्षेपे एकोनषष्टिर्भवति, तामप्रमत्तयतिर्बध्नाति। "अप्रमत्तयतिसम्बन्धिना हि संयमेनाहारकद्विकं बध्यते" इत्युक्तम्। स चेह लभ्यत इति पूर्वापनीताहारकद्विकस्यात्र प्रक्षेपः। एतां चैकोनषष्टिमसौ स्वगुणस्थानककालस्य सङ्ख्येयभागमेव यावद्बध्नाति। ततः परं देवायुषो बन्धे व्यवच्छिन्नेऽसावप्यष्टपञ्चाशतमेव बध्नाति। देवायुर्बन्धं हि प्रमत्तेनारब्धमसावप्यभिहितसमये समर्थयते, न पुनः स्वयमारभत इति द्रष्टव्यम्। इत्थं चैकस्या देवायुर्लक्षणायाः प्रकृतेरप्रमत्तेऽन्तोऽतः शेषामष्टपञ्चाशतमपूर्वकरणो बध्नातीति भाव इति गाथार्थः॥ ४६॥

दोतीसं चत्तारि य भागे भागेसु संखसण्णाए। चरिमे य जहासंखं अपुव्वकरणंतिया होंति॥ ४७॥

टी० अपूर्वकरणेऽन्तो व्यवच्छेदो यासां ता अपूर्वकरणान्तिकाः प्रकृतयः। का इति आह द्वात्रिंशत् चतस्रश्च। क्व प्रदेशे इत्याह-भागे श्रुतत्वादपूर्वकरणगुणस्थानकस्यैवेति गम्यते। तथा भागेषु कया इत्याह-सङ्ख्येयसंज्ञया सङ्ख्येये अपूर्वकरणभागे सङ्ख्येयेषु तद्भागेष्वित्यर्थः[1]। तथा चरमे च समय इति गम्यते। यथासङ्ख्यम्-यथाक्रममिति गाथाक्षरयोजना, अयमत्र भावार्थः-इह पूर्वोक्तयुक्तिलब्धमष्टपञ्चाशतमपूर्वकरणस्तावद्बध्नाति, यावत् स्वगुणस्थानकसङ्ख्येयभागेऽत्र निद्राप्रचलालक्षणप्रकृतिद्वयस्यान्तो व्यवच्छेदो भवति। ततः षट्पञ्चाशतं तावद्बध्नाति, यावत् स्वगुणस्थानकसङ्ख्येयभागाः। अत्रैतासां

१ "भागेषु किंविशिष्टेषु उपलक्षितेषु" इत्यधिक कुत्रचित्प्रतौ

देवगतिप्रायोग्याणां त्रिंशत्प्रकृतीनामन्तो भवति । तद्यथा—देवद्विकं पञ्चेन्द्रियजातिर्वैक्रियद्विकं आहारकद्विकं तैजसं कार्मणं समचतुरस्रं वर्णादिचतुष्कं अगुरुलघु उपघातं पराघातं उच्छ्वासं प्रशस्तविहायोगतिस्त्रसादिचतुष्कं स्थिरं शुभं सुभगं सुस्वरं आदेयं निर्माणं तीर्थकरमिति । एतदपगमे च शेषां षड्विंशतिं तावद्बध्नाति, यावत् स्वगुणस्थानचरमसमयस्ततो हास्यरतिभयजुगुप्सालक्षणानां चतसृणां प्रकृतीनामन्तो भवतीति षड्विंशतेरेतदपगमे शेषां द्वाविंशतिमनिवृत्तिबादरो बध्नातीति गाथार्थः ॥४७॥

संखेज्जइमे सेसे आढत्ता बायरस्स चरिमंते । पंचसु एक्केक्कूणा सुहुमंता सोलस हवंति ॥ ४८ ॥

टी॰ अनन्तरोक्तां द्वाविंशतिमनिवृत्तिबादरस्तावद्बध्नाति यावत् स्वगुणस्थानकालस्य सङ्ख्येयभागा गता एकस्तु सङ्ख्येयभागः शेषो भवति इत आरभ्य यावदनिवृत्तिगुणस्थानकस्य चरमसमयस्तावत्पञ्चसु भागेषु तेषु यथाक्रममेकैकस्याः प्रकृतेरन्तो भवतीति । प्राकृतत्वात् विभक्तिव्यत्ययादिना तात्पर्यव्याख्या । एतदुक्तं—इहानिवृत्तिबादरगुणस्थानकस्य चरमः सङ्ख्येयभागः पञ्चभिर्भागैः कल्प्यते । तत्र प्रथमभागान्ते पुरुषवेदलक्षणाया एकस्याः प्रकृतेर्बन्धव्यवच्छेदे शेषामेकविंशतिमसौ बध्नाति । ततो द्वितीयभागान्ते क्रोधबन्धे व्यवच्छिन्ने शेषां विंशतिं । ततस्तृतीयभागान्ते मानबन्धे व्यवच्छिन्ने शेषामेकोनविंशतिं । ततश्चतुर्थभागान्ते मायाबन्धे व्यवच्छिन्ने शेषा अष्टादशप्रकृतीरयमेव बध्नाति । ततः पञ्चमभागस्य चरमसमये लोभसंज्वलनाया एकस्याः प्रकृतेर्बन्धे व्यवच्छिन्ने शेषाः सप्तदशप्रकृतीः सूक्ष्मसम्परायो बध्नाति । 'सुहुमंता सोलस हवंति' त्ति सूक्ष्मसम्परायः पूर्वोक्ताः सप्तदशप्रकृतीस्तावद्बध्नाति यावच्चरमसमयः, ततस्तत्र ज्ञानावरणपञ्चकं चक्षुरचक्षुरवधिकेवलदर्शनावरणचतुष्कं यशःकीर्तिरुच्चैर्गोत्रं अन्तरायपञ्चकमित्येतासां षोडशप्रकृतीनामन्तो भवति । इति तदपगमे शेषं सातमेकमुपशा-

न्तक्षीणमोहसयोगिकेवलिनो वध्नन्तीति गाथार्थः ॥ ४८ ॥

**सायंतो जोगंते एत्तो परओ उ नत्थि बंधो त्ति । नायव्वो पयडीणं बंधस्संतो अणंतो य ॥ ४९ ॥**

टी० सातस्य सातवेदनीयस्य, अन्तो–व्यवच्छेदो, योग्यन्ते–सयोगिकेवलिनश्चरमसमये भवति, एतस्मात्परतः पुनः अयोगिकेवल्यवस्थायां नास्ति बन्धोऽयोगिकेवलिसर्वथाऽबन्धक इत्यर्थः । उपसंहरन्नाह–'नायव्वो पयडीणं बन्धस्संतो अणंतो य' त्ति । एवं पूर्वोक्तप्रकारेण यत्र गुणस्थाने यासां प्रकृतीनां बन्धस्यान्त उक्तस्तत्र तासां बन्धस्यान्तस्तत्र भावस्तदुत्तरत्राभाव इत्येवं लक्षणो ज्ञातव्यः । शेषाणां त्वनन्तस्तदुत्तरत्रापि भावलक्षणो ज्ञातव्यः । यथा षोडशप्रकृतीनां मिथ्यादृष्टौ बन्धस्यान्तः शेषस्य त्वेकोत्तरशतस्यानन्तस्तदुत्तरत्रापि गमनादेवमुत्तरत्र गुणस्थानेष्वप्यन्तानन्तभावना कार्या । पाठान्तरं वा 'नायव्वो पयडीणं बंधो संतो अणंतो य'त्ति अत्राप्ययमेवार्थः । अथवा सर्वोऽप्ययं प्रकृतीनां बन्धः सान्तो ज्ञातव्यो भव्यानाम्, अनन्तश्च ज्ञातव्योऽभव्यानामिति गाथार्थः ॥४९॥ तदेवमोघत उत्तरप्रकृतीनां बन्धस्वामित्वमुक्तम्, साम्प्रतं विभागतो भणने ग्रन्थगौरवं पश्यन् गत्यादिषु चतुर्दशसु मार्गणस्थानेष्वतिदिशन्नाह–

**गइयाइएसु एवं तप्पओगाणमोहसिद्धाणं । सामित्तं नेयव्वं पयडीणं ठाणमासज्ज ॥ ५० ॥**

टी० एवमुक्तप्रकारेण प्रकृतीनां स्थानं ज्ञानावरणपञ्चकादिषु आसाद्याश्रित्य स्वामित्वम्–बन्धस्वामित्वं ज्ञेयम्–ज्ञातव्यम्, केषु स्वामित्वं विज्ञेयमित्याह गत्यादिषु द्वारेषु "गइइंदिए य काए" इत्यादिगाथाप्रतिपादितेषु कथम्भूतानां प्रकृतीनामित्याह–तत्प्रायोग्याणाम्–गत्यादिद्वारप्रायोग्याणाम्, पुनः कथम्भूतानामित्याह–ओघसिद्धानाम्–सामान्यानन्तरबन्धस्वामित्वभणननि-

धिकालाप, इदमुक्तं भवति—ओघेन यदुक्तं बन्धस्वामित्वं तदनुसारेणैव गत्यादिद्वारेषु यथा स्वयोग्यप्रकृतीनां बन्धस्वामित्वं स्वमत्याऽभ्यूह्य वाच्यम् । तत्र गतयो नरकगत्यादिकाश्चतस्रस्तत्र नारकदेवायुषी नरकद्विकं देवद्विकं एकद्वित्रिचतुरिन्द्रियजातयः वैक्रियद्विकं आहारकद्विकं आतपं स्थावरं सूक्ष्मं अपर्याप्तकं साधारणमित्येता एकोनविंशतिप्रकृतयो नारकाणां भवप्रत्ययेनैव बन्धे न सम्भवन्ति, शेषं त्वेकोत्तरशतं नरकगतौ नारका बध्नन्ति । तिर्यग्गतौ त्वाहारकद्विकं तीर्थकरनामेत्येतास्तिस्रः प्रकृतीर्मुक्त्वा शेषं सप्तदशोत्तरं प्रकृतिशतं नानाजीवानाश्रित्य तिर्यञ्चो बध्नन्ति । मनुष्यगतौ तु यथा ओघे तथैव विंशत्यधिकमपि शतं नानामनुष्याणां बन्धे वाच्यम् । नवरं तिर्यञ्चो मनुष्याश्च सम्यग्मिथ्यादृष्टयोऽविरतसम्यग्दृष्टयश्च देवगतिप्रायोग्यमेव बध्नन्ति, न मनुष्यगतिप्रायोग्यम् । देवगतौ तु नरकगतिप्रायोग्यं यदुक्तमेकोत्तरं शतं तदेवैकेन्द्रियजात्यातपस्थावरलक्षणप्रकृतित्रयसहितं चतुरुत्तरं प्रकृतिशतं देवा बध्नन्ति । साम्प्रतमिन्द्रियद्वारम् । तत्रैकद्वित्रिचतुरिन्द्रिया नारकदेवायुषी नरकद्विकं देवद्विकं वैक्रियद्विकं आहारकद्विकं तीर्थङ्करनामेत्येता एकादश प्रकृतीर्मुक्त्वा शेषं पृथक् पृथग्नवोत्तरशतं नवोत्तरशतं बध्नन्ति । पञ्चेन्द्रियेषु त्वोघवद्वाच्यमिति । एवं कायादिद्वारेष्वपि बन्धस्वामित्वं विजयग्रन्थाद्यनुसारतोऽभियुक्तेनोपयुज्य वाच्यम् । तदेवमुत्तरप्रकृतीनामोघतो विभागतश्च बन्धस्वामित्वमुक्तम् ॥५०॥ मूलप्रकृतीनां तु सुगमत्वान्नोक्तं तच्च स्वयमभ्यूह्यमिति ॥ प्रकृतिबन्धः समाप्तः॥

भा० एत्तो पुण सव्वासिं इय गाहदुगेण बंधसामित्तं । वुच्छेओ सोल्लसमाइ गाहयणगेण पयडीणं ॥ २२ ॥ तब्भणणानिद्दिट्ठं सामित्तं एत्थ सव्वपयडीणं । नब्भणणाओ य तहा पयडीदारं पि गयमेयं ॥ २३ ॥

पयडीबन्धो सम्मत्तो ॥

टी० इदानीं स्थितिबन्ध उच्यते-तत्र च पञ्चानुयोगद्वाराणि भवन्ति, स्थितिप्ररूपणा, साद्यादिप्ररूपणा, शुभाशुभप्ररूपणा, प्रत्ययप्ररूपणा, स्थितिबन्धस्वामित्वं चेति। तत्रोत्कृष्टेतरभेदभिन्नां पूर्वं तावत्प्रकृतीनां स्थितिमाह-

भा० अह ठीबंधे पंच उ अणुओगद्दारया उ तेय इमे। ठिइएपरूवणा साइयाइपयडीणवन्नणया ॥२४॥ सुभअसुभपणपच्चय-परूवणाय ठिइबंधसामित्तं। इय तेरसगाहाहिँ भणिस्सई तत्थ ठीबंधो ॥ २५ ॥ सत्तरि कोडापभिइं गाहाजुयलेण ठीपरूवणया। मूलट्ठिइ त्ति गाहाए ठिइए साइयाइवन्नणया ॥ २६ ॥ मूलपयडीण तह उत्तराण अट्ठारमाइगाहाणं। जुयलेणं सायाईपरूवणा तह य सदासि ॥ २७ ॥ गाहाए उ सुभअसुभवन्नणया सव्व ठि त्ति गाहाए। पच्चयपरूवणा तह सव्वुक्कोसाइगाहाहिं ॥ २८ ॥ चउहिं उक्कोसठिई तह आहार त्ति गाहजुयलेणं। जहन्नठिईए बंध-स्सामित्तं पभणियं नेयं ॥ २९ ॥

सत्तरि कोडाकोडी अयराणं होइ मोहणीयस्स। तीसं आइतिगंते वीसं नामे य गोए य ॥ ५१ ॥
तेत्तीसुदही आउंमि केवला होइ एवमुक्कोसा। मूल पयडीण इत्तो ठिई जहन्ना निसामेह ॥ ५२ ॥

टी० अतिमहत्त्वादुदधिवत्सरीतुमचीरात्पारं नेतुं न शक्यन्त इत्यतराणि सागरोपमाणि, द्वितीयगाथान्तोपात्तश्च स्थितिशब्दोऽत्र सम्बध्यते। ततश्च सप्ततिः सागरोपमानां कोटीकोट्यो मोहनीयस्योत्कृष्टा स्थितिर्भवति। अत्र च सप्तवर्षसहस्राणि कर्मणोऽनुदयलक्षणाऽबाधा द्रष्टव्या। बद्धमपीत्यमेतत्कर्म्म सप्तवर्षसहस्राणि यावद्विपाकोदयलक्षणां बाधां न करोतीत्यर्थः, तथा च सप्तवर्षसहस्रलक्षणया अबाधया ऊना-हीना कर्म्मस्थितिः कर्म्मनिषेको द्रष्टव्यः। निषेको नाम प्रथमसमये बहु द्वितीयसमये हीनं तृतीयसमये हीनतरं ततो हीनतमं कर्म्मदलिकं रच्यते यत्र स एवंभूतः कर्म्मदलिकरचनाविशेषो निषेक

उच्यते, अबाधां त्यक्त्वा तत ऊर्ध्वं वेदनार्थं कर्मनिषेको भवतीति भावः। स्थापना :::। 'तीसं आइतिगंते'त्ति आदौ त्रिकमादित्रिकं ज्ञानदर्शनावरणवेदनीयत्रयलक्षणं अन्ते भवमन्त्यं अन्तरायलक्षणमष्टमं कर्मेत्यर्थः, आदित्रिकं चान्त्यं चादित्रिकान्त्यमिति समाहारस्तस्मिन्नादित्रिकान्त्यज्ञानदर्शनावरणवेदनीयान्तरायेष्वित्यर्थः, त्रिंशत्सागरोपमकोटीकोट्यः प्रत्येकमुत्कृष्टा स्थितिर्भवति। अत्रापि त्रीणि वर्षसहस्राण्युक्तलक्षणाऽबाधा भवति। अबाधोना च कर्मस्थितिः कर्मनिषेक उक्तलक्षणो द्रष्टव्यः। नामगोत्रयोश्च प्रत्येकं विंशतिसागरोपमकोटीकोट्यः उत्कृष्टस्थितिर्भवति। अबाधा तु वर्षसहस्रद्वयं अबाधोना च कर्मस्थितिः कर्मनिषेकः। 'तेत्तीसुदही आउम्मि केवल'त्ति अतिमहत्त्वसाम्यादुदधिशब्देनेह सागरोपमाण्युच्यन्ते। ततश्च पूर्वकोटीत्रिभागाधिकानि त्रयस्त्रिंशत्सागरोपमाण्यायुष्युत्कृष्टा स्थितिर्भवति। पूर्वकोटीत्रिभागोऽबाधा, अबाधोना च कर्मस्थितिः कर्मनिषेकोऽत्र चाबाधां प्रपात्य सूत्रे निषेककाल एवोक्तोऽत एवाह 'केवल'त्ति केवलाऽबाधारहिता इयं त्रयस्त्रिंशत्सागरोपमलक्षणा आयुषः स्थितिरबाधया तु सह यथोक्तस्वरूपा द्रष्टव्येति भावः। एवं मूलप्रकृतीनामुत्कृष्टा स्थितिर्भवति। इत ऊर्ध्वमेतासामेव जघन्यां स्थितिं निशामयत–शृणुत यूयमिति सूचैषाकृता, द्रष्टव्या त्वसौ स्वयमेवेति। तत्र ज्ञानदर्शनमोहनीयान्तरायाणामन्तर्मुहूर्तं जघन्या स्थितिर्भवति। एतस्माच्च लघुतरमन्तर्मुहूर्तमबाधा अबाधोना च कर्मस्थितिः कर्मनिषेकः। वेदनीयस्य तु कषायप्रत्ययं बन्धमाश्रित्य जघन्या स्थितिर्द्वादशमुहूर्ता अन्तर्मुहूर्तमबाधाऽबाधोना च कर्मस्थितिः कर्मनिषेकः, केवलयोगप्रत्ययस्तस्य द्विसामयिकोऽपि बन्धो भवति, किन्तु स नेहाधिक्रियते, कषायप्रत्ययबन्धस्यैवाधिकृतत्वादिति। नामगोत्रयोर्जघन्या स्थितिरन्तर्मुहूर्तमबाधोना च कर्मस्थितिः कर्मनिषेकः। आयुषस्तु क्षुल्लकभवग्रहणं जघन्या स्थितिरन्तर्मुहु-

र्षमबाधा अबाधोना च कर्म्मस्थितिः कर्म्मनिषेक इति गाथाद्वयार्थः ॥५१॥५२॥ इदानीं सूत्रेऽनुक्ताप्युत्तरत्र समयोजनत्वादुत्तरप्रकृ-
तीनामुत्कृष्टेतरभेदभिन्ना स्थितिरुच्यते—तत्र ज्ञानावरणपञ्चकदर्शनावरणनवकाऽसातवेदनीयान्तरायपञ्चकलक्षणानां विंशतिप्रकृ-
तीनां त्रिंशत्सागरोपमकोटीकोट्य उत्कृष्टा स्थितिः। सातवेदनीयस्त्रीवेदमनुष्यद्विकलक्षणप्रकृतिचतुष्टयस्य पञ्चदशसागरो-
पमकोटीकोट्यः। मिथ्यात्वस्य सप्ततिः सागरोपमकोटीकोट्यः। कषायषोडशकस्य चत्वारिंशत्सागरोपमकोटीकोट्यः।
नपुंसकवेदारतिशोकभयजुगुप्सा नरकद्विकतिर्यग्द्विकैकेन्द्रियजातिपञ्चेन्द्रियजात्यौदारिकद्विकवैक्रियद्विकतैजसकार्मणहुण्डसेवार्त-
वर्णादिचतुष्कागुरुलघूपघातपराघातोच्छ्वासातपोद्योताप्रशस्तविहायोगतित्रसस्थावरबादरपर्याप्तप्रत्येकास्थिराशुभदुर्भगदुःस्वरा-
नादेयायशःकीर्त्तिनिर्माणनीचैर्गोत्रलक्षणानां त्रिचत्वारिंशतः प्रकृतीनां विंशतिसागरोपमकोटीकोट्यः। पुरुषवेदहास्य-
रतिदेवद्विकसमचतुरस्रवज्रर्षभनाराचप्रशस्तविहायोगतिस्थिरशुभसुभगसुस्वरादेययशःकीर्त्त्युच्चैर्गोत्रलक्षणानां पञ्चदशप्रकृतीनां
दशसागरोपमकोटीकोट्यः। न्यग्रोधर्षभनाराचयोर्द्वादश सागरोपमकोटीकोट्यः। सादिनाराचयोश्चतुर्दश सागरोपमकोटी-
कोट्यः। कुब्जार्द्धनाराचयोः षोडश सागरोपमकोटीकोट्यः। वामनकीलिकाद्वित्रिचतुरिन्द्रियजातिसूक्ष्मापर्याप्तकसाधारण-
प्रकृत्यष्टकस्याष्टादश सागरोपमकोटीकोट्यः। अत्र च सर्वत्रैकस्याः सागरोपमकोटीकोट्या एकं वर्षशतमबाधा भवति। ततश्च
यस्य कर्मणो दशसागरोपमकोटीकोट्यः उत्कारस्तस्य दशवर्षशतान्यबाधा द्रष्टव्या। यस्य तु द्वादश सागरोपमकोटीकोट्यः
तस्य द्वादशवर्षशतान्यबाधेत्येवं यस्य यावत्यः सागरोपमकोटीकोट्यः स्थितिस्तस्य तावन्ति वर्षशतान्यबाधा वाच्या। अबा-
धोना च कर्म्मस्थितिः कर्म्मनिषेकः सर्वत्र वाच्य इति। आहारकद्विकतीर्थकरनाम्नोस्तु सागरोपमान्तःकोटाकोटिरेव स्थि-

तिर्भवत्यन्तर्मुहूर्तं चाबाधा, अबाधोना च कर्म्मस्थितिः कर्म्मनिषेकः । ननु तीर्थकरनामबद्धं सत् तृतीयभव एवोदयं याति ? "बंधइ तं तु भयवओ तइअभवे सक्कइत्ताणमि" इति वचनादत्र त्वबाधान्तर्मुहूर्त्तमेवोक्ता अतस्तस्मिन्नेव भवेऽन्तर्मुहूर्त्तादनन्तरं विपाकत उदयः प्राप्नोतीति, तदयुक्तम्, अभिप्रायापरिज्ञानात्, नहि वयमित्थमवधारयामो यदुताबाधापरिक्षयेऽवश्यं कर्म्माण्युदयमागच्छन्त्येवेति । इत्थं व्यवधार्यमाणे यदा कश्चिदिह मनुष्यादिर्देवगतिप्रायोग्यानि देवद्विकादीनि कर्म्माणि पूर्वं बद्ध्वा ततः पुनरपि सङ्क्लिष्टो भूत्वा वनस्पतिपूत्पन्नस्तत्रैवानन्तकालं तिष्ठति, तदा तस्य तत्रापि विपाकतो देवगत्याद्युदयप्रसङ्गः, अबाधायाः सुपरिक्षीणत्वात् । तस्मादित्थमवधारणं कर्त्तव्यम्, यदि कर्म्माणि विपाकत उदयमायान्ति, तदा अबाधापरिक्षये एव, न पुनरबाधाक्षये उदयमागच्छन्त्येवेत्युक्तदोषप्रसङ्गात् । तर्ह्यबाधाक्षये तीर्थकरनामादेः किं भवतीति चेत् ? उच्यते, विपाकोदययोग्यतामात्रम्, योग्यतायां च सत्यां यस्य यदा शेषापि देशक्षेत्रकालादिसामग्री भवति, तस्य तदा विपाकोदयो भवति, नान्यदेत्यलं विस्तरेण । नारकदेवायुषोस्त्रयस्त्रिंशत्सागरोपमाणि पूर्वकोटित्रिभागाधिकान्युत्कृष्टा स्थितिः, पूर्वकोटित्रिभागोऽबाधाऽबाधोना च कर्म्मस्थितिः कर्म्मनिषेकः । मनुष्यतिर्यगायुषोस्तु त्रीणि पल्योपमानि पूर्वकोटित्रिभागाधिकान्युत्कृष्टा स्थितिः, पूर्वकोटित्रिभागोऽबाधाऽबाधोना च कर्म्मस्थितिः कर्म्मनिषेक इत्युक्ता उत्कृष्टा स्थितिः । साम्प्रतमेतासामेवोत्तरप्रकृतीनां जघन्या स्थितिरुच्यते—तत्र ज्ञानावरणपञ्चकदर्शनावरणचतुष्कलोभसञ्ज्वलनान्तरायपञ्चकलक्षणानां पञ्चदशप्रकृतीनां जघन्या स्थितिरन्तर्मुहूर्त्तम्, अन्तर्मुहूर्त्तं चाबाधा, अबाधोना च कर्म्मस्थितिः कर्म्मनिषेकः । पञ्चानां निद्राणा-

१ बध्यते तत्तु भगवतस्तृतीयभवेऽवष्वष्कयित्वा ।

मसातवेदनीयस्य च जघन्या स्थितिः पल्योपमासङ्ख्येयभागहीनाः सागरोपमस्य त्रयः सप्तभागाः अन्तर्मुहूर्त्तमबाधा,
तदूना च कर्म्मस्थितिः कर्म्मनिषेकः । एवमुत्तरत्राप्यबाधानिषेकौ वाच्यौ । सातवेदनीयस्य द्वादश मुहूर्त्ताः । मिथ्यात्वस्य
पल्योपमासङ्ख्येयभागहीनं सागरोपमम् । सञ्ज्वलनवर्ज्यकषायद्वादशकस्य पल्योपमासङ्ख्येयभागहीनाः सागरोपमस्य चत्वारः
सप्तभागाः । सञ्ज्वलनक्रोधमानमायानां यथासङ्ख्यं मासद्वयं एको मासो अर्द्धमासश्च जघन्या स्थितिः । पुरुषवेदस्याष्टौ वर्षाणि ।
पुरुषवेदवर्ज्यनोकषायाष्टकमनुष्यद्विकतिर्यग्द्विकजातिपञ्चकौदारिकद्विकतैजसकार्मणसंस्थानषट्कसंहननषट्कवर्णादिचतुष्कागुरुलघू-
पघातपराघातोच्छ्वासातपोद्योतविहायोगतिद्विकत्रसादिविंशतिनिर्माणनीचैर्गोत्रयशःकीर्त्तिवर्ज्यलक्षणानां षट्षष्टेः प्रकृतीनां
द्वौ सागरोपमसप्तभागौ पल्योपमासङ्ख्येयभागहीनौ । अत्र च पूर्वं यत्र सागरोपमं तद्भागा वा प्रोक्तास्तत्र सर्वत्र पर्याप्तबा-
दरैकेन्द्रियो बन्धको द्रष्टव्यः । शेषाणां तु यथासम्भवमनिवृत्तिबादरसूक्ष्मसम्परायगौ बन्धकाविति । देवद्विकनरकद्विकवैक्रिय-
द्विकलक्षणप्रकृतिषट्कस्य सागरोपमसहस्रस्य द्वौ सप्तभागौ पल्योपमसङ्ख्येयभागहीनावसंज्ञिपञ्चेन्द्रिये जघन्या स्थितिर्लभ्यते ।
आहारकद्विकतीर्थकरनाम्नोस्तु जघन्यापि स्थितिः सागरोपमान्तःकोटीकोटिरेव, केवलमुत्कृष्टबन्धोक्तान्तःकोटीकोटया इयं
सङ्ख्येयगुणहीना मन्तव्या । यशःकीर्त्त्युच्चैर्गोत्रयोरष्टौ मुहूर्त्ताः । देवनारकायुषोर्जघन्या स्थितिर्दशवर्षसहस्राणि । मनुष्य-
तिर्यगायुषोस्तु क्षुल्लकभवग्रहणम् । अबाधा च जघन्यस्थितौ सर्वत्रान्तर्मुहूर्त्तमेव, तदूना च कर्म्मनिषेकः सर्वत्र वाच्य इति
स्थितिप्ररूपणा अवसिता । साम्प्रतमस्या एव स्थितेः साद्यादिप्ररूपणार्थमाह—

भा० अह तेत्तीगाहाए ठिई जहन्ना निसामह जहुत्तं । तस्सत्थोयं किंचे मोहावरणे मुहुत्तं तु ॥ ३० ॥ वेयणि-

यस्स उ बारस नामागोयाण अट्ठ उ मुहुत्ता । खुड्डागभवग्गहणं ठिइं जहन्ना उ आउस्स ॥ ३१ ॥ सुत्ताणुत्ताओ विहु उत्तरपयडीण जेट्ठयरीओ । ठिइओ य भणिज्जंती इह गंथे सोवयारित्ता ॥ ३२ ॥ नाणंतरायदसगं दंसणनवगं असायतीसेसिं । सायाइत्थीमणुदुग पन्नरसा मिच्छि सत्तरिया ॥ ३३ ॥ सोलस कसाय चत्ता नपुंसअरइभयसोगदुगुंच्छा । नरयतिरिदुगपणिंदियतसथावरअथिरपज्जत्ते ॥ ३४ ॥ वेउव्वोरालदुगे नव नामधुवे उ सासपरघाए । उज्जोयासत्थगई आयवणाएज्जदूसरए ॥ ३५ ॥ वायरदूभगअसुभा पत्तेयं अजसनीयवीसेसिं । छेवट्ठहुंडसहिया तेयालाए स नायव्वा ॥ ३६ ॥ देवदुगं थिरसुभगं सुहसुसराएज्ज तहय जसकित्ती । हासरइपुंवेए सत्थगई उच्चगोए य ॥ ३७ ॥ संघयणे संठाणे पढमे दस अयरकोडकोडीओ । बारस चोद्दस सोलस वियतियचोत्थ त्ति एएसिं ॥ ३८ ॥ वामणकीलियवियतियचउरिंदियजाइ एसि अट्ठारा । सोहारमपज्जत्ते सुहुमे अट्ठारसा हुंति ॥ ३९ ॥ अंतोकोडाकोडी तित्थयराहारदुगविस यनेया । एत्तो आउचउक्के वोच्छामि ठिइं तु उक्कोसं ॥ ४० ॥ तिरिनरआउतिपल्ला य पुव्वकोडीतिभागअब्भहिया । उक्कोसठी तदूणा तु पुव्वकोडीतिभागेण ॥ ४१ ॥ होई अबाहकालो जो किर कम्मस्स अणउदयकालो । कम्मठिइअबाहूणा कम्मनिसेगो त्ति कम्माणं ॥ ४२ ॥ दलियरयणाउ जं किर वेइज्जइ उदयपत्तयं कम्मं । सुरनारयआऊणं तेत्तीसयराणि पुव्वाणं ॥ ४३ ॥ कोडीएँ तिभागेणं अहियाइं होइ ठि त्ति उक्कोसा । पुव्वंकोडितिभागो अबाह तह पुव्वकोडीए ॥ ४४ ॥ भागतिगेणं ऊणा कम्मनिसेगो वि होइ कम्मठिई । सव्वत्थ एत्थ सागर-कोडाकोडीइ एगाए ॥ ४५ ॥ वरिसाण सयं एगं होइ अबाहा तओ उ जेसिं तु । कम्माणं आरइया अयराणं कोडिकोडीओ ॥ ४६ ॥ भणिया तत्तियमेत्ताणि होइ वरिससयाणि उ अबाहा ।

आवाहकालऊणा कम्मठिई कम्मनिस्सेगो ॥ ४७ ॥ सवत्थ वि भणियव्वो तित्थाहारगदुगाण पुण भणिया । अंतो कोडाकोडी
अंतमुहुत्तं च आवाहा ॥ ४८ ॥ आवाहूणा कम्मठिईओ होई उ कम्मनिस्सेगो । नणु वद्धस्स उ तित्थ–गरजाइकम्मस्स
उदओ उ ॥ ४९ ॥ तइयभवे किर होई अंतमुहुत्तं तु एत्थ उ अवाहा । भणियातोन्तमुहुत्ता अणंतरं तम्मि चेव भवे ॥ ५० ॥
पावइ विवागउदओ उ तित्थकरनामगस्स एत्थाह । नहि आवाहाविगमे आगच्छंतेव कम्माणि ॥ ५१ ॥ उदयं किं पुण
कम्माणि जइ विवागेण उदयमायंति । तत्तो उ अवाहाए परिक्खएणेव कम्माणि ॥ ५२ ॥ आगच्छंती उदए अओ अवाहा-
क्खएण पत्थुयए । इह दोसेणं तहवि विवागउदयजोगया हवइ ॥ ५३ ॥ तो संतीए तीए जस्स जया देसखेत्तकालाई ।
सामग्गी होइ तया विवागउदओ उ हो एवं ॥ ५४ ॥ रूवसोहग्गंवलमाइसंपयानिययजाइअणुसारा । जा दीसइ सा तित्थ–
करनामविवागउदओ त्ति ॥ ५५ ॥ अंतोकोडाकोडी तित्थाहाराण जेट्ठठिइबंधो । जं भणियं तहि अंतो कोडाकोडीएँ
मज्झम्मि ॥ ५६ ॥ थोवा य बहुतरागा ठिईविसेसा उ हुंति ते तत्थ । ते सवेवि हु अंतोकोडाकोडि त्ति सन्नाए ॥ ५७ ॥
भन्नंति तउ तइए भवंमि तित्थयरकम्मुणो उदओ । जो सो वि होइ अंतोकोडाकोडी य मज्झम्मि ॥ ५८ ॥ अन्ने भणंति
अस्सक्कइताणं अंतकोडिकोडि त्ति । बंधो जा तइयभवं नोत्थेऽह जहन्नठो वोच्छं ॥ ५९ ॥ नाणंतरायदसगे दंसणचउगम्मि
लोहसंजलणे । जहन्नेणंतमुहुत्तं ठी अंतमुहुत्तमावाहा ॥ ६० ॥ आवाहऊणिया पुण सा कम्मठिई उ कम्मनिस्सेगो । सव्वत्थ वि
भणियव्वो पणनिंदअसायवेयणिए ॥ ६१ ॥ अयरस्स सत्तभागीकयस्स उ भागतिगं ति पल्लस्स । असंखभागऊणं अंतमुहुत्तं
च आवाहा ॥ ६२ ॥ तयऊणा कम्मठिई कम्मनिसेगो त्ति एवमुत्तरओ । आवाहा य निसेगो भणियव्वो सायवेयणिए ॥६३॥

बारस हुंति मुहुत्ता पल्लस्स असंखभागहीणं तु । सागरसेगं मिच्छे आइमबारसकसायाणं ॥ ६४ ॥ पल्लासंखियभागेण ऊणिया सत्तभागविहियस्स । अयरस्स चऊभागा कमेण संजलणनामाणं ॥६५॥ कुहमाणामायाणं मासदुगं मास अद्धमासो य । पुंवेए अट्ठ वरिसा सेसट्ठय नोकसाया य ॥ ६६ ॥ पंचेव य जाईओ तिरिदुगसंठाणसंघयणसवे । मणुदुग ओरालदुगे परवाउस्सासउज्जोए ॥ ६७ ॥ आयरविहगगइदुगं जसरज्जतमाइवीसभेए उ । नामस्स य नव य धुवा नीयागोयं च छासट्ठी ॥६८॥ पयडीणं अयरस्स उ सत्तविभागीकयस्स दो भागा । पल्लासंखियभागेहि हीणया विउविछक्कस्स ॥ ६९ ॥ अयराण सहस्स उ सत्तविभागीकयस्स दोभागा । पल्लासंखियभागेहिं हीणा जियअसन्निस्स ॥ ७० ॥ पंचिंदियस्स लब्भइ हीणट्ठिइ तत्थहारगदुगस्स । सागरअंतोकोडीकोडीसंखेयगुणहीणा ॥ ७१ ॥ जसकित्तीउच्चाणं अट्ठमुहुत्ता उ होइ हीणठिइ । अह एत्तो आऊणं एग जहन्नठिइं वोच्छं ॥ ७२ ॥ दसवाससहस्साइं नारगदेवाउयाण विन्नेयं । खुड्डागभवपमाणं मणुतिरियाऊण उ जहन्नं ॥ ७३ ॥ जहन्नठिइए अबाहा अंतमुहुत्तं तु होइ सवत्थ । इह जत्थ जत्थ पुवं पवन्निया सागरविभागा ॥ ७४ ॥ तहिं सवत्थ वि पल्लोवायरपरिगिदिओ चि विन्नेओ । सेसाणं जहसंभव-पनियट्ठिइउआउबंधगा ॥ ७५ ॥ भणिया ठिइओ अहसाइयाइयपदीण वन्नणादारं । मूलठिईई गाहाजुगेण पभणेइ सुचकई ॥ ७६ ॥

मूलठिईणजहण्णो सत्तण्हं साइयाइओ बन्धो । सेसतिगे दुविगप्पो आउचउक्केवि दुविगप्पो ॥ ५३ ॥

टी० इह कर्मणां स्थितिबन्धश्चतुर्धा भवति, जघन्योऽजघन्य उत्कृष्टोऽनुत्कृष्टश्चेति । तत्र यस्मादन्यो हीनतरबन्धो नास्ति स जघन्यः । ततः परं समयवृद्धिमादौ कृत्वा यावदुत्कृष्टस्तावत्सर्वोऽप्यजघन्य इति । जघन्याजघन्यप्रकारद्वयेन सर्वेऽपि

स्थितिविशेषाः सङ्गृहीताः। यतोऽन्यो बृहत्तरबन्धो नास्ति, स उत्कृष्टबन्धस्ततोऽधस्तात्समयहानिमादौ कृत्वा यावज्जघन्यबन्धस्तावत्सर्वोऽप्यनुत्कृष्ट इति। उत्कृष्टानुत्कृष्टप्रकाराभ्यां वा सर्वेऽपि स्थितिविशेषाः सङ्गृहीताः, तत्र 'मूल' त्ति अप्युरंऽपमूलप्रकृतीनां सप्तानां सम्बन्धिन्यो याः स्थितयस्तासां यो जघन्यो बन्धः स साद्यादिर्भवति, सादिरनादिर्ध्रुवोऽध्रुवश्चेति चतुर्विकल्पोऽपि भवतीत्यर्थः। तथा हि–एतासां प्रकृतीनां मध्ये मोहनीयस्य क्षपकानिवृत्तिबादरचरमस्थितिबन्धे जघन्यस्थितिबन्धः प्राप्यते। शेषप्रकृतिषट्कस्य तु क्षपकसूक्ष्मसम्परायचरमस्थितिबन्धेऽसौ लभ्यते। अतोऽन्यः सर्वोऽप्युपशमश्रेण्यामप्यजघन्यो भवत्युपशमकस्यापि क्षपकाद्द्विगुणबन्धकत्वादजघन्य एव भवतीति भावः। ततश्चोपशान्तमोहावस्थायामजघन्यबन्धस्याबन्धको भूत्वा यदा प्रतिपत्य पुनरपि प्रस्तुतकर्मसप्तकस्याजघन्यं बध्नाति, तदाऽजघन्यः सादिर्भवति, बन्धव्यवच्छेदानन्तरं तत्प्रथमतया बध्यमानत्वात्। उपशान्तमोहाद्यवस्थां चाऽप्राप्तपूर्वाणां बन्धव्यवच्छेदाभावेन अनादिकालान्निरन्तरं बध्यमानत्वात् अनादिः। अभव्यानां ध्रुवोऽभाविपर्यन्तत्वाद्भव्यानामध्रुवो भाविपर्यन्तत्वात्। 'सेसतिगे दु विगप्पो' त्ति शेषत्रिकं नाम जघन्योत्कृष्टानुत्कृष्टलक्षणम्। तत्र प्रकृतकर्मसप्तकस्य द्विविकल्पः, सादिरध्रुवश्च बन्धो भवतीत्यर्थः। तथा हि–एषां कर्मणां मध्ये मोहस्य क्षपकानिवृत्तिबादरचरमस्थितिबन्धे, शेषाणां तु क्षपकसूक्ष्मसम्परायचरमस्थितिबन्धे जघन्यो बन्धोऽनन्तरमेवोक्तः, स चाबद्धपूर्वोऽजघन्यबन्धादवतीर्य तत्प्रथमतया तस्मिन्नेव समये बध्यत इति सादिस्ततः परं क्षीणमोहाद्यवस्थायां सर्वथा न भवतीत्यध्रुव इति द्वावेव विकल्पौ सम्भवतो न शेषौ। उत्कृष्टस्तु त्रिंशत्सागरोपमकोटीकोट्यादिकः सर्वसंक्लिष्टमिथ्यादृष्टिपर्याप्तसंज्ञिपञ्चेन्द्रियस्य लभ्यते, स चानुत्कृष्टबन्धादवतीर्य कदाचिदेव बध्यते, न सर्वदेति

सादिः, अन्तर्मुहूर्ताच्च परं नियमादनुत्कृष्टं बध्नतोऽसौ निवर्त्तते इत्यध्रुवः । उत्कृष्टाच्च प्रतिपत्यानुत्कृष्टं बध्नातीत्यनुत्कृष्टोऽपि सादिस्ततः परं जघन्यतोऽन्तर्मुहूर्त्तेनोत्कृष्टतस्त्वनन्तोत्सर्पिण्यवसर्पिणीपर्यन्ते पुनरुत्कृष्टं बध्नाति, अतोऽनुत्कृष्टो निवर्त्तत इत्येवमुत्कृष्टेष्वनुत्कृष्टेषु जीवाः परिभ्रमन्तीति द्वयोरपि अनादिध्रुवत्वासम्भवः । 'आउचउक्के वि दु विगप्पो'त्ति आयुषः सम्बन्धि यद्बन्धमाश्रित्य चतुष्कं जघन्याजघन्योत्कृष्टानुत्कृष्टलक्षणम् । तत्र चतुष्कोऽपि द्विविकल्पः सादिरध्रुवश्च बन्धो भवतीत्यर्थः । आयुषो हि जघन्यादिर्बन्धो वेद्यमानायुषस्त्रिभागादौ प्रतिनियतकाल एव बध्यमानत्वात् सादिरन्तर्मुहूर्त्ताच्च परमबन्ध्यमुपगमन इत्यध्रुव इति गाथार्थः ॥ ५३ ॥ साम्प्रतमुत्तरप्रकृतीनां साद्यादिप्ररूपणामाह—

भा० इह ठिइबंधो चउहा जहन्नअजहन्नुक्कोऽस्सऽणुक्कोसो । तत्थ जहन्नो जत्तो अ(न)न्नो वंधो त्ति(त्थ) हीणयरो ॥ ७७ ॥ नो(तो) समयमाइ रिन्ना उक्कोसा आरओ उ अजहन्नो । तह जत्तो नो वंधो गरुओ अत्थी स उक्कोसो ॥ ७८ ॥ जो समयहाणिमाई जा हीणो ताव हो अणुक्कोसो । तत्थ य सन्नाइगेण विगहिया सवे ठिइविसेसा ॥७९॥ मोहाउरज्ज छकम्मगस्स खवगो दसमगुणा अंते । वंधइ जहन्नठिई मोहस्स उ खवगनवमगुणी ॥ ८० ॥ अंते उ जहन्नठिई वंधइ एया परो उ अजहन्नो । उवसमसेणीए विहु जहण्णखवगा उ उवसमगो ॥८१॥ फिर होइ दुगुणवंधो तो उवसंतो अबंधगो होउ । अजहन्नंतरस्स जया पडिय पुणो सत्तकम्माइं ॥८२॥ वंधेणं अजहन्नेण वंधई तोऽजहन्न इइ साई । होइ वंधच्छेयाणंतरयं वज्झमाणत्ता ॥ ८३ ॥ उवसंतमपत्ताणं वंधच्छेया अभावओऽणाइ । अभवजियाण धुवो भवजीवाणं हो अधुववंधो ॥८४॥ जहन्नुक्कोसियरतिगे आऊहीणाण सत्तकम्माण । साईअधुवो वंधो तत्थ य मोहस्स किल खवगो ॥ ८५ ॥ नवमगुणी

नरियम्मि विइय बंधगभंगो होइ। सो पुण अणाइधुवो अजहन्नबंधाउ अवयरिउं ॥ ८६ ॥ तप्पढमयाए तम्मि समयम्मि नेर वज्झइ साई। तो सोइ खीणमोहो पुण न भवइ तो अधुवबंधो ॥ ८७ ॥ उक्कोसबंधगो पुण सुसंकिलिट्ठंमि मिच्छदिट्ठिम्मि। पज्जत्तगम्मि पंचिदियम्मि लब्भइ अणुक्कस्सा ॥ ८८ ॥ बंधा अवयरिय कयाइ वज्झई तेण सो भवे साई। अंतमुहुत्ता उवरिं अणुकसे बंधओ अधुवो ॥ ८९ ॥ अणुक्कोसबंधगो पुण उक्कोसा पडियणुक्कसं पुण वि। बंधंतो साई तो जहन्नेणं अंतरमुहुत्ता ॥ ९० ॥ उक्कोसओ अणंतयकाल परियपस्स उक्कसं। न भवइ अणुक्कसो तो अधुवो सेसं दुगं न भवे ॥ ९१ ॥ आउच-उक्के जहन्नपमिइंबंधो चउविहोवि इई। होइ जहन्नेणाउयतिभागमाइम्मि पडिनियए ॥ ९२ ॥ कालम्मि चेव संवज्झमाण-भागाउ तो भवे साई। अंतमुहुत्ता उवरिं उवरमए तो भवे अधुवो ॥ ९३ ॥ एत्तो उत्तरपयडिसु सायाईलक्खणं तहिं च पयं।

अट्ठारस पगडीणं अजहन्नो बंध चउविगप्पो उ। साइ अ अधुवबंधो सेसतिगे होइ बोधव्वो ॥ ५४ ॥

टी० ज्ञानावरणपञ्चकदर्शनावरणचतुष्कसञ्ज्वलनचतुष्कान्तरायपञ्चकलक्षणानामष्टादशप्रकृतीनामजघन्यो बन्धः साद्यादिः चतुर्विकल्पोऽपि भवति। तथाहि—अमीषां पूर्वोक्तयुक्तिव उपशमश्रेणौ बन्धव्यवच्छेदं कृत्वा प्रतिपत्य पुनरजघन्यं बध्नतः सादिस्तद्बन्धस्तत्स्थानमप्राप्तपूर्वस्यानादिर्ध्रुवोऽभव्यानामध्रुवो भव्यानामिति। सर्वमिह पूर्ववदेव भावनीयम्। एतासामेव प्रकृ-तीनां शेषत्रिकं जघन्योत्कृष्टानुत्कृष्टलक्षणो सादिरध्रुवश्च बन्धो भवतीति बोद्धव्यस्तथाहि—सञ्ज्वलनचतुष्टयस्य क्षपकानिवृत्ति-बादरे आत्मोपातीयबन्धव्यवच्छेदसमये जघन्यो बन्धः। शेषचतुर्दशानां सूक्ष्मसम्परायचरमस्थितिबन्धे जघन्यः स च तत्प्रथमतया बध्यमानत्वात् सादिस्तत ऊर्ध्वं न भवतीत्यध्रुव इति [वैररहिकाः ?]। उत्कृष्टानुत्कृष्टेष्वप्यारोहणावतरणकु-

१ [ सीवयरविक ? ] सि. सीधचराहतांका प्र.

वंतां जन्तूनां साद्यध्रुवत्वं तथैव भावनीयमिति गाथार्थः ॥५४॥

भा० अट्ठारस पयडीणं ईसुत्तोत्ता पुण इमाओ ॥९४॥ नाणंतरायदस संजलणदंसअठेव ईइ अट्ठारा। तत्थ अजहन्नबंधो चउभेओ धुवजुतीओ ॥ ९५ ॥ बंधच्छेयं उवसम–सेढीए करिय पडिय अजहन्नं। बंधंतस्स उ साई तमपत्तस्स उ पुण अणाई ॥ ९६ ॥ अभरभवियाण धुवअधुवाऊ सव्वंपि धुवमिव नेयं। जहन्नुक्कोसियरतिगे साईअधुवो पुणो एवं ॥ ९७ ॥ संजलणाण चउन्हं खवगो नवमे गुणंमि बंधंते। सेसाण चउदसन्हं सुहुमगुणंते जहन्नबंधो ॥ ९८ ॥ होई तप्पढमतया त्ति वज्जमाण-तणे उ साईतो। उवरिं अधुवबंधो एवं उक्किट्ठइयरेसु ॥९९॥ आरोहणअवयरणे कुव्वंताणं जियाण सायधुवा। धुवंव भावणीया

उक्कोसाणुक्कोसो जहन्नमजहन्नगो य ठिइबंधो। साईयअधुवबंधो सेसाणं होइ पयडीणं ॥ ५३ ॥

टी० भणिताष्टादशप्रकृतिभ्यः शेषाणामुद्धरितानां प्रकृतीनामुत्कृष्टोऽनुत्कृष्टो जघन्योऽजघन्यश्च स्थितिबन्धः सादिर-ध्रुवश्च भवति। तथा हि–निद्रापञ्चकमिथ्यात्वाद्यद्वादशकषायभयजुगुप्सातैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणलक्ष-णानामेकोनत्रिंशत्प्रकृतीनां सर्वविशुद्धबादरपर्याप्तैकेन्द्रियो जघन्यं स्थितिबन्धं निर्वर्त्तयति। ततोऽन्तर्मुहूर्त्तात्सङ्क्लिष्टो भूत्वाऽजघन्यं बध्नाति। ततस्तत्रैव भवे भवान्तरे वा विशुद्धिमासाद्य पुनरपि जघन्यं स एव बध्नातीत्येवं जघन्याजघन्ययोः परावृत्तिर्भवतीति द्वावप्येतौ जघन्याजघन्यौ साद्यध्रुवौ भवतः। उत्कृष्टबन्धं पुनरेतासां सर्वसङ्क्लिष्टसंज्ञिपञ्चेन्द्रियो निर्वर्त्त-यत्यन्तर्मुहूर्त्ताच्च पुनरप्यनुत्कृष्टबन्धं रचयति, ततः पुनरपि कदाचिदुत्कृष्टमित्येवं परावृत्तित एतावपि साद्यध्रुवौ भवतः। ॥७०॥

शेषाणां त्वध्रुवबन्धिनीनां सातासातादिनिसप्ततिप्रकृतीनां जघन्यादिस्थितिबन्धः सर्वोऽप्यध्रुवबन्धित्वादेव सादिरध्रुवश्चेति गाथार्थः ॥ ५५ ॥ तदेवं कर्मस्थितेः साद्यादिप्ररूपणा कृता । साम्प्रतं तस्या एव शुभाशुभप्ररूपणां विभागेनाह—

साईअधुवो य भवे तहा हि पणनिद्दबारसकसाया । आइमया मिच्छं भयदुगुंछनवना- सेसाण चउविहो बंधो ॥ ४०० ॥ मधुरगंधी ॥ १ ॥ इयइगुणतीसपयडीण सुद्धपज्जत्तबायरेगिंदी । निव्वत्तइ ठीबंधं जहन्नयं तोऽन्तरमुहुत्ता ॥ २ ॥ अविसुद्धो होऊणं अजहन्नबंधं करेइ नो वम्मि । जम्मे भवंतरे वा होउं सुद्धो पुण जहन्नं ॥३॥ बंधइ इई जहन्नाजहन्नापरियत्तमाणया होइ । एवं एए दो विहु साई अधुवा वि हु भवंति ॥ ४ ॥ उक्कोसगबंधं पुण एयासि अंसुद्धसन्निपंचिंदी । पकरन्तोऽन्तमुहुत्ता पुण अणुक्कोसं कुणई बंधं ॥ ५ ॥ तो पुणरवि उक्कस्सं कुणइ कयाई उक्किट्ठयराय । एवं परिवत्तीए भवंति साईअधुवया य ॥६॥ अधुवत्ता देवभवे साईअधुवो सायासायाईणं सेसाणं अधुवबंधिपयडीणं । तेवत्तरिए बन्धो जहणाईओ चउविहो वि ॥ ७ ॥ य तत्थ भावणिया । सुगमा असुभसुभा वोच्छं सव्वासिं ति गाहाए ॥ ८ ॥

सव्वासिंपि ठिईओ सुभासुभाणं पि होंति असुभाओ । माणुसतिरिक्खदेवा-उयं च मोत्तूण सेसाणं ॥५६॥

सर्वासां शुभानामशुभानां च प्रकृतीनां स्थितयोऽशुभा एव भवन्ति, सङ्क्लेशलक्षणस्य तत्कारणस्याशुभत्वात्, स्थितीनां हि कारणं सङ्क्लेश एव कषायोदय इत्यर्थः । "'ठिई अणुभागं कसायओ कुणइ" त्ति वचनात् ततश्चैवमुक्तं भवति सर्वासां शुभानामशुभानां च प्रकृतीनां स्थितयः सङ्क्लेशवृद्धौ वर्द्धन्ते, तदपचाये क्षपचीयन्ते इत्यन्वयव्यतिरेकाभ्यां सङ्क्लेशमेव स्थितयो-

१ 'स्थित्यनुभागं कषायात् करोति।'

ऽनुबन्धन्तीत्यशुभाः, अशुभकारणत्वादशुभद्रव्यनिष्पन्नघृतपूर्णादिद्रव्यवत् । ननु यद्येवं " ठिइअणुभागं कसायओ कुणती"त्यत्रानुभागोऽपि कषायजन्य एवोक्तस्ततश्चायमप्यशुभकारणत्वादशुभ एव प्राप्नोति ? नैवम्, अभिप्रायापरिज्ञानात्, सत्यपि हि कषायजन्यत्वेऽनुभागः कषायवृद्धावशुभप्रकृतीनामेव वर्द्धते, शुभानां तु हीयते । कषायमन्दतया तु रसः शुभानां वर्द्धते, अशुभानां तु हीयते । स्थितयस्तु शुभानामशुभानां च प्रकृतीनां कषायवृद्धौ नियमाद्वर्द्धन्ते तदपचये त्वपचीयन्त इत्येकान्तेन कषायस्वरूपानुविधायित्वादशुभा उच्यन्त इति । अथवा शुभप्रकृतीनां यथा यथा स्थितिर्वर्द्धते तथा तथा शुभरसो हानिं याति, परिगलितरसेक्षुयष्टिकल्पानि शुभकर्माणि भवन्तीत्यर्थः । अशुभप्रकृतीनां तु स्थितिवृद्धौ तत्सम्बन्धी अशुभरसो वर्द्धत इत्यतोऽपि कारणात् स्थितीनां अशुभत्वं तद्वृद्धेः शुभरसक्षयहेतुत्वादशुभरसवृद्धिहेतुत्वाच्चेत्यलं विस्तरेण । अनुभागस्तु शुभोऽशुभश्च वक्ष्यत इति भावः । अत्र स्थितीनामशुभत्वेऽतिप्रसङ्गमालोक्याह–'माणुसे'त्यादि मनुष्यतिर्यग्देवायुषां स्थितिं मुक्त्वा शेषस्थितीनामेवाशुभत्वं द्रष्टव्यम । एतत्स्थितिः पुनः शुभैव भवतीत्यर्थः, विशुद्धिलक्षणस्य तत्कारणस्य शुभत्वान्मनुष्यतिर्यगायुषोर्हि वृद्धिस्त्रिपल्योपमावसाना, देवायुषस्तु वृद्धिस्त्रयस्त्रिंशत्सागरोपमावसाना, विशुद्धितारतम्यादेव भवतीत्यतो मनुष्यतिर्यग्देवायुःस्थितिः शुभा, शुभकारणप्रभवत्वाच्छुभद्रव्यनिष्पन्नघृतपूर्णादिद्रव्यवदिति । अथवा प्रस्तुतायुष्कत्रयस्थितिवृद्धौ रसोऽपि वर्द्धते, स च शुभः, सुखजनकत्वादित्यतोऽपि प्रस्तुतायुष्कस्थितेः शुभत्वम्, तद्वृद्धेः शुभरसवृद्धिहेतुत्वादिति गाथार्थः ॥ ५६ ॥ तदेवं शुभाशुभप्ररूपणा अवसिता । साम्प्रतं प्रत्ययनिरूपणार्थमाह–

भा० सुभअसुभाणं पि हुंति अणुभाओ इय पयस्स पसत्थो । असुभा कसायउदया हो वुड्ढीहाणिओ हुंति ॥ १ ॥

जेणं असुभसुभाणं पयडीण ठिईकसायवुड्ढीए । वड्ढंते तासि अवचए उ ताओ विहीयंति ॥१०॥ (इ)ईसवपयारेहिं अधुवअसुभकसायबंधणओ । सव्वाओ वि ठिईओ असुभाओ च्चिय ईह भवंति ॥ ११ ॥

सव्वट्ठिईणमुक्कोसगो उ उक्कोससंकिलेसेणं । विवरीए उ जहन्नो आउगतिगवज्जसेसाणं ॥ ५७ ॥

टी० सर्वासां ज्ञानावरणादिमूलप्रकृतिस्थितीनां मतिज्ञानावरणाद्युत्तरप्रकृतिस्थितीनां चोत्कृष्टस्थितिबन्धः उत्कृष्टसङ्क्लेशेनैव बध्यते । एतदुक्तं भवति इह ये ये विवक्षितमूलोत्तरप्रकृतीनां बन्धकास्तेषु मध्ये यो यः सर्वोत्कृष्टसङ्क्लेशः स तत्तद्विवक्षितकर्मस्थितिबन्ध सर्वोत्कृष्टं रचयति, एतच्च बन्धस्वामित्वप्रतिपादकानन्तरगाथासु सर्वं व्यक्तीभविष्यतीति । ' विवरीए उ जहण्णो 'त्ति इह भणितात्सर्वोत्कृष्टसङ्क्लेशाद्विपरीते सर्वविशुद्धिर्भवति, तस्यां सत्यां स्थितिबन्धो जघन्यो भवति । इदमुक्तं भवति, इह ये ये विवक्षितमूलोत्तरप्रकृतीनां बन्धकास्तेषां मध्ये यो यः सर्वोत्कृष्टविशुद्धियुक्तः स तत्तद्विवक्षितकर्मस्थितिबन्धं सर्वजघन्य करोति । किं सर्वत्रायमेव न्यायः ? नेत्याह, अनन्तरोक्तमायुस्त्रिकं तिर्यग्मनुष्यदेवायुर्लक्षणं मुक्त्वा शेषप्रकृतीनां प्रकृष्टसङ्क्लेशविशुद्धिभ्यां स्थित्युपचयापचयौ द्रष्टव्यौ । प्रस्तुतायुस्त्रयस्य तु तद्बन्धकेषु सर्वोत्कृष्टविशुद्धिरुत्कृष्टं स्थितिबन्धं करोति । सर्वसङ्क्लिष्टस्तु सर्वजघन्यमिति विपरीतं द्रष्टव्यमिति गाथार्थः ॥ ५७॥ उक्ता प्रत्ययप्ररूपणा । साम्प्रतं कासां स्थितीनां बन्धे कः स्वामीति निरूपणार्थमाह–

भा० सवगाहाए पच्चयपरूवणा पच्चओ य संकेसो । जेट्ठेयरेहि दुविहो सेसं सुगमं अह भणेइ ॥ १२ ॥

सउक्कोसठिइणं मिच्छद्दिट्ठी उ बंधगो भणिओ । आहारगतित्थयरं देवाउं वावि मोत्तूणं ॥ ५८ ॥

टी० सर्वासां मूलप्रकृतीनामुत्तरप्रकृतीनां च या उत्कृष्टा स्थितयस्तासां सर्वपर्याप्तिपर्याप्तः शुभाशुभप्रकृतीनामात्मीयात्मीयबन्धकाले सर्वसङ्क्लिष्टो मिथ्यादृष्टिर्बन्धको भणितः, तीर्थकरगणधरैरिति । स्थितिर्हि पूर्वमशुभा प्रोक्ता, सङ्क्लेशप्रत्यया च । सङ्क्लिष्टश्च सर्वबन्धकेषु मध्ये मिथ्यादृष्टिरेव भवतीति भावः । अत्र च प्रायोवृत्त्या सर्वसङ्क्लिष्टत्वमुच्यते । यावता तिर्यग्मनुष्यायुषी उत्कृष्टे तत्प्रायोग्यविशुद्धौ बध्नातीति द्रष्टव्यम्, तयोः शुभस्थितिकत्वेन विशुद्धिजन्यत्वस्यानन्तरमेवोक्तत्वात् । अत्राह–ननु यदि विशुद्धित इदमायुष्कद्वयं बध्यते, तर्हि मिथ्यादृष्टेः सकाशात् सास्वादनो विशुद्धतरः प्राप्यते, स कस्मादेतद्बन्धकत्वेन नोक्तः ? न च वक्तव्यं, तिर्यग्मनुष्यायुषी सास्वादनो न बध्नाति, तद्बन्धस्य बन्धस्वामित्वादिष्वस्यानुज्ञातत्वात्, तस्मादिदमाचार्यस्याप्येकं स्खलितमिव लक्ष्यते, नैतदेवम्, सत्यामपि हि सामान्यायां मनुष्यतिर्यगायुर्बन्धानुज्ञायामसंख्येयवर्षायुष्कयोग्यमुत्कृष्टं मनुजायुर्द्वयं सास्वादनो न निर्वर्तयिष्यते, अस्य गुणप्रतिपाताभिमुखत्वेन गुणाभिमुखविशुद्धमिथ्यादृष्टेः सकाशात् विशुद्ध्याधिक्यस्यानवगम्यमानत्वाच्छास्त्रान्तरेऽपि च मिथ्यादृष्टेः सकाशादविरतादय एव यथोत्तरमनन्तगुणविशुद्धाः पठ्यन्ते, नायम् । किञ्चैतद्वचनान्यथानुपपत्तेरपि मनुजतमायुर्द्वयमुत्कृष्टस्थितिकं सास्वादनो न बध्नाति । मिथ्यादृष्टिस्तु कश्चित्तथाविधविशुद्ध्यादिसामग्रीवशात् मनुजायुर्द्वयं बध्नातीत्यलं विस्तरेण ! तत्त्वमिह केवलिनो विदन्तीति । अतिप्रसङ्गे सत्यपवादमाह–'आहारगे'त्यादि आहारकशब्देनाहारकद्वयं गृह्यते । ततश्चाहारकद्विकं तीर्थकरनाम चामी संयमसम्यक्त्वरहितत्वान्न बध्नाति । देवायुष्कमपीहोत्कृष्टं प्रकृतम्, तच्चानुत्तरसुरयोग्यं संयमिन एव बध्नन्ति, न मिथ्यादृष्टिरिति । एतानि चत्वारि वर्जयित्वा शेषषोडशोत्तरशतस्यैव कर्मणामुत्कृष्टस्थितिबन्धको मिथ्यादृष्टिर्भवतीति गाथार्थः ॥ ५८ ॥ यद्येवं तर्हि-

तासामाहारकादिप्रकृतीनां क उत्कृष्टस्थितिबन्धकः ? इत्याह—

भा० ठीवंधस्सामित्तं वहि सब्बुपभिइपकहि गाहाहिं । उक्कसठिइसामित्तं भणेइ सुगमं च तं किं तु ॥ १३ ॥

देवाउयं पमत्तो आहारगमप्पमत्तविरओ उ । तित्थयरं च मणूसो अविरयसम्मो समज्जेइ ॥ ५९ ॥

टी० इह पूर्वकोट्यायुः प्रमत्तसंयतोऽप्रमत्तभावाभिमुखो वेद्यमानपूर्वकोटिलक्षणायुषो भागद्वये गते तृतीयभागस्यादिसमये उत्कृष्टस्थितिकं पूर्वकोटित्रिभागाधिकत्रयस्त्रिंशत्सागरोपमलक्षणं देवायुर्बध्नाति। पूर्वकोटित्रिभागस्य च द्वितीयादिसमयेषु बध्नतोऽनुत्कृष्टं लभ्यते, अबाधायाः परिगलितत्वेन मध्यमत्वप्राप्तेरित्यादिसमयग्रहणम् । अप्रमत्तभावाभिमुखता विशेषणं तर्हि किमर्थमिति चेत् ? उच्यते, शुभेयं स्थितिर्विशुद्ध्या बध्यते, सा चास्याप्रमत्तभावाभिमुखस्यैव लभ्यत इति । तर्ह्यप्रमत्त एव कस्मादेतद्बन्धकत्वेन नोच्यत इति चेत् ? उच्यते, अस्यायुर्बन्धारम्भनिषेधात्, प्रमत्तनारब्धमायुर्बन्धमप्रमत्तः कदाचित्समर्थयत इत्युक्तत्वादिति । आहारकद्विकस्य त्वप्रमत्तयतिः प्रमत्तभावाभिमुख उत्कृष्टां स्थितिं रचयति । अशुभा हीयं स्थितिरित्युत्कृष्टसङ्क्लेशेनैवोत्कृष्टा बध्यते, तद्बन्धकश्चाप्रमत्तः प्रमत्तभावाभिमुख एवोत्कृष्टसङ्क्लेशयुक्तो लभ्यत इतीत्थं विशिष्यत इति। तीर्थकरनाम्नस्त्वविरतसम्यग्दृष्टिर्मनुष्यः पूर्वं नरकबद्धायुष्को नरकं जिगमिषुरवश्यं मिथ्यात्वं यत्र समये प्रतिपद्यते, ततोऽनन्तरेऽर्वाक् स्थितिबन्धे उत्कृष्टां स्थितिं समर्जयति—बध्नाति। तीर्थंकरनाम्नो ह्यविरतादयोऽपूर्वकरणावसाना बन्धका भवन्ति, किन्तूत्कृष्टा स्थितिरुत्कृष्टसङ्क्लेशेन बध्यते। स च तीर्थकरनामबन्धकेष्वविरतस्यैव यथोक्तविशेषणविशिष्टस्य लभ्यत इति शेषव्युदासेना-

१ 'नो' सि.

स्यैवोपादानमिति भावः। तत्र तिर्यञ्चस्तीर्थकरनाम्नः पूर्वप्रतिपन्नाः प्रतिपद्यमानकाश्च भवप्रत्ययेनैव (न) भवन्तीति मनुष्यग्रहणम्। बद्धतीर्थकरनामकर्मा च पूर्वमबद्धनारकायुर्नरकं न व्रजतीति पूर्वं नरकबद्धायुष्कस्य ग्रहणम्। क्षायिकसम्यग्दृष्टिश्च श्रेणिकादिवत्तत्सम्यक्त्वोऽपि कश्चिन्नरकं याति, किन्तु तस्य विशुद्धत्वेनोत्कृष्टस्थितिबन्धकत्वात्, तस्या एव चेह प्रकृतत्वात् नासौ गृह्यते। अतः प्रस्तुतकर्मोत्कृष्टस्थितिबन्धकत्वान्मिथ्यात्वाभिमुखस्यैव ग्रहणमिति गाथार्थः॥५९॥इह पूर्वं सङ्क्लिष्टो मिथ्यादृष्टिः षोडशोत्तरप्रकृतिशतस्योत्कृष्टस्थितिबन्धकः सामान्येनैवोक्तः, स च नारकादिभेदेन चिन्त्यमानश्चतुर्द्धा भवति। अतो नारकास्तिर्यञ्चो मनुष्या देवाश्च मिथ्यादृष्टयः पृथक्केषां कर्मणां स्थितीरुत्कृष्टा बध्नन्तीति भेदतश्चिन्तयन्नाह—

भा० देवाउपमत्तो जं जुत्तं तहिं सुभाउमुक्कोसं। नेय इहरा इयराउयंति वंधंति मिच्छाइ ॥ १४ ॥ पुव्वकोडाउसाहू अपमत्ताभावअभिमुहपमत्तो। आउयतिभागसमए वंधइ आउं समुक्कोसं ॥ १५ ॥ आहारमप्पमत्तो पमत्तभावस्स अभिमुहो वंधे। तित्थगरं उक्कोसं मणुस्स सम्मो अविरओ य ॥१६॥ पुव नरए वद्धाउओ त्ति नरयम्मि गच्छमाणो उ। नियमा गच्छइ मिच्छं वंधो तित्थे तहिं जेट्ठो ॥ १७ ॥ अन्नत्थ सो वि सम्मो तहापणछसत्तअट्ठमगुणिणो। वंधंति मज्झिमठिइं जेणं ते मज्झसंकेसा ॥१८॥ बद्धतित्थयरकम्मो पुव्वं अबद्धनारगाऊ य। नरगम्मि न वच्चेइ इयबद्धा ऊकयगहणं ॥१९॥ तह चउगइगो मिच्छा वीसुं कम्माण केसि उक्कोसं। ठीवंधं त भेएण भणइ पन्नरसगाहजुगं ॥ २० ॥

पन्नरसण्ह ठिइमुक्कोसं बंधंति मणुयतेरिच्छा। छण्हं सुरनेरइयाईसाणं ता सुरा तिण्हं ॥ ६० ॥

१ वत्सम्यक्त्वेऽपि प्र.

टी० देवायुर्वर्ज्यमायुष्कत्रयं देवद्विकं नरकद्विकं द्वित्रिचतुरिन्द्रियजातयः वैक्रियद्विकं सूक्ष्मं अपर्याप्तकं साधारणमित्येतासां पञ्चदशप्रकृतीनामुत्कृष्टां स्थितिं तिर्यग्मनुष्या एव मिथ्यादृष्टयो बध्नन्ति, न देवनारका, ते ह्येतासां मध्ये तिर्यग्मनुष्यायुर्द्वयं मुक्त्वा शेषास्त्रयोदश प्रकृतीर्भवप्रत्ययेनैव न बध्नन्ति। तिर्यग्मनुष्यायुषोरपि देवकुर्वादिप्रायोग्य उत्कृष्टस्त्रिपल्योपमलक्षणः स्थितिबन्धः प्रकृतः, तत्र देवनारका भवप्रत्ययादेव नोत्पद्यन्त इत्येतद्बन्धोऽप्यमीषां न सम्भवति, तस्मादेते तिर्यग्मनुष्यायुषी उत्कृष्टस्थितिके पूर्वकोट्यायुषस्तिर्यग्मनुष्या मिथ्यादृष्टयस्तत्प्रायोग्यविशुद्धाः स्वायुस्त्रिभागाद्यसमये वर्त्तमाना बध्नन्ति। सम्यग्दृष्टेरतिविशुद्धमिथ्यादृष्टेश्च देवायुर्बन्धः स्यादिति मिथ्यादृष्टित्वतत्प्रायोग्यविशुद्धविशेषणद्वयम्। नारकायुषस्त्वेत एव तत्प्रायोग्यसङ्क्लिष्टा वाच्याः, अत्यन्तशुद्धस्यात्यन्तसङ्क्लिष्टस्य चायुर्बन्धस्य सर्वथा निषेधादिति। नरकद्विकवैक्रियद्विकयोस्त्वेत एव सर्वसङ्क्लिष्टाः पूर्वोक्तोत्कृष्टस्थितेर्बन्धका वाच्याः। विकलजातित्रिकसूक्ष्मत्रिकयोस्तु तत्प्रायोग्यसङ्क्लिष्टा द्रष्टव्याः। अतिसङ्क्लिष्टा हि प्रस्तुतप्रकृतिबन्धमुल्लङ्घ्य नरकप्रायोग्यमेव निर्वर्त्तयेयुर्विशुद्धास्ते विशुद्धितारतम्यात्पञ्चेन्द्रियतिर्यक्प्रायोग्यं वा मनुष्यप्रायोग्यं वा देवप्रायोग्यं वा रचयेयुरिति तत्प्रायोग्य सङ्क्लेशग्रहणम्। देवद्विकस्यापि तत्प्रायोग्यसङ्क्लिष्टा वाच्याः, अतिसङ्क्लिष्टानामधोवर्त्तिमनुष्यादिप्रायोग्यबन्धप्रसङ्गाद्विशुद्धौ उत्कृष्टबन्धाभावादिति भाविताः पञ्चदशापि प्रकृतयः। 'छण्ह सुरनेरइय'त्ति तिर्यग्द्विकौदारिकद्विकसेवार्त्तोद्योतलक्षणानां षट्प्रकृतीनामुत्कृष्टस्थितिबन्धकाः सुरा नारकाश्च भवन्ति, न मनुष्यतिर्यञ्चः। ते हि तत्प्रायोग्यबन्धार्हसङ्क्लेशे वर्त्तमाना एषां कर्म्मणामुत्कृष्टतोऽप्यष्टादशकोटीकोटिलक्षणामेव मध्यमां स्थितिमुपरचयन्त्यथाभ्यधिकसङ्क्लेशे वर्त्तमाना एतेरेस्ताहिं प्रस्तुतकर्म्मबन्धमतिक्रम्य नरकप्रायोग्यं उपरचेयुः, देवनारकास्तु सर्वोत्कृष्टसङ्-

क्लेशा अपि तिर्यग्गतिप्रायोग्यमेव बध्नन्ति, न नरकगतिप्रायोग्यं तत्र तेषामुत्पत्त्यभावात्, तस्माद्देवनारका एव सर्वसङ्क्लिष्टाः प्रस्तुतप्रकृत्य विंशतिसागरोपमकोटीकोटिलक्षणामुत्कृष्टां स्थितिं रचयन्ति। अत्र च सामान्योक्तावपि सेवार्त्तौदारिकाङ्गो-पाङ्गलक्षणप्रकृतिद्वयस्योत्कृष्टस्थितिबन्धका देवा ईशानादुपरि सनत्कुमारादय एव द्रष्टव्याः, नेशानान्ताः। ते हि तत्प्रायोग्यस-ङ्क्लेशे वर्त्तमानाः प्रकृतकर्मद्वयस्योत्कृष्टतोऽष्टादशकोटीकोटिलक्षणां मध्यमामेव स्थितिं बध्नन्त्यथ सर्वोत्कृष्टसङ्क्लेशा भवन्ति, तर्हि एकेन्द्रियप्रायोग्यमेव निर्वर्त्तयेयुर्न चैकेन्द्रियप्रायोग्यबन्धे एते कर्मणी बध्येते, तेषां संहननाङ्गोपाङ्गाभावात्। सनत्कु-मारादयस्तु सर्वसङ्क्लिष्टा अपि पञ्चेन्द्रियतिर्यक्प्रायोग्यमेव बध्नन्ति, नैकेन्द्रियप्रायोग्यम्, तेषां तेषूत्पत्त्यभावात्तस्मात्प्रकृतक-र्मद्वयस्य विंशतिसागरोपमकोटीकोटिलक्षणामुत्कृष्टस्थितिं सर्वसङ्क्लिष्टाः सनत्कुमारादय एव बध्नन्ति, नापरतनाः। 'ईसा-णंता सुरा तिन्हं' ति एकेन्द्रियजात्यातपस्थावरलक्षणप्रकृतित्रयस्योत्कृष्टां स्थितिं ईशानोऽन्ते येषां ते ईशानान्ता भवनपत्यादय ईशानपर्यन्तसानादेवाः सर्वोत्कृष्टसङ्क्लेशा बध्नन्तीत्यर्थः। तथाहीशानादुपरितना देवा नारकाश्चैकेन्द्रियेषु नोत्पद्येयुरित्येकेन्द्रिय-प्रायोग्याण्येतानि न बध्नन्त्येवेति तन्निषेधः। तिर्यग्मनुष्यास्त्वेतावति सङ्क्लेशे वर्त्तमाना एतद्बन्धमतिक्रम्य नरकप्रायोग्यमेव बध्नन्तीति तेषामपि निषेधः। ईशानान्तास्तु देवाः सर्वसङ्क्लिष्टा अप्येकेन्द्रियप्रायोग्यमेव बध्नन्त्यतस्त एव प्रस्तुत प्रकृतित्रय-स्य विंशतिसागरोपमकोटीकोटिप्रमाणामुत्कृष्टस्थितिं बध्नन्तीति गाथार्थः ॥ ६० ॥ ननु पूर्वं मिथ्यादृष्टिः सामान्येन षोडशो-त्तरप्रकृतिशतस्योत्कृष्टस्थितिबन्धक उक्तः, विशेषभणनप्रक्रमे तथापि चतुर्विंशतेरेवासौ बन्धक उक्तः। शेषप्रकृतीनां का वार्त्तेत्याह—

मा० तिरियनिरियाउतिगं वेउव्वियछक्कविगलतिगं च। सुहुमं अपज्जसाहारणं च एया उ पनरस ॥२१॥ तिरिदुगको-

राउदुगं छेवट्ठुज्जोय होइ छक्कं तु । एगिंदियथावरगं आयावं हुंति तिञ्चेव ॥२२॥ पन्नरसाणुक्कोसं ठिइं निबंधंति तिरिनरा एव । नो निरयसुरा ते जेण तिरियमणुयाउयदुगं ति ॥ २३ ॥ मोत्तुं तेरस अन्ना पयडी भवपच्चया न बंधंति । तिरिनरआऊणंपि य उक्कोसठिई तिकोसेसु ॥ २४ ॥ संभवइ तिपल्लोवमआउस्स तत्थ वि य देवनेरइया । भवपच्चयओ नो जंति तेण एसिंपि नो बंधो ॥२५॥ तिरिमणुया मिच्छा पुव्व-कोडिआऊ विसुद्धया किंचि । आउयतिभागपभिइ आइमसमयंमि वट्टंता ॥२६॥ उक्कोसठिई तिरिमणुयाउं (वा) बंधयंति एए वि । किंचि किलिट्ठा किंची मिच्छा बंधंति नरयाउं ॥२७॥ विरिदुगविउवियदुगं बंधंति इमे वि आइसंकिट्ठा । तप्पाओगकिलिट्ठा बंधंती सुहुमविगलतिगं ॥२८॥ तज्जोगसंकिलिट्ठा बंधंती सुरदुगं पि उक्कोसं । तिरिमणुयभावणेसा अह सुरनरएसु कित्तेमि ॥ २९ ॥ छन्ह सुरनेरइया उक्कोसठिइंइ बंधगा भणिया । ते जेणं सव्वकिट्ठ-संकिलेसेण तिरिजोग ॥ ३० ॥ बंधंती विसइ अयरकोडीकोडीउ पत्थुयासेइ । धम्मछक्कस्स जिट्ठठीइं सामन्नेण भणिए वि ॥ ३१ ॥ छेवट्ठोदारिय अंगुवंगा पयडीदुगस्स जेट्ठठिइं । तइय सुरालयपभिइं देवा बंधंति नो तदहो ॥३२॥ जेण सणंकुमारि(ए)पभिइं नेगिंदिएसु गच्छंति । अविसुद्धा वि पणिंदियतिरिपाओगं निबंधंति ॥ ३३ ॥ ईसाणंता देवा तिन्हं निबंधयंति जेट्ठठिइं । नोयरिमसुरा नेरइयगाय ते जेण थिर जीवा ॥ ३४ ॥ नो गच्छंती एगिंदिएसु तो कह एगिंदिपाओगं । बंधंती कम्मतिगं तिरिमणुया अइकिलेसम्मि ॥ ३५ ॥ नरयगईपाओग बंधती तो निसेहिया ते वि । ईसाणंता एव बंधंती कम्मतियमेयं ॥३६॥ पन्नरसाईयाणं इय भावणिया समासओ भणिया ।

सेसाणं चउगइया ठिइमुक्कोसं करेंति पयडीणं । उक्कोससंकिलेसेण ईसिअहमज्झिमेणावि ॥ ६१ ॥

टी० भणितचतुर्विंशतिप्रकृतिभ्यः शेषद्विनवतिप्रकृतीनां मिथ्यादृष्टयश्चतुर्गतिका अप्युत्कृष्टां स्थितिं बध्नन्ति । तत्रैतासु मध्ये पूर्वं "उत्तरपयडीसु तहा धुवियाणं बंधचउविगप्पो य" इत्यादि गाथाविवरणस्वरूपाणां ध्रुवबन्धिनीनां सप्तचत्वारिंशत्प्रकृतीनामपि मध्ये, तथाऽध्रुवबन्धिनीनामपि मध्येऽसातारतिशोकनपुंसकवेदपञ्चेन्द्रियजातिहुण्डपराघातोच्छ्वासाशुभविहायोगतित्रसबादरपर्याप्तप्रत्येकास्थिराशुभदुःस्वरदुर्भगानादेयायशःकीर्तिनीचैर्गोत्रलक्षणानां विंशतेः प्रकृतीनां सर्वोत्कृष्टसङ्क्लेशेनोत्कृष्टां स्थितिं चतुर्गतिका अपि मिथ्यादृष्टयो बध्नन्ति । शेषाणां त्वध्रुवबन्धिनीनां सातहास्यरतिस्त्रीपुंवेदमनुष्यद्विकसेवार्त्तवर्ज्यसंहननपञ्चकहुण्डवर्ज्यसंस्थानपञ्चकशुभविहायोगतिस्थिरादिषट्कोच्चैर्गोत्रलक्षणानां पञ्चविंशतिप्रकृतीनां तद्बन्धकेषु सर्वसङ्क्लिष्टास्त एवोत्कृष्टां स्थितिं रचयन्ति, तत्प्रायोग्यसङ्क्लिष्टा इत्यर्थः । ननु कैः स्थितिबन्धाध्यवसायस्थानैरियमुत्कृष्टा स्थितिर्निर्वर्त्त्येत इत्याह–'उक्कोससंकिलेसेणे'त्यादि, इह सङ्क्लेशशब्देन स्थितिबन्धाध्यवसायस्थानमुच्यते । ततश्चेदमुक्तं भवति–इह ज्ञानावरणादिकर्म्मणः सर्वजघन्याया अपि स्थितेर्निर्वर्त्तकानि यथोत्तरं विशेषवृद्धान्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणानि स्थितिबन्धाध्यवसायस्थानानि भवन्ति । एतैश्च सर्वैरप्येकैव जघन्या स्थितिर्नानाजीवान् कालभेदेनैकं वा जीवमाश्रित्य जन्यते, पृथगनेकप्रवस्तुपेतबहुपुरुषैर्वाराग्रारकेण निर्वर्त्यमानकटाद्येककार्यवत् । ततः समयोत्तरां स्थितिं यानि निर्वर्त्तयन्ति, तान्यपि यथोत्तरं विशेषवृद्धान्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणान्यन्यानि स्थितिबन्धाध्यवसायस्थानानि भवन्ति । केवलं पूर्वेभ्यो विशेषाधिकानि । ततो द्विसमयोत्तरां स्थितिं निर्वर्त्तयन्ति यानि तान्यनन्तरेभ्योऽपि विशेषाधिकानि । त्रिसमयाधिकां तु तां नि-

१ गाथा ४१ ।

वर्त्तयन्ति यानि तानि तेभ्योऽपि विशेषाधिकानि। चतुस्समयाधिकां तु निवर्त्तयन्ति यानि तानि तेभ्योऽपि विशेषाधिकानि। एवं तावन्नेयं यावत्सर्वोत्कृष्टां स्थितिं यानि निवर्त्तयन्ति तान्यपि समयोनोत्कृष्टस्थितिजनकाध्यवसायस्थानेभ्योऽप्यन्यानि विशेषाधिकानि असङ्ख्येयलोकाकाशप्रदेशप्रमाणानि यथोत्तरं विशेषवृद्धानि स्थितिबन्धाध्यवसायस्थानानि भवन्ति। एतानि स्थाप्यमानानि विषमचतुरस्रं क्षेत्रमास्तृणन्ति। तद्यथा– तत्र प्रथमपङ्क्तावप्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणानि द्रष्टव्यानि, किन्त्वसत्कल्पनया चतुःसङ्ख्यात्वेन दर्शितानि। द्वितीयादिपङ्क्तिषु तान्येव विशेषाधिकानीति पञ्चादित्वेन दर्शितान्येतास्चैवं पङ्क्त्यो जघन्यायाः स्थितेरारभ्य यावदुत्कृष्टा स्थितिस्तावत् ये समया भवन्ति, तावत् प्रमाणा असङ्ख्येया द्रष्टव्याः, असत्कल्पनया च पञ्च दर्शिताः। नन्वेतत् स्यात् इहैकस्थितिजनकान्यप्यध्यवसायस्थानानि असङ्ख्येयानि परस्परं विचित्राण्यभ्युपगम्यन्ते, तद्वैचित्र्याभ्युपगमे च स्थितिरपि वैचित्र्यं प्राप्नोतीति, तदयुक्तम्। तानि ह्येकस्थितिजनकान्यपि सन्ति क्षेत्रकालानुभाग[योग]योगादिवैचित्र्याद्विचित्राण्युच्यन्ते, न स्थितिमाश्रित्य, तेषामेकस्थितिजनकत्वाविशेषेण वैचित्र्यासिद्धेरित्यलं विस्तरेण। प्रकृतमुच्यते–इह सर्वोत्कृष्टस्थितिजनकानि चरमपङ्क्तिनिर्दर्शितानि यानि स्थितिबन्धाध्यवसायस्थानानि तेषां मध्ये यच्चरमाध्यवसायस्थानं तदुत्कृष्टसङ्क्लेश उच्यते, इह तेषामेवाद्यमीषत् उच्यते, उभयान्तरालवर्त्तीनि तु मध्यमानि, ततश्चैतैरीषन्मध्यमोत्कृष्टैः स्थितिबन्धाध्यवसायस्थानैरुत्कृष्टा स्थितिर्बध्यते। अथवा चरमस्थितिबन्धाध्यवसायस्थानमुत्कृष्टसङ्क्लेश उच्यते शेषाणि तु चरमपङ्क्तिनिर्दर्शितानि स्थितिबन्धाध्यवसायस्थानानि ईषन्मध्यमान्युच्यन्ते। तैश्चरमपङ्क्तिनिर्दर्शितैः सर्वोत्कृष्टस्थितिजनकैः सर्वैरपि स्थितिबन्धाध्यवसायस्थानैरुत्कृष्टा स्थितिर्जन्यत इति भाव इति गाथार्थः॥ ६१॥

उक्तमुत्कृष्टं स्थितिबन्धस्वामित्वमिदानीं तदेव जघन्यमुच्यते—

भा० सेसाणं दुगनउई पयडीणं चउगइण जीवा ॥ ३७ ॥ उक्कोसठिइं बंधंति तत्थ धुवसचचचपुच्छुत्तं । तीए तह अधुवाणं मज्झे अरसाअरइसोगं ॥ ३८ ॥ नपुपंचिंदियजाई हुंडं परघायुसासअसुभा य । विहगगइतसचउअथिर-छक्कं नियगोत्त इयवीसं ॥ ३९ ॥ एयासि पिय पग-ईण सहउक्किट्ठसंकिलेसेण । उक्किट्ठठिइं मिच्छा चउगइया विय निबंधंति ॥ ४०. ॥ सेसाण अधुवबंधीण सायहासरइनरदुगसुमित्थी । अंतिमवज्जासंघयणपंचपंचेव संठाणे ॥ ४१ ॥ सुभविहगइपिरछगउच्चगोयपयाउ हुंति पणवीसं । एयासि तज्जोगाइसंकिलिट्ठ उ उक्कोसं ॥ ४२ ॥ ठिइं विरयंति अह केहिं ठीइं बंधइअज्झवसायठाणगेहि इमं । उक्कोसठिइं बंधइ । मज्झइ दुह(अह)संकिलेसेण ॥ ४३ ॥ इह संकिलेसठसद्देण सदकम्माण य ठिइंबंधस्स । अज्झवसायट्ठाणं भन्नइ तहि जहन्नठीएवि ॥ ४४ ॥ असंखलोगअंबर-पएसमाणेण ठिइंबंधस्स । अज्झवसायट्ठाणाणि हुंति सव्वेहि तेहिं पि ॥ ४५ ॥ एगेव जहन्नठिइं नाणा जीवे पडुच्च किर होइ । एमाई ठाणजमो विन्नेओ सयगविसीओ ॥ ४६ ॥ जहन्नठिइबंध-सामित्तमिन्हं आहारगाइजुयलेणं । भण्णइ

आहारगतित्थयरं नियट्टि अनियट्टि पुरिससंजलणं । बंधइ सुहुमसरागो सायजसुच्चावरणविग्घं ॥ ६२ ॥

टी० जघन्यमिति पदं द्वितीयगाथातोऽत्र सम्बध्यते । आहारकद्विकं तीर्थकरनाम च निवृत्तिः—अपूर्वकरणः क्षपकस्तद्बन्धस्य चरमस्थितिबन्धे वर्त्तमानः स्थितिमाश्रित्य जघन्यं बध्नाति, तद्बन्धकेष्वस्यैवातिविशुद्धत्वात् । तिर्यग्मनुष्यदेवायुर्वर्ज्यकर्म्मणां जघन्यस्थितेर्विशुद्धिप्रत्ययत्वेन पूर्वमेवोक्तत्वादिति । पुरुषवेदस्य सञ्ज्वलनचतुष्टयस्य चानिवृत्तिबादरः क्षपकस्तद्बन्धस्य

यथास्य चरमस्थितिबन्धे वर्त्तमानो जघन्यं स्थितिबन्धं करोति, तद्बन्धकेष्वस्यैवातिविशुद्धत्वात् । सातं यशःकीर्त्तिरुच्चैर्गोत्रं
'आवरण'त्ति, ज्ञानावरणपञ्चकं दर्शनावरणचतुष्कं, 'विग्घं'ति विघ्नपञ्चकं च क्षपकसूक्ष्मसम्परायश्चरमस्थितिबन्धे वर्त्तमानो
जघन्यस्थितिबन्धं बध्नाति, तत एव हेतोरिति, गाथार्थः ॥ ६२ ॥

भा० तहि आहारग इयाइगाहा सुहबोहा ॥४७॥ किंतु आहारगजुयलं तित्थमपुव्वो पुमं च चउ(सं)जलणा। अनियट्टी सुहुमो सायजसुच्चं या तह विग्घं ॥४८॥ पणनाणदंसणचऊ जहन्नबंधं इमंमि गुणतियगे। तव्वंधगअइसुद्धा करिंति सेसं पुणो सुगमं॥४९॥

छण्हमसण्णी कुणइ जहन्नठिइमाउगाणमन्नयरो। सेसाणं पज्जत्तो बायर एगिंदियविसुद्धो ॥ ६३ ॥

टी० 'छण्हमसन्नो'त्ति देवद्विकनरकद्विकवैक्रियद्विकलक्षणप्रकृतिषट्कस्य तिर्यग्सञ्ज्ञी पञ्चेन्द्रियः सर्वपर्याप्तिभिः पर्याप्तो जघन्यां स्थितिं करोति, नरकद्विकस्य तत्प्रायोग्यविशुद्धः, शेषकर्मचतुष्टयस्य तु सर्वविशुद्धो वाच्यः । एतानि हि षट् कर्म्माणि यथासम्भवं नरकदेवलोकप्रायोग्याणि बध्यन्ते । तत्र च देवनारकाऽसञ्ज्ञिमनुष्यैकेन्द्रियविकलेन्द्रिया नोत्पद्यन्त इति तेषामेतद्बन्धासम्भवः । तिर्यग्मनुष्यास्तु संज्ञिनः स्वभावादेव प्रस्तुतकर्मषट्कस्य स्थितिं मध्यमामुत्कृष्टां वा कुर्वन्तीति तेऽपोहो-पेक्षिताः । 'आउगाणमण्णयरो'त्ति अन्यतरशब्देनेह सञ्ज्ञी असञ्ज्ञी वा प्रगृह्यते । ततश्चतुर्णामायुषां सञ्ज्ञी असञ्ज्ञी वा जघन्यां स्थितिं करोति । तत्र नारकदेवायुषोः पञ्चेन्द्रियतिर्यग्मनुष्याः, मनुष्यतिर्यगायुषोस्तु एकेन्द्रियादयो जघन्यस्थिति-कर्त्तारो द्रष्टव्याः । 'सेसाणमि'त्यादि, भणितशेषप्रकृतीनामेकेन्द्रियो बादरः पर्याप्तस्तद्बन्धकेषु सर्वविशुद्धः, पल्योपमासङ्ख्येय-भागहीनसागरोपमद्विसप्तभागादिकां जघन्यां स्थितिं करोति । अन्ये ह्येकेन्द्रियास्तथाविधविशुद्ध्यभावाद्बहुत्तरां स्थिति-

मुपकल्पयन्ति । विकलेन्द्रियपञ्चेन्द्रियेषु तु शुद्धिरधिकाऽपि लभ्यते । केवलं तेऽपि स्वभावादेव प्रस्तुतकर्मणां महती स्थिति-
मुपरचयन्तीति शेषपरिहारेण यथोक्तैकेन्द्रियस्यैव ग्रहणमिति गाथार्थः ॥ ६३ ॥ इति स्थितिबन्धः समाप्तः ॥

भा० छन्हमणेण निउवियछक्कं तहि तिरिपणिंदि असन्नी । पज्जत्तोपज्जत्तो पकरेइ जहन्नठिइबंधं ॥ ५० ॥ नरगदुगं
तज्जोगियविसुद्धकम्मो उ सेसचउगं ति । सव्वविसुद्धो बंधइ सुरनरयगईण पाओगं ॥ ५१ ॥ इय कम्मछगं एयं च नरयसुर-
अमणमणुय इगविगला । नो बंधंती ते जेण सगनरएसु नो जंति ॥५२॥ तिरियमणुया उ सन्नी इयकम्मछगस्स ठीइ मज्झिमय ।
उक्कोसं वा पकरंति तेण ते चेत्थ नो गहिया ॥ ५३ ॥ आऊणं अन्नयरो असन्नि सन्नी य पकरेइ जहन्नं । ठीबंधं ठीबंधं दारं
एयंपि सम्मत्तं ॥ ५४ ॥ ठीबंधो सम्मत्तो ॥

टी० इदानीमनुभागबन्धस्यावसरोऽनुभागो रसोऽनुभाव इत्यनर्थान्तरं तस्यानुभावस्य किं तावत् स्वरूपमित्युच्यते ।
इह हि गम्भीरभवाम्भोधिमध्यविपरिवर्त्ती रागादिसचिवो जन्तुः पृथक्सिद्धानामनन्तभागवर्त्तिभिरभव्येभ्योऽनन्तगुणैः
परमाणुभिर्निष्पन्नान् स्कन्धान् प्रतिसमयं गृह्णाति । तत्र च प्रतिपरमाणुकषायविशेषात् सर्वजीवानन्तगुणाननुभागस्या-
विभागान् पलिच्छेदान् करोति । केवलिप्रज्ञया छिद्यमानो यः परमनिकृष्टोऽनुभागांशोऽतिसूक्ष्मतयाऽर्द्धं न ददाति
सोऽविभागपलिच्छेदस्तदुक्तं " बुद्धीए छिज्जमाणो अणुभागं सो ण देइ जो अद्धं । अविभागपलिच्छेओ सो इह अणुभागबं-
धम्मि ॥ १ ॥ तत्र समानरसांशानां परमाणूनामेका वर्गणा, एकेन तु रसांशेनाधिकानां द्वितीया वर्गणेत्यादिवर्गणा-

१ बुद्ध्या छिद्यमानोऽनुभागांशो न ददाति योऽर्द्धम् । अविभागः पलिच्छेदः स इहानुभागबन्धे ॥ १ ॥

स्पर्द्धकक्रमेण यथाऽयमनुभागः पूर्वमनिवृत्तिबादरगुणस्थाने अत्रैवोक्तस्तथा द्रष्टव्यः । अयं चानुभागो द्विधा भवति, वक्ष्य-
माणशुभप्रकृतीनां सम्बन्धी शुभोऽशुभप्रकृतीनां तु सम्बन्धी अशुभः । पुनरेकद्वित्रिचतुस्स्थानिकभेदादुभयरूपोऽपि चतुर्द्धा ।
तत्राशुभो घोषातकीनिम्बादिरसतुल्यत्वेन दृष्टान्ताद् भावनीयः । यथा हि- घोषातकीपिचुमन्दाद्यशुभवनस्पतीनां सम्बन्धी
महजोऽक्वथितः कटुको रस एकस्थानिक उच्यते । स एव क्वथितोऽर्द्धावर्त्तितः कटुकतरो द्विस्थानिकः । स एव भागद्वये
आवर्त्तिते तृतीयभागे त्ववशेषे कटुकतमस्त्रिस्थानिकः । स एव भागत्रये आवर्त्तिते चतुर्थे त्ववशेषेऽतिशयकटुकतमश्चतुस्स्था-
निकोऽभिधीयते । अत्र चैकस्थानिकः सहजरसो जललवबिन्दुचुलुकार्द्धचुलुकप्रसृत्यञ्जलिकरककुम्भद्रोणादिसम्बन्धान्मन्दमन्द-
तरादिबहुभेदत्वं प्रपद्यते । एवं द्विस्थानिकादिकेष्वपि बहुभेदत्वं भावनीयम् । एवमेवाशुभप्रकृतीनां रसस्यैकस्थानिकादित्वं
मन्तव्यम् । शुभप्रकृतिरसस्तु सैरिभिक्षीरेक्ष्वादिरसतुल्यत्वेन तद्दृष्टान्ताद् भावनीयः । यथाहीक्षुक्षीरादिरसः सहजोऽर्द्धावर्त्तितो
द्विभागावर्त्तो भागत्रयावर्त्तश्चतुर्भागावर्त्तश्च यथासङ्ख्यं मधुरो मधुरतरो मधुरतमोऽतिमधुरतमश्च सन्नेकद्वित्रिचतुस्स्थानिक
उच्यते । अयमपि पूर्ववज्जलप्रक्षेपाद्बहुभेदत्वं प्रतिपद्यते, एवं शुभप्रकृतिरसोऽप्येकस्थानकादिरसभेदो वाच्य इति । ननु कर्म्मतया
समानेष्वपि पुद्गलेषु कुतः शुभाशुभादिरसवैचित्र्यम् ? उच्यते, अध्यवसायविशेषात् । यथा हि निम्बाद्यशुभरसस्वरूपात् क्षीरादि-
शुभरसस्वरूपाच्चाधिश्रयणविशेषात्तन्दुला रसवैचित्र्यं प्रपद्यन्ते, तथा पुद्गलेष्वप्यध्यवसायविशेषात्तद्वैचित्र्यं भावनीयम् । तदेवं
लेशतो दर्शितमनुभागस्वरूपम् । साम्प्रतं त्वयमेव साद्यादिप्ररूपणाप्रत्ययप्ररूपणाशुभाशुभप्ररूपणाबन्धस्वामित्वप्ररूपणाद्यात्मा-

घातिप्ररूपणास्थानप्ररूपणाविपाकप्ररूपणाद्वारैर्विचार्यंते, तत्र मूलप्रकृतीनां तावत्साधनादिप्ररूपणामाह–
घातिप्ररूपणास्थानप्ररूपणाविपाकप्ररूपणाद्वारैर्विचार्यंते, तत्र मूलप्रकृतीनां तावत्साधनादिप्ररूपणामाह–

भा० अह भन्नइ अणुभागो रसो चि इह सव एव जीवो उ। सिद्धाणणंतभागे अभवजियणंतगुणिएहिं ॥५५॥ परमा-
णूहिं निप्पन्नाओ गिण्हइय कम्मखंधाओ। तत्थ य पडिपरमाणुं करेइ अणुभागपलिछेयं ॥ ५६ ॥ सवकसायविसेसे सवजी-
वाणणंतगुणिए उ। तत्थय केवलिपन्नाए छिज्जमाणो उ किर जो उ॥५७॥ परमनिकिट्ठो अणुभागअंसओ किर अईव सुहुमतया
। अद्धं न देइ सो इह भणिओ अविभागपलिछेओ ॥५८॥ उत्तंच–बुद्धीए छिज्जमाणो अणुभागं किर न देइ जो अद्धं। अवि-
भागपलिच्छेओ सो इह अणुभागबंधम्मि ॥५९॥ तत्थ समाणरसा.जे परमाणू तेसि वग्गणा एका। एक्केण रसेणं पुण अहियाणं
वीयवग्गणया ॥६०॥ इच्चाइवग्गणेहिं निप्फज्जइ फड्डय य तस्सरूवं। सयगचुन्नाओ नेयं सो अणुभागो दुहा होइ॥६१॥ सुभप-
यडीणं तु सुभो असुभपयडीण होइ असुभो उ। पुण एक्केको चउहा इग–ठाणिगमाइभेएहिं ॥ ६२ ॥ निंबरसाईतुछो असुभो
खीराइसरिसओ उ सुभो। तत्थय सहजो अकड्डिओ रसो उ इगठाणिगो भणिओ ॥६३॥ अद्धावट्टो दुट्ठाणिगो उ भागे दुगंमि
आवट्टे। भागतिगे अवसेसो तिट्ठाणो तह तिभागेसु ॥६४॥ आवट्टिएसु तुरिओ इगभागवसेसए उ चउभागो। अज्झवसाय-
विसेसे रसभेयच्च इमं नेयं ॥६५॥ एगट्ठाणाईणं रसाण चुल्लगाइसलिलपक्खेवे। मंदाइरसविसेसे एक्केके हुंति णंताओ ॥ ६६ ॥
एत्तो णुभागबंधे अट्ठ दुवाराइ तत्थ सायाई। दारं पच्चयदारं सुभअसुभपरूवणा चेव ॥ ६७ ॥ बंधसामित्तदारं घायाइदार-
ट्ठाणदारं च। पच्चयदारविवाग–दारं इह अट्ठ दाराइं॥६८॥ तेवीसाइं गाहाहि भणिस्सइ तत्थ मूलपयडीणं। घाइप्पभिईगाहा-
जुगेण सायाइवन्नणया ॥६९॥ धुवबंधुत्तरपयडीण अट्ठगाहाएं तह य अधुवाणं। उक्कोसगगाहाए सायाई वन्नणा तह य॥७०॥

सुभगाहाए पच्चय-परूवणा असुभसुभपवन्नणया। बायालगाहाए तह आयवमाइगाहाहिं ॥ ७१ ॥ चउहिं उक्कोसबंध-सामित्तं चोद्दसाइगाहाहिं। पंचहिं जहन्नबंध-रसामित्तं केवलाईहिं ॥७२॥ तिहिं गाहाहिं थाईवन्नणया तहणुभागठाणाणं। आवरणगाहाए पन्नवणा चउपंचगाहाए ॥७३॥ पच्चयकहणं चउविहविवागपयडीण पंचपभिईहिं। तिहि गाहाहि भणिस्सइ अह एत्तो संपवक्खेमि ॥७४॥ साईयाइपरूवण-विसयद्दार तहिं च किर पढमं। घाईणं अजहन्नो इच्चाईगाहदुगमत्थि ॥७५॥

घातीणं अजहन्नोणुक्कोसो वेयणीयनामाणं। अजहन्नमणुक्कोसो गोए अणुभागबंधम्मि ॥ ६४ ॥

साई अणाइ धुवअद्धुवो य बंधो उ मूलपयडीणं। सेसम्मि उ दुविगप्पो आउचउक्के वि दुविगप्पो ॥ ६५ ॥

टी०-ज्ञानदर्शनचारित्रदानलाभादिगुणान् घ्नन्तीत्येवंशीलानि घातीनि ज्ञानावरणदर्शनावरणमोहनीयान्तरायाणि, तेषामजघन्योऽनुभागः, साद्यादिचतुर्विकल्पो भवतीति द्वितीयगाथायां सम्बन्धः, कर्म्मणां हि रसो यस्मादन्यो हीनो नास्ति स सर्वजघन्यस्तत ऊर्द्ध्वमेकं रसांशमादौ कृत्वा यावत् सर्वोत्कृष्टं तावत् सर्वोऽप्यजघन्य इति। अनन्तभेदभिन्नोऽप्यसौ जघन्याजघन्यप्रकारद्वयेन क्रोडीकृतः। तथा यस्मादन्योऽधिको न बध्यते स उत्कृष्टस्तत एकरसांशहानिमादौ कृत्वा यावत्सर्वजघन्यस्तावत्सर्वोऽप्यनुत्कृष्ट इति। अनेन वा प्रकारद्वयेन अनन्ता अपि रसविशेषाः सङ्गृहीताः। तत्र निर्दिष्टस्वरूपस्य कर्म्मचतुष्टयस्य सम्बन्धी अजघन्यो रसः साद्यादिचतुर्विकल्पोऽपि भवति। तथा ह्यशुभप्रकृतीनां सर्वजघन्यं शुभप्रकृतीनां तु सर्वोत्कृष्टमनुभागं यः कश्चित् तद्बन्धकेषु सर्वविशुद्धः स एव निवर्त्तयति, तत्र ज्ञानदर्शनावरणान्तरायलक्षणकर्मत्रयस्याशुभत्वात् क्षपकः सूक्ष्मसम्परायचरमसमये जघन्यं रसं निवर्त्तयति, तद्बन्धकेष्वयमेवातिविशुद्ध इति कृत्वा। मोहनीयस्य त्वनिवृत्तिबादरमेव याव-

न्धो भवतीति स एव क्षपकश्चरमसमयेऽस्य जघन्यं रसमुपकल्पयतीति, तद्बन्धकेष्वस्यैवातिविशुद्धत्वात्। इतश्च स्थानादन्यत्र सर्वेणोपशमश्रेण्यामपि प्रकृतकर्मचतुष्टयस्यानुभागोऽजघन्य एव बध्यते, उपशमकानामपि क्षपकेभ्यो विशुद्ध्या अनन्तगुणहीनत्वात्। ततश्चोपशान्तमोहः सूक्ष्मसम्परायश्च यथा निर्दिष्टप्रकृतकर्मचतुष्टयसम्बन्धिनोऽजघन्यानुभागस्याबन्धको भूत्वा प्रतिपत्य यदा पुनस्तं बध्नाति, तदा अयमजघन्यानुभागः सादिर्भवति, बन्धव्यवच्छेदे कृते तत्प्रथमतया बध्यमानत्वात्। यैस्तूपशान्तमोहाद्यवस्था नाद्यापि प्राप्ता तेषामनादिकालादारभ्याविच्छिन्नं बध्यमानत्वादनादिः। ध्रुवोऽभव्यानामभाविपर्यन्तत्वात्। अध्रुवो भव्यानामवश्यंभाविपर्यन्तत्वादिति। तदेवमत्राजघन्यो भावितः। शेषे तु जघन्योत्कृष्टानुत्कृष्टलक्षणेऽनुभागे द्वितीयगाथार्द्धं प्राह–'सेसम्मि उ दुविगप्पो' त्ति भणितशेषो जघन्यादिकोऽनुभागो द्विविकल्पः–साद्यध्रुवलक्षणो बन्धो बोद्धव्यः। तथाहि–प्रकृतकर्मचतुष्टयमध्ये मोहनीयस्य तावज्जघन्यानुभागः क्षपकानिवृत्तिबादरचरमसमयेऽनन्तरमेवोक्तः। शेषकर्मत्रयस्य तु क्षपकसूक्ष्मसम्परायचरमसमये अस्माभिरुक्तः। स चानादिकालेऽपि पर्यटता जीवेन पूर्वं न बद्ध इति तत्प्रथमतया तत्रैव बध्यमानत्वात् सादिः। क्षीणमोहाद्यवस्थायां च प्राप्तस्य नियमान्न भविष्यतीत्यध्रुवः। अनादिस्तु न भवति, पूर्वं कदाचिदपि तद्बन्धाभावात्। ध्रुवोऽप्यसौ न भवत्यभव्यानां तद्बन्धस्य दुरोत्सारितत्वादिति। उत्कृष्टानुभागं तु प्रकृतकर्मणामशुभत्वात् सर्वसङ्क्लिष्टो मिथ्यादृष्टिः पर्याप्तसञ्ज्ञिपञ्चेन्द्रिय एकं द्वौ वा समयौ यावद्बध्नाति न परतः, स चानुत्कृष्टादवतीर्य बध्यत इति सादिः। जघन्यतः समयादुत्कृष्टतस्तु समयद्वयात्पुनरप्यनुत्कृष्टानुभागबन्धं गतस्योत्कृष्टोऽध्रुवो भवत्यनुत्कृष्टस्तु सादिः, पुनरपि जघन्यतोऽन्तर्मुहूर्तेनोत्कृष्टतस्त्वनन्ताभिरुत्सर्पिण्यवसर्पिणीभिरुत्कृष्टसङ्क्लेशं प्राप्योत्कृष्टाऽनुभागं बध्नतोऽनुत्कृष्टोऽध्रुवतां व्रजतीत्येवमुत्कृष्टानुत्कृष्टेषु जन्तवो

भ्राम्यन्तीत्युभयत्र साद्यध्रुवत्व सम्भवति, नेतरविकल्पद्वयमिति घातिकर्म्मणां जघन्यादयश्चत्वारोऽपि विकल्पाः भाविताः। साम्प्रतमघातिकर्म्मणां चतुरस्तान् विभावयिषुराह– 'अणुक्कोसो वेयणीयनामाणं' ति वेदनीयनाम्नोरनुत्कृष्टोऽनुभागबन्धः साद्यादिचतुर्विकल्पोऽपि भवति। तथा ह्यनयोः कर्म्मणोः सातयशःकीर्त्तिलक्षणां तदन्तरगतप्रकृतिद्वयमाश्रित्य सर्वोत्कृष्टरसः क्षपकसूक्ष्मसम्परायचरमसमये प्राप्यते, ततोऽन्यः सर्वोऽप्युपशमश्रेणावपि पूर्वोक्तयुक्तितोऽनुत्कृष्टस्ततश्चोपशान्तमोहावस्थायां तस्यापि बन्धो न भवति, पुनरपि च ततः प्रतिपत्य तमेव बध्नतोऽनुत्कृष्टानुभागः सादिः। उपशान्तमोहावस्थां त्वप्राप्तपूर्वस्यानादिरनादिकालाद्बध्यमानत्वात्। ध्रुव ऽभव्यानामपर्यन्तत्वात्। अध्रुवो भव्यानां सपर्यन्तत्वात्। शेषे तूत्कृष्टजघन्याजघन्यरसे किमित्याह–द्वितीयगाथायां 'सेसम्मि उ दुविगप्पो'त्ति एतत्पदं पूर्वसम्बन्धि तमध्यावृत्त्या अत्रापि सम्बध्यते, एवमुत्तरत्रापि सम्भत्स्यते। भणितशेषे उत्कृष्टजघन्याजघन्यलक्षणानुभागे द्विविकल्पः साद्यध्रुवलक्षणो बन्धो भवति। तथा ह्युत्कृष्टमनुभागबन्धो वेदनीयनाम्नोरनन्तरमेव प्रस्तुतकर्म्मबन्धकेष्वतिविशुद्धत्वात् क्षपकसूक्ष्मसम्परायो बध्नातीत्युक्तम्। स च तत्प्रथमतया बध्यमानत्वात् सादिः। क्षीणमोहावस्थायां तु नियमान्न भविष्यतीत्यध्रुवः। जघन्यानुभागं त्वनयोः कर्म्मणोः सम्यग्दृष्टिर्मिथ्यादृष्टिर्वा मध्यपरिणामो बध्नाति। सर्वविशुद्धो ह्यनयोः कर्म्मद्वयग्रहणगृहीतानां सातयशःकीर्त्यादिलक्षणप्रकृतीनामुत्कृष्टं स्वरूपं शुभरसं कुर्यात्, सङ्क्लिष्टस्तु असातनरकगत्यादिप्रकृतीनामुत्कृष्टस्वरूपमशुभरसं कुर्यादिति मध्यपरिणामग्रहणम्॥ अयं च जघन्यानुभागोऽजघन्यादवतीर्य बध्यत इति सादिः। पुनर्जघन्यतः समयादुत्कृष्टतस्तु समयचतुष्टयादजघन्यानुभागं बध्नतो जघन्योऽध्रुवोऽजघन्यस्तु सादिः, पुनस्तत्रैव भवे भवान्तरे वा जघन्यं बध्नतोऽजघन्योऽध्रुव इत्येवं जघन्याजघन्यानुभाग-

बन्धयोः परिभ्रमतामध्रुवतामुभयत्र साद्यध्रुवत्वैव संभवति । 'अजहन्नमणुक्कोसो गोए अणुभागबंधम्मि'त्ति गोत्रे अनुभागबन्धे विचार्यमाणेऽजघन्योऽनुत्कृष्टश्च तद्बन्धः साद्यादिचतुर्विकल्पोऽपि भवतीत्यत्रापि उत्तरगाथायां सम्बन्धः । तथा 'सेसम्मि उ दुविगप्पो'त्ति एतदपीह सम्बध्यते, भणितशेषे जघन्योत्कृष्टपक्षद्वये द्विविकल्पः साद्यध्रुवरूपो बोद्धव्यः । तत्रोत्कृष्टानुत्कृष्टावनुभागबन्धौ प्रत्येकं द्विचतुर्विकल्पौ यथा वेदनीयनाम्नोस्तथा निर्विशेषं भावनीयौ । इदानीं जघन्याजघन्यौ भाव्येते । तत्र कश्चित्सप्तमनरकपृथ्वीनारकः सम्यक्त्वाभिमुखो यथाप्रवृत्तादीनि त्रीणि करणानि कृत्वा मिथ्यात्वस्यान्तरकरणं करोति । तस्मिंश्च कृते मिथ्यात्वस्य स्थितिद्वयं भवत्यन्तर्मुहूर्त्तप्रमाणाधस्तनी शेषा तूपरितनी । स्थापना । तत्र चाधस्तनीं स्थितिं प्रतिसमयं वेदयन्यस्मादनन्तरसमये सम्यक्त्वं प्राप्स्यति, तत्र चरमे समये वर्त्तमानो नीचैर्गोत्रमाश्रित्य गोत्रकर्म्मणो जघन्यानुभागं बध्नाति, अन्यस्थानवर्त्ती ह्येतावत्यां विशुद्धौ वर्त्तमान उच्चैर्गोत्रमजघन्यानुभागान्वितं बध्नीयादिति शेषपरिहारेण सप्तमपृथ्वीनारकस्यग्रहणम् । अयं हि यावत्किञ्चिदपि मिथ्यात्वमस्ति तावद्भवप्रत्ययेनैव तिर्यग्गतिप्रायोग्यं नीचैर्गोत्रं च बध्नाति । स चान्यदा बहुमिथ्यात्वावस्थायामजघन्यरसं निवर्त्तयति, प्राप्तसम्यक्त्वोऽप्युच्चैर्गोत्रस्याजघन्यानुभागं बध्नातीति तद्बन्धेऽप्यतिविशुद्धत्वाद्यथोक्तविशेषणविशिष्टस्य सम्यक्त्वाभिमुखस्य ग्रहणम् । अयं च जघन्यानुभागस्तत्प्रथमतया बध्यमानत्वात्सादिर्लब्धसम्यक्त्वस्तु स एवोच्चैर्गोत्रमाश्रित्याजघन्यानुभागं रचयतीति जघन्योऽध्रुवोऽजघन्यानुभागस्तु सादिस्तच्च स्थानमप्राप्तपूर्वस्यानादिः, अभव्यानां ध्रुवो भव्यानामध्रुव इति जघन्याजघन्यानुभागौ गोत्रकर्मणः प्रत्येकं द्विचतुर्विकल्पाविति । 'आउचउक्केवि दुविगप्पो'त्ति आयूंषि नारकतिर्यग्मानुष्यदेवायुष्करूपाणि तेषां चतुष्केऽपि साद्यध्रुवलक्षणो द्विविकल्पो बन्धो भवति ।

तथा ह्यनुभूयमानायुस्त्रिभागादौ प्रतिनियतकाल एवायुषो बध्यमानत्वात्सादित्वात्तदनुभागस्यापि जघन्यादिरूपस्य सादित्वम्। अन्तर्मुहूर्त्ताच्च परत आयुर्बन्धोऽवश्यमुपरमत इति तस्याध्रुवत्वात् तदनुभागबन्धस्याप्यध्रुवत्वमिति गाथाद्वयार्थः ॥६४॥ ६५॥

तदेवं मूलप्रकृतीनामनुभागबन्धस्य साद्यादिप्ररूपणाकृता। साम्प्रतमुत्तरप्रकृत्यनुभागबन्धस्य तामाह–

भा० तस्स पयाणं एवं संबंधो होइ पढमगाहाए। पढमपयं दुइयाए आइमयं वयणतियं योज्जं ॥७६॥ तह पढमाए दुइए पयंमि दुइयाएँ पढमवयणतिगं। तह पढमाए अंतिम-पयजुयले दुइयगाहाए ॥७७॥ आइमयं वयणतियं तह दुइयाए पुणोवि अंतपयं। भणिउं पयसंबंधो एसिं अह भावणा एवं ॥ ७८ ॥ सेसम्मि उ दुविगप्पो दुइज्जगाहाए जं पयं तइयं। त एत्थं वारतियं भणियं तस्स य इमो अत्थो ॥ ७९ ॥ पढमवाराएँ जहन्नु-क्कोसियरतिगं ति दुइयवाराए। जहन्नाजहन्नुक्कोसं तइयाए जहन्नुक्कोसदुगं ॥८०॥ सुभपयडीणुक्कोसं रस जहन्नं तु असुभपयडीणं। निहणइ तब्बंधगमज्झे जो किर अइविसुद्धो ॥८१॥ आवरणविग्घकम्मत्तियस्स सुहुमो उ खवगसुहुमंते। मोहस्स नियट्टंते सुद्धो पकरइ जहन्नरसं ॥ ८२ ॥ एयट्ठाणा अन्नत्थुवसमसेढिएँ घाइकम्माणं। अजहन्नरसो वज्झइ तो सुहुमोवसमगा जइया ॥८३॥ अजहन्नरसस्स अबंधगाउ होउं पडिउं पुण जइया। बंधंती अजहन्नं तइयाए सो भवइ साई ॥ ८४ ॥ उवसंताइट्ठाणं अपत्तपुव्वाण सो भवेऽणाई। अभव्वाण धुवो भव-जीवाणं सो भवे अधुवो ॥ ८५ ॥ सेसे जहन्नउक्कोसइयरबंधे उ खवगनवमंते। मोहस्स सेसकम्म-त्तियस्स खवगो उ सुहुमंते ॥८६॥ धुवमबद्धो वज्झइ साई अधुवो न अत्थिई अधुवो। धुवणाई न घडंती उक्किट्ठरसं तु घाईणं ॥८७॥ अइसंकिलिट्ठमिच्छो सन्नी पज्जो पणिंदिओ एग। समयं अहवा उ दुगं जा बंधइ नेव परओ तो ॥ ८८ ॥ अवयरिय अणुक्किट्ठा वज्झइ साई तओ

जहन्नेणं। समयाओ उक्कोसा समयदुगा पुण वि उक्किट्ठं॥८९॥ बंधंतस्स रसं तो उक्किट्ठो अद्धुवो भवे बंधो। अणुक्कस्सो पुण साई
तहेव पुण अंतरमुहुत्ता ॥९०॥ कालो अणंतओ वा उक्कोमरसं तु बंधमाणस्स। अणुक्कस्स रसो होई अधुवो एवं अधुवसाई
॥९१॥ घाईण जहन्नाई त्रिगप्पचउगं भणित्तु अन्नाइणं। कम्माण अह चउरो जहन्नाई भावइस्सामि ॥९२॥ वेयणियनामणुक्कस-
रसो उ साथाइचउविगप्पो वि। सायजसाणं उक्कस-रसो उ खवगस्स सुहुमंते ॥९३॥ तस्सन्नो पुवकमा अणुक्कसो ओवसंत-
मोहस्स। तस्स वि बंधो न भवइ पुण निवडिय तं निबंधयओ ॥ ९४ ॥ अणुक्कस्स रसो साई उवसंतऽस्स सो भवेऽणाई।
धुवअधुवा धुवंपिव सेसुक्कसजहन्नअजहन्ना ॥ ९५ ॥ पुवकमा सुहमंते वेयणिनामाण उक्कसो साई। खीणेऽधुवो जहन्न
रसं तु जससायकम्माणं ॥९६॥ सम्मो मिच्छो व मज्झिम-परिणामो बंधई अह विसुद्धो संकिट्ठो विय सुभअसुभमेव बंधइ अओ
भणियं ॥९७॥ मज्झिमपरिणामेणं रसं जहन्नं निबंधई तस्थ। अजहन्ना अवपरिंउ जहन्नबंधे हवइ साई ॥ ९८ ॥ पुण जहन्नेणं
समया उक्कोसेणं तु चउसमयकाला। अजहन्नरसं बंधंतस्स य जहन्नो भवे अधुवो ॥ ९९ ॥ अजहन्नो धुवंपि व साई पुण
तम्मि अन्नहिं व भवे। बंधंतस्स जहन्न अजहन्नो तो भवे अधुवो ॥ ५०० ॥ गोयरसे अजहन्नो अणुक्कोसो साइयाइचउभेओ
। सेसे जहन्नुक्कोसे पत्तेयं साइ अधुवो त्ति ॥ १ ॥ तत्थुक्कोसणुक्कोसो पत्तेयं दुगचउक्कभेएणं। जह वेयणिनामाणं भणिया तह
इह वि भणियव्वा ॥ २ ॥ जहन्न दुविगप्पया इह एवं भणिया इहं जहा कोइ। सत्तममहिनेरइओ सम्माभिमुहो चरमसमए
॥ ३ ॥ नीयागोत्तस्स जहन्नं रसं निबंधेइ तदवरो उच्चं। अजहन्नरसं बंधइ इय सत्तमनेरइयगहणं ॥ ४ ॥ बहुमिच्छो नेरइओ
भवपच्चयओ उ नीयगोयस्स। अजहन्नस्स बंधइ सम्मजुओ उच्चगोयस्स ॥ ५ ॥ अजहन्नरसं बंधइ सम्मत्ताअभिमुहो अओ

भणियं। एसो उ जहन्नरसं पढमं बंधइ तओ साई ॥ ६ ॥ सम्मत्तजुओ सो वि हु उच्चं बंधं तओ भवे अधुवो। अजहन्ने पुव्वंपि व साई तट्ठाणमगयस्स ॥ ७ ॥ सो णाई धुवअधुवा पुव्वंपि व इह वि हुंति दट्ठवा। आऊणि पसिद्धचउगे पुण जह-न्नजहन्नाई ॥ ८ ॥ तत्थ पुणो पत्तेयं साई अधुवा य दो विगप्प त्ति। वज्जंते आउंसि साई उवरिं तु पुण अधुवो ॥ ९ ॥ मूलपयडीण भणियं सायाईवन्नणं तओ उवरिं। उत्तरपयडिसु एत्तो भणामि सायाइवन्नणयं ॥ १० ॥

अट्ठण्हमणुक्कोसो तेयालाणमजहन्नगो बंधो। नेओ हि चउविगप्पो सेसतिगे होइ दुविगप्पो ॥ ६६ ॥

टी० तैजसकार्मणशरीरद्वयं प्रशस्तवर्णगन्धरसस्पर्शा अगुरुलघुनिर्माणमित्येतासामष्टानामुत्तरप्रकृतीनामनुत्कृष्टोऽनुभागबन्धः साद्यादिचतुर्विकल्पोऽपि ज्ञेयो बोद्धव्यः। तथा ह्येतासामुत्कृष्टमनुभागबन्धं क्षपकापूर्वकरणो देवगतिप्रायोग्याणां त्रिंशतः प्रकृतीनां बन्धव्यवच्छेदसमये करोति। एता हि शुभप्रकृतयोऽत एव तदुत्कृष्टानुभागं सर्वविशुद्ध एव रचयति, तद्बन्धकेषु स्वयमेव सर्वविशुद्धः। एतस्मात्पुनरन्यत्रोपशमश्रेणावप्यनुत्कृष्टोऽनुभागबन्धो लभ्यते, स चोपशान्तमोहाद्यवस्थायां सर्वथा न भवतीति ततः प्रतिपतितैर्जन्तुभिर्बध्यमानस्सादिस्तच्च स्थानमप्राप्तपूर्वाणां सदावस्थमानत्वादनादिर्ध्रुवोऽभव्यानाम-ध्रुवो भव्यानामिति। 'सेसतिगे होइ दुविगप्पो'त्ति भणितशेषे उत्कृष्टजघन्याजघन्यानुभागत्रिके द्विविकल्पः साद्यध्रुवलक्षणो बन्धो भवति। तथा ह्यस्य प्रकृत्यष्टकस्योत्कृष्टानुभागबन्धोऽनन्तरमेव क्षपकापूर्वकरणे प्रोक्तः। स च तत्प्रथमतया बध्यमानत्वात्सादिः। एकं च समयं भूत्वाऽग्रेऽवश्यं न भवतीति अध्रुवः। जघन्यानुभागं त्वेतासां शुभप्रकृतित्वात् सर्वोत्कृष्टसङ्क्लेशे वर्त्तमानो मिथ्यादृष्टिः पर्याप्तः सञ्ज्ञिपञ्चेन्द्रियो बध्नाति, पुनरपि जघन्यतः समयादुत्कृष्टतः समयद्वयादवश्यं स एवाजघन्यं

बध्नाति, पुनः कालान्तरे स एवोत्कृष्टसंक्लेशं प्राप्य जघन्यं बध्नातीत्येवं जघन्याजघन्येषु परावर्तमानानां जन्तूनामुभयत्र साद्य-
ध्रुवौ गम्यमानौ। 'तेयाइ णमजहण्णो ध्रुवो' त्ति ज्ञानावरणपञ्चकदर्शनावरणनवकमिथ्यात्वकषायषोडशकभयजुगुप्साऽग्नि-
स्वर्णादिचतुष्कोपघातान्तरायपञ्चकरूपाणां त्रिचत्वारिंशत्प्रकृतीनामजघन्यानुभागः साद्यादिचतुर्विकल्पोऽपि ज्ञेयः।
तथाहि–ज्ञानावरणपञ्चकचक्षुरचक्षुरवधिकेवलदर्शनावरणचतुष्कान्तरायपञ्चकरूपाणां चतुर्दशप्रकृतीनां तावदशुभत्वात् क्षप-
कसूक्ष्मसम्परायचरमे समये जघन्यानुभागं बध्नाति, तदा ह्येष एव सर्वोत्कृष्टविशुद्धिमानिति कृत्वा। ततोऽन्यः सर्वोऽप्युपश-
मश्रेणीगतोऽप्यजघन्यं बध्नाति स चोपशान्तावस्थायां सर्वथा न भवति। ततः प्रतिपत्य बध्यमानः सादित्वं भजते। उप-
शान्तानां त्वप्राप्तपूर्वाणामनादिः, ध्रुवाध्रुवौ पूर्ववत्। सञ्ज्वलनचतुष्टयस्य तूक्तहेतोरेव क्षपकानिवृत्तिबादरो यथास्वं बन्धव्य-
वच्छेदसमये एकं समयं जघन्यानुभागं बध्नाति। ततोऽन्यः सर्वोऽजघन्यस्तस्य चोपशमश्रेणौ बन्धव्यवच्छेदे कृते प्रतिपत्य
पुनस्तमेव बध्नतः सादित्वं बन्धाभावस्थानं चाप्राप्तपूर्वस्यानादित्वं ध्रुवाध्रुवौ तथैव। निद्राप्रचलाऽप्रशस्तवर्णादिचतुष्कोपघात-
भयजुगुप्सारूपाणां नवप्रकृतीनां क्षपकापूर्वकरणो यथास्वं बन्धव्यवच्छेदकाले एकं समयं जघन्यमनुभागं बध्नाति।
ततोऽन्यः सर्वोऽप्यजघन्यस्तस्य चोपशमश्रेणौ बन्धव्यवच्छेदं कृत्वा प्रतिपत्य पुनस्तमेव बध्नतः सादित्वं बन्धाभावस्थानं
चाप्राप्तपूर्वस्यानादित्वं ध्रुवाध्रुवत्वे पूर्ववत्। चतुर्णां प्रत्याख्यानावरणानां देशविरतः संयमप्रतिपत्त्यभिमुखोऽत्यन्तविशुद्धः स्व-
गुणस्थानस्य चरमसमये वर्तमानो जघन्यमनुभागं बध्नाति। तस्मात् स्थानतः पूर्वं सर्वोऽजघन्यः। चतुर्णामप्रत्याख्यानावरणा-
नामविरतसम्यग्दृष्टिः क्षायिकसम्यक्त्वं संयमं च युगपत्प्रतिपित्सुरत्यन्तविशुद्धः स्वगुणस्थानचरमसमये वर्तमानो जघन्यमनुभागं

बध्नातीति तत्श्च पूर्वं सर्वोऽजघन्यः । स्त्यानर्द्धित्रिकमिथ्यात्वानन्तानुबन्धिचतुष्टयलक्षणानामष्टानां प्रकृतीनां मिथ्यादृष्टिः सम्यक्त्वं संयमं च युगपत्प्रतिपित्सुः सर्वविशुद्धो मिथ्यात्ववेदनस्य चरमसमये वर्तमानो जघन्यमनुभागं बध्नात्येतस्माच्चान्यत्र सर्वोऽजघन्यः । एते हि देशविरतादयस्तद्बन्धकेष्वतिविशुद्धत्वाद्यथानिर्दिष्टकर्मणां जघन्यमनुभागं बध्नन्ति । ततश्च संयमादीन् गुणान् प्राप्य पुनरपि प्रतिपत्य यदाऽजघन्यानुभागं बध्नन्ति, तदाऽयमजघन्यानुभागः सादिः । एतानि च स्थानान्यप्राप्तपूर्वाणामनादिर्ध्रुवोऽभव्यानामपर्यन्तत्वादध्रुवो भव्यानां सपर्यन्तत्वादिति । तदेव त्रिचत्वारिंशतः प्रकृतीनामजघन्यानुभागो भावितः । शेषत्रिके तु किमित्याह–' सेसतिगे होइ दुविगप्पो' त्ति भणितशेषे जघन्योत्कृष्टानुत्कृष्टानुभागत्रिके द्विविकल्पः साद्यध्रुवलक्षणो बन्धो भवति । तत्राजघन्यानुभागभणनप्रसङ्गेन सर्वासां जघन्यानुभागोऽपि सूक्ष्मसम्परायादिगुणस्थानेषु स्थानतो निर्दिष्टः । स च तत्र तत्प्रथमतया बध्यमानत्वात्सादिः । क्षीणमोहाद्युपरितनावस्थासु चावश्यं न भवतीत्यध्रुवः । उत्कृष्टं त्वनुभागमेवासां त्रिचत्वारिंशतः प्रकृतीनां मिथ्यादृष्टिः सर्वोत्कृष्टसङ्क्लेशः पर्याप्तसञ्ज्ञिपञ्चेन्द्रियो बध्नात्येकं द्वौ वा समयौ यावत्ततः परं पुनरप्यनुत्कृष्टं बध्नाति, कालान्तरे च पुनरुत्कृष्टं सङ्क्लेशमासाद्योत्कृष्टानुभागं रचयतीत्येवमुत्कृष्टानुत्कृष्टानुभागेषु सञ्चरतां जन्तूनामुभयत्रापि साद्यध्रुवतैव सम्भवति, नेतरविकल्पद्वयमिति गाथार्थः ॥८६॥ तदेवं ध्रुवबन्धिनीनां जघन्यादिषु चतुर्ष्वपि भेदेषु साद्यादिप्ररूपणा कृता.। साम्प्रतमध्रुवबन्धिनीनां तेषु तामाह–

अट्ठण्हति चत्ताए कम्मेण बंधो अणुक्कसऽजहन्नो । साईयाई चउहा अट्ठतिचत्ता य पुण एवं ॥ ११ ॥ तेयाकम्मागुरुलहुनिम्माणपसत्थवन्नचउ अट्ठ । नाणंतरायदसगं दंसणनवमोहपयडीओ ॥ १२ ॥ वेयतियहासचउसम्म–मीसरहिया उ अनु-

भवभवऊ । उववाएणं सहिया तेयाला एस नायव्वा ॥ १३ ॥ अट्ठण्हं उक्कोसं खवगाऽपुव्वो उ तीसपयडीणं । सुरगइपाओगाणं
बंधंते पकरेई बंधं ॥१४॥ एगुवरिं उवसमसेढिए वि लब्भइ अणुक्कसणुभागो । तोउवसंते न भवइ होई तप्पडिय जंतुणं ॥१५॥
तो साई तमपत्ताण सो अणाई धुवाधुवा दोवि । पुव्वंपि व विन्नेया सेसतिगं जिट्ठजहन्नियरं ॥ १६ ॥ तत्थुक्कोसो सायाइखवगे
तो साई तमपत्ताण सो अणाई धुवाधुवा दोवि । पुव्वंपि व विन्नेया सेसतिगं जिट्ठजहन्नियरं ॥ १६ ॥ तत्थुक्कोसो सायाइखवगे
वन्निओ तन्नो एगं । समयं होउं न भवइ तो अधुवो जहन्नमणुभागं ॥ १७ ॥ एयासिं सुभपयडित्तणाउ उक्कोससंकिलेसम्मि ।
वट्टंतो बंधइ मिच्छपज्जपंचिंदिओ सन्नी ॥ १८ ॥ पुण एगदुसमया वा कमेण जहन्नियरकालओवस्सं । बंधइ अजहन्नबंधं
पुण उक्कोसा जहण्णपए ॥१९॥ यदुहा परियत्तमाणा तहि साई अधुवया सुगम्मेव । तेयालाए साईपभिईयां पुण भयंते च ॥२०॥
निपावरणे दंसण–चउक्क इय चउदसण्हपयडीणं । अणुहत्ता खवगो सुहुमचरिमसमए जहन्नरसं ॥२१॥ बंधइ तत्तो अन्नो उव-
समसेढियएवि होइ अजहन्नो । तो उवसंते न भवइ तप्पडियस्स उ पुणो साई ॥२२॥ उवसंतमपत्ताणं सो य अणाई धुवाधुवा
सुगमा । संजलणचउक्कस्स उ खवगो नवमे गुणे कमसो ॥ २३ ॥ बंधंते एगेगं समयं जहन्नं रसं नियत्तेइ । तत्तोऽन्नो
अजहन्नो सोवसमगुणम्मि बंधंतो ॥ २४ ॥ निवडिय पुणो वि बंधंतस्स य साई तहोवसामित्तं । अप्पत्ताण अणाई तह चेव
हवंति धुवअधुवा ॥ २५ ॥ निद्दादुगअपसत्थावन्नचऊभयदुगुंछउवघायं । नवपयडीणं खवगोऽपुव्वंमि गुणे जह कमेण
॥ २६ ॥ बंधंते एगेगं समयं बंधइ जहन्नअणुभागं । तत्तोन्नो-अजहन्नो सोवसमगुणस्स बंधंतं ॥ २७ ॥काउं पडिय पुणो विहु
बंधइ साई तहणुवसामित्ते । बंधं तस्स अणाइ हवंति पुव्वं व धुवअधुवा ॥ २८ ॥ पच्चक्खाणचउक्के देसजइसंजमाभिमुह-
चित्तो । सगुणचरिमसमए तम्मिऽणुभागं बंधइ जहन्नं ॥ २९ ॥ तट्ठाणाओ पुव्वं सत्तो अजहन्नओ तह चउण्हं । अपच्चक्खाण

चउगस्स अविरओ सम्मदिट्ठी जो ॥ ३० ॥ जुगवं पवज्जिउमणो खाइयसम्मं तहेव चारित्तं । अच्चंतविसुद्धो सगुणट्ठाणंतंमि वट्टंतो ॥ ३१ ॥ जहन्नणुभागं बंधइ इय पुव्विं होइ सव्वु अजहन्नो । थीणतिगमिच्छचउरो णंतणुबंधी य इय अट्ठ ॥ ३२ ॥ पयडी उ सवसुद्धो मिच्छो जुगवंपि सम्मचरणाइ । पडिवज्जिउकामो मिच्छवेयअंतंमि वट्टंतो ॥ ३३ ॥ निवत्तेइ जहन्नं रसमन्नत्थ अजहन्नओ सव्वो । तो संजमपभिइगुणे पाविय परिवडिय अजहन्नो ॥ ३४ ॥ निव्वत्तं तस्स रसं अजहन्नबंधो तओ भवे साइ एयट्ठाणा अ अप्पत्तयाणऽणाइ भवे बंधो ॥ ३५ ॥ धुवअधुवा पुव्वं व जहन्नुक्कोसेयर त्ति सेसतिगे । साई अधुवो तत्थ य अजहन्नभणणयसंगाओ ॥ ३६ ॥ जहन्नसरूवं भणियं सुहुमाइगुणेसु सो तहिं पढमं । वज्झमाणत्तणाओ साइ खीणाइसुं अधुवो ॥ ३७ ॥ उक्कोसं अणुभागं मिच्छो अइसंकिलिट्ठपज्जत्तो । संन्निपणिंदिय बंधइ एगं वा दुसमयं जाव ॥ ३८ ॥ पुण अणुक्कोसं बंधइ पुण उक्कोस्सं तहिं अधुवसाइ । दुन्निवि भवंति न भवइ अणाइबंधो तहाय धुवो ॥ ३९ ॥ धुवबंधिणीण जहन्नाइचउसु सायाइवन्नणा भणिया । अह अधुवबंधिणीण जहन्नाइसु तं भणिस्सामि ॥ ४० ॥

उक्कोसमणुक्कोसो जहन्नमजहन्नगोवि अणुभागो । साई अद्धुवबंधो पयडीणं होइ सेसाणं ॥ ६७ ॥

टी० शेषाणां प्राग्दर्शितानामध्रुवबन्धिनीनां त्रिसप्ततिप्रकृतीनामुत्कृष्टोऽनुभागबन्धः सादिरध्रुव एव च भवति । प्रकृतय एव ह्येता अध्रुवबन्धित्वात् साद्यध्रुवास्ततस्तत्सत्तानुविधायी जघन्यादिरूपस्तदनुभागोऽपि यथोक्त एव भवति, न त्वनादि- ध्रुवो वा इति गाथार्थः ॥ ६७ ॥ तदेवं साद्यादिप्ररूपणाऽवसिता । साम्प्रतं बन्धाधिकृतविंशत्युत्तरप्रकृतिशते याः प्रकृतयः शुभा याश्चाशुभास्तासां पृथक् २ उत्कृष्टजघन्यानुभागौ केन प्रत्ययेन केन हेतुना जन्येते इति प्रत्ययप्ररूपणामाह.

भा० सेसाणं अधुवबिहु-त्तीण उक्कोसगाइचउयेओ । साइअधुवो सुगमो अणाइधुवया असिद्धे व ॥ ४१ ॥ उक्कोसठिइ गाहा सुगमा वह सुभसुभाण पत्तेयं । उक्कोसजहन्नणुभागो य बज्झइ केहि हेऊहिं ॥ ४२ ॥

सुभपयडीण विसोहीएँ तिव्वमसुभाण संकिलेसेणं। विवरीए उ जहन्नो अणुभागो सव्वपयडीणं ॥ ६८॥

टी० अनन्तरमेव वक्ष्यमाणशुभप्रकृतीनां 'विसोहीएँ'त्ति विशुद्ध्या 'तिव्वो'त्ति तीव्रमुत्कृष्टमनुभागं बध्नातीति गम्यते एतदुक्तं भवति-शुभप्रकृतीनां सर्वासामपि यः कश्चिद्बन्धकः सर्वविशुद्धः स सर्वोत्कृष्टमनुभागं करोति, नान्यः । 'असुभाण संकिलेसेणं'ति अनन्तरमेव निर्देक्ष्यमाणाशुभप्रकृतीनां तु सङ्क्लेशेन तीव्रमनुभागं बध्नातीति सम्बध्यते, तद्बन्धकेषु यः कश्चित् सर्वसङ्क्लिष्टः स एवोत्कृष्टमनुभागमेतासां बध्नातीत्यर्थः 'विवरीए उ' इत्यादि उक्तवैपरीत्ये तु सर्वासां शुभाशुभप्रकृतीनां जघन्योऽनुभागो भवति शुभप्रकृतीनां बन्धकेषु यः कश्चित् सर्वसङ्क्लिष्टः स जघन्यमनुभागं बध्नात्यशुभप्रकृतीनां तु यः कश्चिद्बन्धकेषु सर्वविशुद्धो भवति, स जघन्यानुभागं बध्नातीति तात्पर्यमिति गाथार्थः ॥ ६८ ॥ कृता शुभाशुभभेदभिन्नानां प्रकृतीनां रसप्रत्ययप्ररूपणा, तत्र कियत्यः किंस्वरूपा वा ताः प्रत्येकं शुभाशुभप्रकृतय इति न ज्ञायते । अतस्तत्परिज्ञानार्थं प्रकृतीनां शुभाशुभप्ररूपणामाह-

भा० सुभपयडिगाइ सुगमा सुभाय असुभाय वा पुण इमाओ ।

बायाले पि पसत्था विसोहिगुणउक्कडस्स तिव्वाओ । बासीइमप्पसत्था मिच्छुक्कडसंकिलिट्ठस्स ॥ ६९ ॥

व्याख्या- सातवेदनीयं तिर्यग्मनुष्यदेवायूंषि मनुष्यद्विकं देवद्विकं पञ्चेन्द्रियजातिः पञ्चशरीराणि समचतुरस्रसंस्थानं 

वज्रर्षभनाराचसंहननं औदारिकाङ्गोपाङ्गानि प्रशस्तवर्णादिचतुष्कं अगुरुलघु पराघातं उच्छ्वासं आतपं उद्योतं प्रशस्तविहायोगतिस्त्र- सादिदशकं निर्माणं तीर्थकरं उच्चैर्गोत्रमिति । अपिशब्दस्यैवकारार्थत्वादेता एव द्विचत्वारिंशत्प्रकृतयः प्रशस्ताः–शुभा एताश्च विशोधिगुणेन य उत्कर्षः–प्रकृष्टस्तस्यैव तीव्रतररसा उत्कृष्टरसा भवन्ति, तदुक्तम्–" सायं तिरिमणुदेवाउयं च नरसुरदुगाइ दो चेव । पंचेंदियजाईवि य पंचसरीराइ चउरंसं ॥ १ ॥ संघयणादिसुभगतिअंगोवंगाइं अगुरुपराघातं । सुभवन्नाइचउक्कं ऊसासं आयवुज्जोयं ॥ २ ॥ तसबायरपज्जत्तं पत्तेयथिरं सुभं च सुभगं च । सुस्सरआइज्जजसं निमेण तित्थयरमुच्चं च ॥ ३ ॥ बायालीसं एया उ चेव जाणाहि पुण्णपगईओ । बंधंति बहुरसाओ विसोहिगुणउक्कडा जीवा ॥ ४ ॥" पञ्च ज्ञाना- वरणानि नव दर्शनावरणानि असातं मिथ्रसम्यक्त्वपुञ्जवर्जमोहपड्विंशतिर्नारकायुर्नरकद्विकं तिर्यग्द्विकं एकद्वित्रिचतुरिन्द्रिय- जातयः आद्यवर्जानि संस्थानसंहननानि अप्रशस्तवर्णादिचतुष्कं उपघातं अप्रशस्तविहायोगतिः स्थावरादिदशकं नीचैर्गोत्र- मन्तरायपञ्चकमित्येतास्तु द्व्यशीतिप्रकृतयोऽप्रशस्ता अशुभा विज्ञेयास्ताश्च मिथ्यादृष्टेरुत्कृष्टसंक्लेशस्य तीव्रा उत्कृष्टरसा भवन्तीति

१ सातं तिर्यङ्मनुष्यदेवायुष्कं च नरसुरद्विके द्वे चैव। पञ्चेन्द्रियजातिरपि च पञ्च शरीराणि चतुरस्रम् ॥ १ ॥ आदि- संहननं शुभ(ख)गतिरङ्गोपाङ्गान्यगुरुलघु पराघातम् । शुभवर्णादिचतुष्कमुच्छ्वासमातपमुद्योतम् ॥ २ ॥ त्रसबादरपर्याप्तं प्रत्येकं स्थिरं शुभं च सौभाग्यं च। सुस्वरादेययशः निर्माणं तीर्थकरमुच्चै(र्गोत्रं)च ॥ ३ ॥ द्विचत्वारिंशदेता तु चैव जानीहि पुण्यप्रकृतयः। बध्नन्ति बहुरसाः विशोधिगुणोत्कटात् जीवाः ॥ ४ ॥

सम्बध्यते । तदुक्तं "१पंच य नाणावरणा नव दंसणमोहपयडिछव्वीसं । अस्सायं निरयाउं निरयदुगं तिरिदुगं चेव ॥ १ ॥ इगिविगलिंदियजाई आइमवज्जा उ पंच संठाणा । संघयणा पंचेव उ असुभा वण्णाइया चउरो ॥ २ ॥ उवघायमप्पसत्था विहगगई थावरं च सुहुमं च । अपज्जत्तं साहारणं च अथिरं च असुभं च ॥ ३ ॥ दुभगं नामं तह दूसरं च णादिज्ज अजसकित्ती य । नीयागोयं च तहा पंचेव य अंतरायाणि ॥४॥ एयाओ सव्वाओ बासीई हुंति पावपयडीओ । बज्झंते तिव्वरसा मिच्छुक्कडसंकिलेसेणं ॥ ५ ॥" इति । अत्र च विशुद्धिसङ्क्लेशप्रत्ययजन्यत्वं पूर्वोक्तमपि प्रसङ्गत उक्तमित्यदोषः । आह ननु शुभा द्विचत्वारिंशदुक्ता अशुभास्तु द्व्यशीतिरिति मीलिताश्चतुर्विंशत्युत्तरं प्रकृतिशतं भवति, बन्धे तु विंशत्युत्तरप्रकृतिशतमेवाधिक्रियते, तत्कथं न विरोधः? नैवम्, अभिप्रायापरिज्ञानात्, इह हि वर्णादिचतुष्कमेकमपि सत्प्रशस्ताप्रशस्तभेदेनोभयत्रापि गृहीतमिति न दोष इति गाथार्थः ॥६९॥ तदेवं कृता शुभाशुभप्ररूपणा । तत्र च शुभप्रकृतयो विशुद्ध्या उत्कृष्टरसा बध्यन्ते, अशुभास्तु विशुद्ध्या इत्यनुभागबन्धस्वामित्वस्य सूचैव कृता । साम्प्रतं तु क्रमप्राप्तं तदेव न्यक्षेणोच्यते—

भा० पयडीओ अह बायालं पिय बासीय ता य इमा ॥ ४३ ॥ सा उच्चे पंचतणू अंगोवंगतयापवूमासे । नरतिरिदेवाऊ-

१ पञ्च च ज्ञानावरणानि नव दर्शन(आवरणानि) मोहप्रकृतयः षड्विंशतिः । असातं नरकायुर्नरकद्विकं तिर्यग्द्विकं चैव ॥ १ ॥ एकविकलेन्द्रियजातयः आदिमवर्जानि तु पञ्च संस्थानानि । संहननानि पञ्चैव त्वशुभानि वर्णादीनि चत्वारि ॥ २ ॥ उपघातमप्रशस्ता विहायोगतिः स्थावरं च सूक्ष्मं च । अपर्याप्तं साधारणं चास्थिरं चाशुभं च ॥ ३ ॥ दुर्भगं नाम तथा दुःस्वरं चानादेयमयशःकीर्तिश्च । नीचैर्गोत्रं च तथा पञ्चैव चान्तरायाणि ॥ ४ ॥ एताः सर्वाः द्व्यशीतिः भवन्ति पापप्रकृतयः । बध्यन्ते तीव्ररसाः मिथ्यादृष्टेरुत्कृष्टसङ्क्लेशेन ॥ ५ ॥

णि च उज्जोयपसत्थवन्नचऊ ॥ ४४ ॥ संघयणं संठाणं पढमं पंचिंदिजाइसत्थगई । तसदसगं निम्माणं गुरुलहु तित्थयरपरघायं ॥ ४५ ॥ देवदुगं मणुयदुगं वायालं चिय सुभाउ पयडीओ । सेसाओ असुभाओ बासीई हुंति नायव्वा ॥ ४६ ॥ चउदस आवरणे विग्घ पंच मोहे छवीस अस्सायं। नरयाउ नरयतिरिदुगइगबितिचउरिंदिजाईओ ॥ ४७ ॥ आइमरहिया पंच उ संघयणे आगिई उ पंचेव । अपसत्थवन्नचउगअपसत्थविहगगइ उवघायं ॥ ४८ ॥ थावरदसगं नीया गोयं एयाउ हुंति बासीई । पावपयडीउ एया वज्झंती संकिलेसेणं ॥ ४९ ॥ बायाला बासीई जोगे चउवीसअहियसयमेगं । होइ बंधे उ पओयणं तु वीसुत्तरसएणं ॥ ५० ॥ तो कइमेयं भन्नइ वन्नाइ चउक्कयं इहेगंपि । उभयत्थ वि संगहियं अपसत्थपसत्थभेएणं ॥ ५१ ॥ वज्झंतुक्कोसरसा सुभअसुभाओ विसोहिसंकेसा। इइ रसबंधस्सामित्तणस्स इह सूयणेव कया ॥५२॥ अणुभागबंधसामित्त-मिन्हिंकपपत्तयं भणीहामि ।

आयव नामुज्जोयं माणुसतिरियाउयं पसत्थासु । मिच्छस्स हुंति तिव्वा सम्मद्दिट्ठिस्स सेसाओ ॥ ७० ॥

टी० आतपनाम उद्योतनाम मनुष्यायुः तिर्यगायुरित्येताः प्रशस्तासु प्रकृतिषु मध्ये चतस्रः प्रकृतयस्तीव्रा उत्कृष्टरसा मिथ्यादृष्टेरेव भवन्ति, न सम्यग्दृष्टेस्तथा ह्यातपोद्योततिर्यगायुषां तावत्सम्यग्दृष्टेर्बन्ध एव नास्ति, एता हि तिर्यक्ष्वेवोत्पत्तुः प्राणी बध्नाति, न च सम्यग्दृष्टिस्तेषूत्पद्यन्त इति तद्बन्धस्याप्यभावः । मनुष्यायुरपि तिर्यग्मनुष्याः सम्यग्दृष्टयो न बध्नन्ति, तेषां तत्रोत्पत्त्यभावात् । देवनारकास्तु सम्यग्दृष्टयो मनुष्यायुर्बध्नन्ति, केवलं सङ्ख्येयवर्षायुष्कयोग्यं मध्यमरसं च। अत्र त्वसङ्ख्येयवर्षायुषां योग्यमुत्कृष्टरसं तत्प्रकृतं, तत्पुनरमी अपि न बध्नन्त्यसङ्ख्येयवर्षायुष्केष्वेतेषामुत्पत्त्यभावादतस्तेषामप्येतद्बन्धा-

सम्भवः। तस्मात्प्रशस्तप्रकृतिचतुष्टयस्योत्कृष्टानुभागं मिथ्यादृष्टिरेव तद्बन्धकेष्वतिविशुद्धो निर्वर्त्तयति। 'सम्मद्दिट्ठिस्स सेसाउ'-त्ति भणितशेषा अष्टात्रिंशत् पुण्यप्रकृतयस्तीव्रा उत्कृष्टरसा सम्यग्दृष्टेरेव भवन्तीति गाथार्थः ॥७०॥ तदेतन्मिथ्यादृष्टिसम्यग्दृष्टिलक्षणभेदमात्रेण शुभप्रकृतीनामेवोत्कृष्टानुभागबन्धस्वामित्वमुक्तम्। साम्प्रतं त्वेतासामेव शुभप्रकृतीनां विशेषितवरं तद् विभणिषुरशुभप्रकृतीनां त्वनुक्तपूर्वं तत्स्वामित्वं प्रतिपिपादयिषुराह–

भा० तहिं सुभपयडीमज्झा जं आयवमाइ चउगं तं ॥५३॥ मणुयाऊ रहियतिगं मिच्छो तिरियगइए य गंतु मणो। बंधइ नराउयं पुण तिरिनरसम्मा न बंधंति ॥ ५४ ॥ तेसिं तदुप्पत्ती अभावओ देवनारया सम्मा। मणुयाउं बंधंती संखेज्जाऊण जोगत्ति ॥ ५५ ॥ मज्झिमरसनेरयमसंखतिरियआऊण जोगजेट्ठरसं। पगयं तं पुण तदुप्पत्तीइ अभावओ एए ॥ ५६ ॥ नो बंधंती तम्हा पत्तुयकम्माण जेट्ठ अणुभागं। मिच्छो अइसुविसुद्धो निव्वत्तइ तह जिओ सम्मो ॥ ५७ ॥ सेसा अट्ठत्तीसं उक्किट्ठरसाओ पुन्नपगईओ। बंधइ अह तंपि रसं विसेसियरं भणिउ कामो ॥ ५८ ॥ असुभपयडीण अभणियपुव्वं तं भणिउ कामओ आह।

देवाउमप्पमत्तो तिव्वं खवगा करेंति बत्तीसं। बंधंति तिरियमणुया एक्कारसमिच्छभावेण ॥ ७१ ॥

टी० देवायुस्तीव्रमुत्कृष्टरसं अप्रमत्तयतिर्बध्नाति, अपरेभ्यो देवायुर्बन्धकमिथ्यादृष्ट्यविरतसम्यग्दृष्ट्यादिभ्योऽस्यानन्तगुणविशुद्धत्वात्। तथा सातदेवद्विकपञ्चेन्द्रियजातिवैक्रियद्विकाहारकद्विकतैजसकार्मणसमचतुरस्रप्रशस्तवर्णादिचतुष्कागुरुलघुपराघातोच्छ्वासप्रशस्तविहायोगतित्रसादिदशकनिर्माणतीर्थकरोच्चैर्गोत्रलक्षणानां द्वात्रिंशतः प्रकृतीनामुत्कृष्टानुभागं यथासम्भवं क्षपकाः

सूक्ष्मसम्परायापूर्वकरणलक्षणौ कुरुतः। अपूर्वकरणो मोहनीयमक्षपयन्नपि योग्यतया क्षपक उक्त इति द्रष्टव्यम्। तत्र सातयशः-कीर्त्युच्चैर्गोत्रलक्षणप्रकृतित्रयस्य क्षपकसूक्ष्मसम्परायश्चरमसमये वर्त्तमान उत्कृष्टानुभागं बध्नाति, स्वगुणस्थानशेषसमयेभ्योऽन्येभ्यश्च तद्बन्धकेभ्योऽस्यानन्तगुणविशुद्धत्वादिति। शेषाणां त्वेकोनत्रिंशतः प्रकृतीनां क्षपकापूर्वकरणो देवगतिप्रायोग्यबन्धव्यवच्छेदसमये वर्त्तमानस्तीव्रमनुभागं बध्नाति, तद्बन्धकेष्वस्यैवातिविशुद्धत्वादिति। 'बन्धंति तिरियमणुये'त्यादि नारकतिर्यग्मनुष्यायूंषि नरकद्विकं विकलत्रिकं सूक्ष्ममपर्याप्तकं साधारणमित्येतासामेकादशप्रकृतीनां ।मध्याभावेनोपलक्षिता मिथ्यादृष्टयस्तिर्यग्मनुष्या एवोत्कृष्टानुभागं बध्नन्ति, न देवनारका इत्यर्थः। तथाहि-तिर्यग्मनुष्यायुर्वर्जा नवप्रकृतीर्भवप्रत्ययेनैव देवनारका न बध्नन्ति। तिर्यग्मनुष्यायुषी अप्यत्र भोगभूमियोग्ये उत्कृष्टरसे प्रकृतेऽनस्तेऽप्यमी न बध्नन्ति, कुतस्तेषां तदनुभागबन्धसम्भवः। तस्मात्सञ्ज्ञिनो मिथ्यादृष्टयस्तिर्यग्मनुष्या एव तत्प्रायोग्यविशुद्धा एते आयुषी बध्नन्ति। नरकायुषस्तु तत्प्रायोग्यसंक्लिष्टा उत्कृष्टरसं बध्नन्त्यतिसङ्क्लिष्टस्यायुर्बन्धनिषेधात्। नरकद्विकं त्वेत एव सर्वसङ्क्लिष्टा बध्नन्त्येकं द्वौ वा समयौ यावदुत्कृष्टसङ्क्लेशस्यैतावन्मात्रकालत्वादेव। शेषाणां तु विकलत्रिकसूक्ष्मत्रिकलक्षणानां षट्प्रकृतीनामेत एव तत्प्रायोग्यसङ्क्लिष्टा उत्कृष्टानुभागं बध्नन्ति, सर्वसंक्लिष्टा ह्यमी प्रस्तुतप्रकृतिबन्धमुल्लङ्घ्य नरकप्रायोग्यं निवर्त्तयेयुरिति तत्प्रायोग्यसङ्क्लेशग्रहणमिति गाथार्थः ॥ ७१ ॥

**पंच सुरसम्मद्दिट्ठी सुरमिच्छो तिन्नि जयंइ पयडीओ। उज्जोयं तमतमगा सुरनेरइया भवे तिण्हं ॥७२॥**

टी० मनुष्यद्विकौदारिकद्विकवज्रर्षभनाराचलक्षणानां पञ्चानां प्रकृतीनां सम्यग्दृष्टिर्देवोऽत्यन्तविशुद्ध उत्कृष्टानुभाग-

मेकं द्वौ वा समयौ यावद्बध्नाति, मिथ्यादृष्टेः सम्यग्दृष्टिरनन्तगुणविशुद्ध इति सम्यग्दृष्टेर्ग्रहणम्। नारका अपि च विशुद्धाः सन्त एताः प्रकृतीर्बध्नन्ति, केवलं वेदनानिग्रहविह्वलीकृतत्वादमरवत्प्रकृष्टमानुनिबन्धनतीर्थंकरादिसमृद्धिसन्दर्शनतद्वचःश्रवणनन्दीश्वरादिचैत्यदर्शनाद्यसम्भवाच्च तथाविधविशुद्ध्यभावात् तेषामिहाग्रहणम्। तिर्यग्मनुष्याणां त्वतिविशुद्धानां देवगतिप्रायोग्यबन्धकत्वात्तद्योग्यप्रस्तुतप्रकृतिबन्धासम्भव इति सर्वव्युदासेन देवस्यैवोपादानम्। 'सुरमिच्छो' इत्यादि एकेन्द्रियजातिप्रायोग्यबन्धकत्वात्तद्योग्यप्रस्तुतप्रकृतिबन्धासम्भव इति ... स्थावरस्यातपस्याप्रलक्षणप्रकृतित्रयस्य सुरो मिथ्यादृष्टिरुत्कृष्टानुभागं बध्नाति। अत्र चाविशेषोक्तावपि सुर ईशानान्त एव द्रष्टव्यः, उपरितनानामेकेन्द्रियेषूत्पत्त्यभावात्, तद्योग्य प्रस्तुतप्रकृतित्रयबन्धासम्भवात्। अयमपि चैशानान्तो देव एकेन्द्रियजातिस्थावरयोरुत्कृष्टानुभागं सर्वसङ्क्लिष्टो बध्नात्यातपस्य तु तत्प्रायोग्यविशुद्ध इति द्रष्टव्यम्, इदं हि शुभप्रकृतित्वाद्विशुद्धो उत्कृष्टरसं जन्यते। सापि विशुद्धिर्यद्यधिकतरा भवेत्, तदा पञ्चेन्द्रियतिर्यक्प्रायोग्यं मनुष्यप्रायोग्यं वा बध्नीयात्, न चातपं तत्प्रायोग्यबन्धे बध्यते, एकेन्द्रियप्रायोग्यत्वादेवेत्यालोच्य तत्प्रायोग्यविशुद्धत्वविशेषणोपादानम्। आह, ननु भवत्वेवं, किन्तु मिथ्यादृष्टिर्देव एवैतासिस उत्कृष्टरसाः करोति, नान्य इत्यत्र किं निबन्धनम्? अत्रोच्यते, नारकाणां तावदेता एकेन्द्रियप्रायोग्यत्वात्तत्रोत्पत्त्यभावात् बन्ध एव नागच्छन्ति, तिर्यग्मनुष्यास्तु यावत्यां विशुद्धौ वर्त्तमाना आतपमुत्कृष्टरसं कुर्वन्ति, तावत्यां विशुद्धौ वर्त्तमानाः पञ्चेन्द्रियतिर्यगादिप्रायोग्यमन्यत्किञ्चिच्छुभतरं रचयेयुः। यावति च सङ्क्लेशे वर्त्तमानोऽसावेकेन्द्रियजातिस्थावरयोरुत्कृष्टानुभागं बध्नाति, तावति सङ्क्लेशे स्थिता अमी नरकगतिप्रायोग्यं निर्वर्त्तयेयुः। देवास्तूत्कृष्टसङ्क्लेशेऽपि भवप्रत्ययादेकेन्द्रियप्रायोग्यमेव बध्नन्ति, न तु नरकयोग्यमिति। तिर्यग्मनुष्याणामपि प्रस्तुतकर्मत्रयोत्कृष्टानुभागबन्धकत्वासम्भवः, सुरोऽपि

सम्यग्दृष्टिर्मनुष्ययोग्यं बध्नातीति मिथ्यादृष्टिग्रहणम् । तस्मादीशानान्तो मिथ्यादृष्टिर्देवो यदा आतपस्य सर्वेलघ्वीं स्थितिमुपकल्पयति, तदा तद्बन्धकेष्वतिविशुद्धोऽस्योत्कृष्टानुभागं करोति । यदा तूत्कृष्टसंक्लेशे वर्तमान एकेन्द्रियजातिस्थावरयोः सर्वोत्कृष्टां स्थितिं करोति तदाऽनयोरुत्कृष्टानुभागं रचयतीति स्थितम् । 'उज्जोयं तमतमग' त्ति तमस्तमाख्यः सप्तमनरकपृथ्वी तदाधारा नारकास्तमस्तमका उच्यन्ते। अमी उद्योतनामकर्म्मण उत्कृष्टानुभागं बध्नन्ति। तथाहि—कश्चित् सप्तमपृथ्वीनारको यथाप्रवृत्तादीनि त्रीणि करणानि कृत्वाऽनिवृत्तिकरणस्थितो मिथ्यात्वस्याऽन्तरकरणं करोति, तत्र च (तस्मिंश्च) कृते मिथ्यात्वस्य पूर्वदर्शितन्यायेन स्थितिद्वयं भवति । तत्र मिथ्यात्वाधःस्थितिवेदनस्य चरमसमये उद्योतस्योत्कृष्टानुभागं बध्नाति । इदं हि शुभप्रकृतित्वाद्विशुद्ध एवोत्कृष्टरसं करोति, तद्बन्धकेषु त्वयमेव सर्वविशुद्धोऽन्यस्थानवर्त्ती ह्येतावत्यां विशुद्धौ वर्त्तमानो मनुष्यप्रायोग्यं देवप्रायोग्यं वा बध्नीयादिदं तु तिर्यग्गतिप्रायोग्यबन्धसहचरितमेव बध्यते इति सप्तमपृथ्वीनारकस्यैवोपादानम्, तत्र हि यावत् किञ्चिदपि मिथ्यात्वमस्ति तावत्स्वेवानुभावत एव तिर्यक्प्रायोग्यमेव बध्यत इति भावः । 'सुरनेरइया भवे तिण्हं'ति तिर्यग्द्वयसेवार्त्तसंहननलक्षणप्रकृतित्रयस्य सुरा नारका वा अत्यन्तसङ्क्लिष्टा उत्कृष्टानुभागबन्धका भवन्ति । तिर्यग्मनुष्या ह्येतावति सङ्क्लेशे वर्त्तमाना नरकगतिप्रायोग्यमेव निवर्त्तयेयुः, न च तद्योग्या एताः प्रकृतयो बध्यन्त इति तद्व्युदासेन देवनारकाणां ग्रहणम् । ते हि सर्वसङ्क्लिष्टा अपि तिर्यग्गतिप्रायोग्यमेव बध्नन्तीति । इह च व्याख्यानतो विशेषप्रतिपत्तेः सेवार्त्तस्येशानादुपरि सनत्कुमाराद्यो देवा उत्कृष्टानुभागं बध्नन्तीति नत्वीशानान्तास्ते ह्यतिसंक्लिष्टा एकेन्द्रियप्रायोग्यमेव रचयेयुर्न च तद्योग्यमिदं बध्यत इति गाथार्थः ॥ ७२ ॥ तदेवं द्विचत्वारिंशत् शुभप्रकृतीनां चतुर्दशानां त्वशुभ-

प्रकृतीनामुत्कृष्टानुभागबन्धस्वामिन उक्ताः। साम्प्रतं शेषाणामष्टषष्ठ्यशुभप्रकृतीनां तान् विवक्षुराह—

भा० देवाउमप्पमत्तो तिव्वं खवगा उ इयाइ ॥ ५९ ॥ तससत्थो खवगापुव्वसुहुमया बंधयंति जहजोगं। उक्कोसरसाइ बत्तीस पगइओ ता य पुण एया ॥ ६० ॥ देवदुगाहारदुगं वेउव्विदुगं पसत्थवन्नचऊ। अगुरुलहू ऊसासं परघायपसत्थविहगगई ॥ ६१ ॥ तेयाकम्मनिम्माणं समचउरंसं च तित्थपंचिंदी। तसदसगं सायवत्तं पगई बत्तीस इय हुंति ॥६२॥ उवघायवज्ज तीसं अपुव्वछब्भायबंधवोच्छिन्ना। जा पयडी तम्मज्झे साउच्चजसेसु रित्तेसु ॥ ६३ ॥ जाया इमाओ बत्तीस तासि मज्झा जमुव साय रिणा। गुणतीसं अपुव्वो देवगईजोगबंधंते ॥ ६४ ॥ साउच्चजसतिगरस उ रसमुक्कोसं निवेइ सुहुमंते। अइ एक्कारस पण तिन्नि तिन्नि य भणेमि जहसंखं ॥ ६५ ॥ विगलतिगं सुहुमतिगं निरितिगतिरिमणुयआउ एक्कारा। मणुदुगओरालदुगं संघयणं पढम पंचेए ॥६६॥ एगिंदिय आयावं थावरमिइतिन्नि तिरिदुगं चेव। छेवट्ठतिन्नि सेसा अट्ठहिया होइ सट्ठी य ॥ ६७ ॥ देवाउमप्पमत्तो पमाईएण गाहजुयलेण। सुभपगईण विचत्ताए चउदसण्हं तु असुभाणं ॥ ६८ ॥ साय इमाविगलतिगं सुहुमतिगं निरयतिगं तिरिदुगं च छेवट्ठं। एगिंदियथावरगं सेसविचत्ता पुण सुभाओ ॥ ६९ ॥

सेसाणं चउगइया तिव्वणुभागं करेंति पयडीणं। मिच्छादिट्ठी नियमा तिव्वकसा उक्कडा जीवा ॥ ७२ ॥

टी० भणितशेषाणां ज्ञानावरणपञ्चकदर्शनावरणनवकासातमिथ्यात्वकषायषोडशनोकषायनवकाद्यवर्ज्यसंस्थानपञ्चकाद्यन्तवर्जसंहननचतुष्काप्रशस्तवर्णादिचतुष्कोपघाताप्रशस्तविहायोगत्यस्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्तिनीचैर्गोत्रान्तरायपञ्चकलक्षणानामष्टषष्ट्यशुभप्रकृतीनां चतुर्गतिका अपि नियमान्मिथ्यादृष्टयस्तीव्रकषायोत्कटा जीवास्तीव्रमुत्कृ-

ष्टानुभागं बध्नन्ति । तत्र हास्यरतिस्त्रीपुंवेदाद्यन्तवर्जसंहननसंस्थानलक्षणा द्वादशप्रकृतीर्वर्जयित्वा शेषाः षट्पञ्चाशत्प्रकृतीरुत्कृष्टरसाः सर्वोत्कृष्टसङ्क्लेशा अमी बध्नन्ति। निर्दशितद्वादशप्रकृतीस्तूत्कृष्टरसास्तत्प्रायोग्यसङ्क्लिष्टा बध्नन्तीति द्रष्टव्यम्। सर्वोत्कृष्टसङ्क्लेशो हि तावद्धास्यरतियुगलमतिक्रम्यारतिशोकयुगलमेव रचयति। स्त्रीपुंवेदौ त्वतिक्रम्य नपुंसकवेदं निवर्त्तयति। संस्थानसंहननेष्वपि सर्वसङ्क्लिष्टो विंशतिसागरोपमकोटाकोटीस्थितिके हुंडसेवार्त्ते निर्वर्त्तयति। ततो विशुद्धोऽष्टादशसागरोपमकोटाकोटीस्थितिके वामनकीलिके रचयति। ततो विशुद्धतरः षोडशसागरोपमकोटाकोटीस्थितिके कुब्जार्द्धनाराचे बध्नाति, ततोऽपि विशुद्धश्चतुर्दशसागरोपमकोटाकोटिस्थितिके सादिनाराचे निर्वर्त्तयति। ततो विशुद्धो द्वादशसागरोपमकोटाकोटिस्थितिके न्यग्रोधर्षभनाराचे बध्नाति। ततो विशुद्धो दशसागरोपमकोटाकोटिस्थितिके समचतुरस्रवज्रर्षभनाराचे बध्नाति। तस्मादाद्यन्तवर्जसंस्थानचतुष्टयस्य तथाद्यन्तवर्जसंहननचतुष्टयस्य चात्मीयात्मीयोत्कृष्टस्थितिबन्धकाले तत्प्रायोग्यसंक्लेशयुक्ता अमी उत्कृष्टानुभागं बध्नन्ति। हीनाधिकसङ्क्लेशे अन्यान्यबन्धसम्भवात्, तत्प्रायोग्यसङ्क्लेशग्रहणमिति भावः। आद्यन्तसंस्थानसंहननवर्जनं किमर्थमिति चेत्? उच्यते–हुण्डसंस्थानं तावत् अस्यामेव गाथायामुत्कृष्टसङ्क्लेशेषु गृहीतम्। समचतुरस्रसंस्थानं तु "[1]देवाउमप्पमत्तो" इत्याद्यनन्तरगाथायां भावितम्। वज्रर्षभनाराचसेवार्त्तसंहननद्वयं तु "[2]पञ्चसुरसम्मदिट्ठी"त्याद्यनन्तरगाथायामेव भावितमिति पारिशेष्यान्मध्यमसंस्थानचतुष्टयं मध्यमसंहननचतुष्टयं च तत्प्रायोग्यसङ्क्लेशे वर्त्तमानाश्चतुर्गतिका मिथ्यादृष्टयो जीवा उत्कृष्टरसं कुर्वन्तीत्युक्तमित्यलंविस्तरेणेति गाथार्थः ॥ ७३ ॥ उक्तमुत्कृष्टानुभागबन्धस्वामित्वम्,

१ गाथा ७१ । २ गाथा ७२ ।

इदानीं जघन्यानुभागबन्धस्वामित्वं विभणिषुराह–

भा०–मिलिए छप्पन्नाणं उक्कोसरसस्स सामिणो भणिया । तह सेसाणं सद्दा तेणं अडसट्ठि सा एवं ॥ ७० ॥ आवरणविग्घमोहे चोद्दस पणगं छवीसपयडीओ । अस्सायमाइअंतेहिं विरहियसंहणणचउगं ॥ ७१ ॥ आइमरहिया संठाणपंच वन्नाइ चउगमपसत्थं । उवघायसत्थविहगइ अथिरछग नीयमडसट्ठी ॥७२॥ बंधंति तिरियमणुयाइं पभियट्ठाइयाण गाहाण । भारणिया तत्थ य तिरिनराउ वज्जाओ नवपयडी ॥ ७३ ॥ गइपच्चयसुरनरया बंधंती नेव तह तिरिनराण । आऊणि भोगभूमीजोगुक्किट्ठे रसे पगए ॥ ७४ ॥ कह तेसि बंधभावो तम्हा तिरिमणुयसन्निणो एव । तं बंधं बंधंती तज्जोगियसंकिलेसेणं ॥ ७५ ॥ नरगाउं बंधंतो तज्जोगकिलिट्ठया तिरियमणुया । अइकिट्ठा नरगदुगं उक्कोसरसं पबंधंति ॥ ७६ ॥ एगं दो समया वा जेट्ठकिलेसो उ वन्निओ नेव । भणिओ तह विगलतिगं सुहुमतिग जेट्ठअणुभागं ॥७७॥ तज्जोगसंकिलिट्ठा सवकिलिट्ठा हि आसि पगईणं । बंधमइच्छिय निरिगइजोगं तं ते निरत्थंति ॥ ७८ ॥ पुव्वुत्ता पणपगई सुद्धो सम्मो सुरो उ जेट्ठरसं । बंधइ इगं दुसमयं नेरइया वि हु आइविसुद्धा ॥७९॥ एए पयडी बंधंति किंतु अइवेयणाभिभूयत्ता । जिणअहंसणओ वा तहविहसुद्धी अभावाओ ॥ ८० ॥ तेसिं इह अगहणं अइसुद्धा तिरिनरा सुरगईए । गच्छंति तओ एयाण पंचपयडीण किर तत्थ ॥८१॥ बंधो नो संभवइ य अगहणं तेण तिरिनराण इह । सुरमिच्छो तिन्नत्थं ईसाणंतो सुरो चेव ॥ ८२ ॥ दट्ठवो च उवरिमया नेव एगिंदिएसु गच्छंति । तो पगयं पगइतिगं बंधंती नेव तह एसो ॥ ८३ ॥ ईसाणंतो वि सुरो सव्वुक्किट्ठो इगिंदियावरयं । जेट्ठरसं बंधइ आयवस्स तज्जोगसुविसुद्धो ॥ ८४ ॥ अइसुद्धो पुण विरिमणुजोगं बंधइ न आयवं तत्थ । किंतेगिंदिसु एत्तो

तिरिमणुया पुण एत्तिएँ सुद्धीए
भणियं तज्जोगसुविसुद्धो ॥८५॥ तह नारया इगिंदिसु नो गच्छंतिय तओ न तग्गहणं। तिरिमणुया पुण एत्तिएँ सुद्धीए
सुभयरं वंधं ॥ ८६ ॥ निवत्तत्ति तहेगिंदिथावराणं चउपरिणामे च। संकेसे उक्कोसं करंति तावइ किलेस चिय ॥८७॥ एए
नरगइजोगं वंधंती तह सुरा उ जह भणिया। उक्कोसकिलेसा वि हु भवपच्चयओ इगिंदीणं ॥८८॥ पाओगं वंधंतीय नरगगइ-
जोगयं न वंधंति। तिरियनराण वि पत्थुयकम्माण पगिट्ठरसवंधो ॥ ८९ ॥ न घडइ सुरो वि सम्मो नरपाओगं च वंधए
तेणं। मिच्छद्दिट्ठीगहणं तम्हेसाणंतओ देवो ॥ ९० ॥ अइसुद्धो उक्कोसं रसं निवत्तेइ आयवस्सेह। उक्कोससंकिलेसे एगिंदिय-
थावराणं च ॥ ९१ ॥ सव्वुक्किट्ठं ठिइं करेई उक्किट्ठरसगयं तह य। तमतमगो उज्जोयं सम्मुप्पत्तीइ कालम्मि ॥ ९२ ॥ मिच्छ-
त्तवेयणंतो उक्कोसरसं विहेइ सुविसुद्धो। अन्नो हि एत्तियाए सोहीए वट्टमाणो उ ॥ ९३ ॥ मणुदेवगइजोगं वंधइ एयं तु,
तिरिगईजोगं। वज्झई तो सत्तम-पुढविनारगस्सेव इह गहणं ॥ ९४ ॥ जा किंचि तत्थ मिच्छं समत्थिता खेत्तभावओ
चेव। तिरिगइपाओगं चिय वज्झइ सुरनारया तिन्हं ॥९५॥ पुव्वुत्ताण किलिट्ठा उक्किट्ठरसस्स वंधगा भणिया। तिरिमणुया
एयम्मी संकिलेसम्मि वट्टंता ॥ ९६ ॥ नरगगईजोगं चिय निवत्तंती य नेव तज्जोगा। एयपयडी उ वज्झंति तन्निरासेण इह
गहणं ॥९७॥ देवाण नारगाणं ते च किलिट्ठा वि तिरियगइजोगं। वंधंति तहा एत्थ वि एस विसेसो इमो नेउ ॥९८॥ छेवट्ठ-
एमेसाणगउवरिमदेवा उ उक्कसणुभागं। वंधंति न हेट्ठिमया ते हि अइसंकिलिट्ठा उ ॥९९॥ एगिंदियजोगं चिय कम्मं विरयंति
नेव तज्जोगं। एयं वज्झइ अह अट्ठसट्ठिपगईओ भावेमि ॥१००॥ तत्थ य हासरईथीपुंमाईअंतवज्जसंठाणा। संहणणाइय वारस
वज्जिय सेसा उ छण्णा ॥ १ ॥ पयई उक्किट्ठरसा सव्वुक्किट्ठंमि संकिलेसम्मि। वट्टंता चउगइया वंधंति भाणियपगईओ ॥२॥

वारस उक्किट्ठरसं वज्जोगिपगिट्ठया निबंधंति । सव्वुक्किट्ठकिलेसो एयाओ अइच्छिय पराओ ॥ ३ ॥ अन्नाओ बज्झंती किंची तब्भावणा उ विसोओ । नेया आइमअंसिमसंगयणागीण भावणिया ॥ ४ ॥ एत्थेव सुए भणिया एयाणं तप्पओगसंकेसो । बहुंगा चउगइया उक्कोसरसं पकुव्वंति ॥ ५ ॥ भणियमुक्कोसमणुभाग-बंधसामित्तमिन्हि जहन्नस्स । अणुभागस्स वि बंधसामित्तं भणिउ कामाह ॥ ६ ॥

चोद्दससरागचरिमे पंचमनियट्टिनिपट्टिएक्कारं । सोलसमंदुणुभागा संजमगुणपत्थिओ जयइ ॥ ७४ ॥

टी० ज्ञानावरणपञ्चकदर्शनावरणचतुष्कान्तरायपञ्चकलक्षणानां चतुर्दशप्रकृतीनां क्षपकसूक्ष्मसम्परायश्चरमसमये वर्तमानो जघन्यानुभागं बध्नाति । एता ह्यशुभप्रकृतयोऽशुभप्रकृतीनां च सर्वविशुद्ध एव जघन्यानुभागं बध्नाति, प्रस्तुतप्रकृतिबन्धकेषु त्वयमेव सर्वविशुद्ध इति भावः । अयं च हेतुरुत्तरत्रापि वाच्यः । पुरुषवेदसञ्ज्वलनचतुष्टयलक्षणप्रकृतिपञ्चकस्यैकस्मिन्नात्मीयबन्धव्यवच्छेदसमये क्षपकानिवृत्तिबादरो जघन्यानुभागं बध्नाति । निवृत्तिक्षपकापूर्वकरणो निद्राप्रचला-ऽप्रशस्तवर्णादिचतुष्कोपघातहास्यरतिभयजुगुप्सालक्षणानामेकादशप्रकृतीनामेकैकस्मिन्नात्मीयात्मीयबन्धव्यवच्छेदसमये जघन्यानुभागं बध्नाति, हेतुः स एव । स्त्यानर्द्धित्रिकमिथ्यात्वसञ्ज्वलनवर्जकषायद्वादशकलक्षणाः षोडशप्रकृतीर्मन्दानुभागा जघन्यरसा अनेकार्थत्वाद्यतते करोति क इत्याह–'संजमगुणपत्थिओ'त्ति संयमगुणं प्रस्थितोऽभिमुखीभूतः संयमगुणप्रस्थितः । स चेह मिथ्यादृष्टिरविरतो देशविरतश्च गृह्यते । तत्र स्त्यानर्द्धित्रिकमिथ्यात्वानन्तानुबन्धिचतुष्टयलक्षणानामष्टानां प्रकृतीनां चरमसमये मिथ्यादृष्टिरनन्तरसमये सम्यक्त्वं संयमं च युगपत् प्रतिपित्सुर्जघन्यानुभागं बध्नाति, हेतुः स एव । अप्रत्याख्यानावरणचतुष्टयस्य

देशविरतः पृथक् २ स्वगुणस्थानचरमसमये वर्तमानोऽनन्तरमेव संयमं
त्वविरतसम्यग्दृष्टिः, प्रत्याख्यानावरणचतुष्टयस्य तु देशविरतः पृथक् सर्वत्र नाच्य इति गाथार्थः ॥ ७४ ॥
प्रतिपित्सुजघन्यानुभागं बध्नाति, तद्बन्धेऽप्यतिविशुद्धत्वलक्षणो हेतुः सर्वत्र वाच्य इति गाथार्थः ॥ ७४ ॥
'चोद्दस सुहुमसरागे ( चोद्दससरागचरिमे ) ई पभिइगाहपंचगे जे जे । जप्पयडिबंधगा हुंति ताओ पयडिओ पिंडियया
॥७॥ जाता पिंडियओच्छंतो चउदस पण इगार सोलसगं । दुदुसोलतिदुदुपनरसदुअट्ठनेवीसई ठाणा ॥ ८ ॥ संपइ एयाओ
चिय अट्ठन्नणुभागाउ पयडिओ अहयं । दंसियकमेण विवरेमि ता इमाओ पुणो एवं ॥ ९ ॥ नाणंतरायदसगं दंसण चउ
हुंति चउदसो एवं । पुं संजलणा पंच उ अपसत्थयवन्नया चउरो ॥१०॥ निद्दा पयलुवघाया हासचउक्कं च हुंति एक्कारा ।
बारसकसाय मिच्छं थीणतिगं सोलसा एए ॥ ११ ॥ अपमत्तपमत्तगुणे दुगं दुगं हवइ तत्थ किर कमसो । नेयमाहारजुयलं
अरइसोगो य ई जुयलं ॥ १२ ॥ विगलतिगं ःइंदियछक्क सुहुमतिगआउगचउक्कं सोलसुरलदुउज्जोवं तिन्नी नीति-
रिदुगं तिन्नि ॥ १३ ॥ "पंचिंदियजाइतेयगकम्मं गुरुलहुपसत्थवन्नाई-चउगं परघूसासं तसाइचउगं सनिम्माणं ॥ १४ ॥
पन्नरसे ए भणिया । इत्थीय नपुसगं च दो एए । सायासायं थिरसुभजसजुयला हुंति अट्ठेव ॥ १५ ॥ मणुदुगविह-
गदुगचं सुभगसुसरअएज्जजुयलाई । संघयणा संठाणा सव्वेवि य एस तेवीसा ॥ १६ ॥ अंते मंदणुभागं विहेइ एया हि
असुभपयडीओ । एयासिं-अइविसुद्धो मंदणुभाग किल विहेइ ॥ १७ ॥ पत्थुयपयडीबंधे एसेव विसुद्धओ इमो होऊ ।
पत्थुत्तरे वि नेओ पण एक्कारा उ सुगमाओ ॥ १८ ॥ सोलसमंदणुभाग संजमगुणपत्थिओ जयइ सुत्ते । अत्थि पयं तस्सत्थो
पवन्नं संगहिउकामो ॥ १९ ॥ मिच्छो वा विरओ वा विरयाविरओ व पकरई तत्थ । मिच्छअणबंधिथीणतिगितिच अट्ठण्ह

पयडीणं ॥ २० ॥ सुविसुद्धमिच्छदिट्ठीणंतरसमयंमि संजमं सम्मं । जुगवंपि गहिउकामो मंदणुभागाओ पकरेइ ॥ २१ ॥ हेऊ स एव अविरयदिट्ठी वीयियकसायचउगस्स । तइयकसायचउगस्स देसजई अंतमो बंधं ॥ २२ ॥ मंदणुभागा पकरइ

आहारमप्पमत्तो पमत्तसुद्धो उ अरइसोगाणं । सोलस माणुसतिरिया सुरनारगतमतमा तिन्नि ॥ ७९ ॥

टी० आहारकद्विकमप्रमत्तसंयतोऽनन्तरमेव प्रमत्तभावं भविष्यत्सुर्जघन्यरसं करोतीति । इदं हि प्रकृतिद्वयं शुभरूपत्वात् सङ्क्लिष्ट एव जघन्यरसं करोति, तदन्यस्तेषु स्वयमेवातिसङ्क्लिष्ट इति भावः । अरतिशोकयोः शुद्धोऽप्रमत्तभावाभिमुखः प्रमत्तयतिर्जघन्यानुभागं करोति, इदं हि प्रकृतिद्वयमशुभत्वात् सर्वविशुद्ध एव जघन्यरसं करोति, तदन्यस्तेषु स्वयमेव सर्वविशुद्ध इति भावः । आयुश्चतुष्टयनरकद्विकदेवद्विकवैक्रियद्विकविकलत्रिकसूक्ष्मापर्याप्तकसाधारणलक्षणाः षोडशप्रकृतीर्मनुष्यास्तिर्यञ्चश्च जघन्यरसाः कुर्वन्ति । अत्र हि तिर्यग्मनुष्यायुर्द्वयं वर्जयित्वा शेषाश्चतुर्दशप्रकृतीर्देवनारका भवप्रत्ययादेव न बध्नन्ति । तिर्यग्मनुष्यायुर्द्वयमपि यदा जघन्यस्थितिकं बध्यते तदा जघन्यरसं क्रियते, देवनारकास्तु तज्जघन्यं न बध्नन्त्येवत्स्थितिकेषु तेषामुत्पत्त्यभावात् । तस्मादेतत्प्रकृतिषोडशकं देवनारका बध्नन्त्यतस्तिर्यग्मनुष्याणामेव ग्रहणम् । तत्र नारकायुषोऽशुभप्रकृतित्वात् तदन्यस्तेषु सर्वविशुद्धा दशवर्षसहस्रलक्षणजघन्यस्थितिबन्धकाले जघन्यानुभागं तिर्यग्मनुष्याः कुर्वन्ति । शेषस्यायुस्त्रयस्य शुभप्रकृतित्वात् तदन्यस्तेषु सर्वसङ्क्लिष्टा आत्मीयात्मीयसर्वजघन्यस्थितिबन्धकाले अमी जघन्यानुभागं रचयन्ति । नरकद्विकस्याशुभप्रकृतित्वाज्जघन्यस्थितिबन्धकाले तदन्यस्तेषु सर्वविशुद्धा एते जघन्यानुभागं विदधति । देवद्विकस्य शुभप्रकृतित्वात्तत्प्रायोत्कृष्टस्थितिबन्धकाले तत्प्रायोग्यसङ्क्लिष्टा अमी जघन्यानुभागं बध्नन्ति, अतिसङ्क्लिष्टो नरकादियोग्यं बध्नी-

यादिति तत्प्रायोग्यसङ्क्लेशग्रहणमेवमन्यत्रापि द्रष्टव्यम् । वैक्रियद्विकस्यापि शुभप्रकृतित्वान्नरकगतिबन्धसहितां सर्वोत्कृष्टां स्थितिं बध्नन्तो जघन्यानुभागं निर्वर्त्तयन्ति । विकलत्रिकसूक्ष्मत्रिकयोस्त्वशुभप्रकृतित्वात्तत्प्रायोग्यविशुद्धा अमी सर्वजघन्यानुभागं बध्नन्त्यतिविशुद्धा मनुष्यादिप्रायोग्यं बध्नन्तीति तत्प्रायोग्यविशुद्धिग्रहणमिति भाविताः षोडशापि प्रकृतयः । 'सुरनारगतमतमा तिन्नि' त्ति तिस्रः सुरनारकास्तिसश्च तमस्तमका जघन्यरसाः कुर्वन्तीति प्रत्येकं सम्बन्धस्तत्रेदमुक्तं भवति औदारिकद्विकोद्योतलक्षणास्तिस्रः प्रकृतीः सामान्यतः सुरा नारकाश्च सर्वोत्कृष्टसङ्क्लेशे वर्त्तमानास्तिर्यक्प्रायोग्यं बध्नतः सर्वजघन्यरसाः कुर्वन्तीति केवलमौदारिकाङ्गोपाङ्गमीशानादुपरितनाः सनत्कुमारादय एव देवा जघन्यरसं कुर्वन्ति, नेशानान्तास्ते हि सर्वोत्कृष्टसङ्क्लेशे वर्त्तमाना एकेन्द्रियप्रायोग्यमेव बध्नन्ति । एकेन्द्रियाणां चाङ्गोपाङ्गं न भवत्यत ईशानान्तदेवानां जघन्यरसाङ्गोपाङ्गनामबन्धासम्भवेन तज्जघन्यरसबन्धकत्वासम्भवः । भवत्वेवं किन्तु तिर्यग्मनुष्याः कस्मादिदं प्रकृतित्रयं जघन्यरसं न कुर्वन्त्यत्रोच्यते, एतत्प्रकृतित्रयं तिर्यग्गतिप्रायोग्यबन्धसहचरितं जघन्यरसं बध्यते, तिर्यग्मनुष्यास्त्वेतावति सङ्क्लेशे वर्त्तमाना नरकगतिप्रायोग्यमेव रचयेयुरिति तेषामिहाग्रहणम् । तिर्यग्द्विकनीचैर्गोत्रलक्षणास्तिस्रः प्रकृतीर्जघन्यरसास्तमस्तमकाऽधःसप्तमपृथ्वीनारकाः कुर्वन्ति । तथाहि कश्चित् सप्तमपृथ्वीनारकः सम्यक्त्वाभिमुखो यथाप्रवृत्तादीनि त्रीणि करणानि कृत्वाऽनिवृत्तिकरणस्य चरमसमये मिथ्यात्वस्य चरमपुद्गलान्वेदयन्प्रकृतकर्मत्रयस्य जघन्यानुभागं बध्नाति । अस्य हि प्रकृतित्रयस्याशुभत्वात् सर्वविशुद्धो जघन्यानुभागं करोति, तद्बन्धकेषु त्वयमेव सर्वविशुद्ध इति सम्यक्त्वाभिमुखादिविशेषणोपादानम् । अन्यस्थानवर्त्ती ह्येतावत्यां विशुद्धौ वर्त्तमान उच्चैर्गोत्रं मनुष्यद्विकादियुक्तं बध्नीयादिति

सप्तमपृथ्वीनारकस्यैव ग्रहणम् । अस्यां हि यावत्किञ्चिदपि मिथ्यात्वमस्ति तावद्भवप्रत्ययादेव नीचैर्गोत्रसहचरितस्तिर्यग्गतिप्रायोग्य एव बन्धो भवतीति भाव इति गाथार्थः ॥ ७५ ॥

भा० अपमत्तजई ओ परिवडिउकामो । सिग्धं पमत्तभावं गिण्हिउकामो किर निहेइ ॥ २३ ॥ मंदरसं आहारग-जुयलं पयडीजुगं च एयं तु । सुंदरसुवचाओ पाणी सपिट्ठगो चेव ॥ २४ ॥ मंदणुभाग पकरइ तब्बंधकरेसु एस अइकिट्ठो । अरईसोग० अपमत्त-भावसमुहो पमत्तजई ॥ २५ ॥ सोलसपुव्वुत्ताओ माणुसतिरिया जयंति मंदरसा । एत्थ तिरिनराउ-दुगं वज्जिपसेसाओ चउदसओ ॥ २६ ॥ भववसओ न निरसुरा वंधंती तिरिनराउयदुगंपि । जइया जहन्नठिइयं पगरइ तइया जहन्नरसं ॥ २७ ॥ खिज्जइ सुरनेरइया बंधंति न तं जहन्नअणुभागं । तट्ठिइएसुं तेसिं उप्पत्ति अभावओ तम्हा ॥ २८ ॥ वंधंति न निरयसुरा सोलस निरयाउयस्स असुभत्ता । सुविसुद्धा तिरियनरा मंदरसत्तं जहन्नंमि ॥ २९ ॥ ठीईए बंधकाले बंधंती सेसआउयतिगस्स । सुभपयडित्ता किट्ठा तिरियनरा बंधयंति रसं ॥ ३० ॥ मंदं नरगदुगस्स उ सुविसुद्धा मंदठिइ बंधस्स । समयंमि असुभभत्ता मंदरसत्तं निवत्तंति ॥ ३१ ॥ देवदुगस्स सुभत्ता उक्किट्ठठिइएव बंधकालम्मि । तप्पाओगकिलिट्ठा मंदणुभागं निवत्तंति ॥ ३२ ॥ अइसंकिट्ठो नरगाइजोगयं बंधई य तेणं तु । तज्जोगकेसगहणं एवं अन्नत्थवि य नेय ॥ ३३ ॥ विउविदुगस्स सुभत्ता नरगइयघेण सहिय उक्कोसं । ठीवंधंतो मंदं रसं निवत्तेइ विगलतिगं ॥३४॥ सुहुमतिगेऽपिऽसुभत्ता बंधंती तप्पओगसुविसुद्धा । भणिया सोलस पयडी सुरनारगतमतमा तिन्नि ॥३५॥ इय सुत्तसय अमत्थो निन्नी सुरनारगा तहा तिन्नि । तमतमगा संबंधो इय पत्तेय हवइ कप्पो ॥ ३६ ॥ नत्थ य सुरनेरइया उरलदुगुज्जो य तिन्नि

पगईओ । उक्किट्ठसंकिलेसे वट्टंता तिरियगइजोगे ॥३७॥ बंधंतो मंदरसा हुंदंती किं तु सणंकुमाराई । उरलं अंगोवंगं बंधि चि हुरा न हिट्ठिमगा ॥ ३८ ॥ ते उक्किट्ठकिलेसे वट्टंता एगअक्खजियजोग । बंधंति इगिंदीणं अंगोवंगं न संभवइ ॥ ३९ ॥ तो अंगुरंगअसंभवाओ मंदे रसंमि तव्विसए । बंधो न घडइ नियमं ईसाणंताण देवाणं ॥ ४० ॥ तह एयं पयडितिगं तिरिगइ-दाओगबंधसहचरियं । मंदरसं बज्झइ तिरिनरा उ एवप्पमाणंमि ॥ ४१ ॥ वट्टंता उ किलेसे निरयगइजोगमेव बंधंति । तो एत्थ तिरिनराणं अगहणं तह य तमतमगा ॥४२॥ हुंदंती मंदरसा तिरिदुगनीगोत्ततिन्नि पयडीओ । जइ फिर कोई सत्तम-पुढवीए नारगो सुद्धो ॥ ४३ ॥ मिच्छत्तचरिमपुग्गलवेयणसमयंमि अभिमुहो सम्मे । पत्थुयपयडीण तिग विहेइ मंदाणुभा-गंति ॥ ४४ ॥ एयं फिर पयडितिगं असुभत्ता करेइ मंदअणुभागं । सव्वविसुद्धो तम्हा सम्माभिमुहो तिई भणियं ॥ ४५ ॥ अन्नो एय विसुद्धीइ वट्टमाणो उ मणुयदुगउच्चं । बंधइ एत्तो गहणं तमतमगयनारगस्सेह ॥ ४६ ॥ सो पुण जा मिच्छजुओ नीगोएणं सहेव तिरियगई । जोगं बंधइ भवपच्चया ओ एसोत्थ परमत्थो ॥ ४७ ॥

एगिंदियथावरयं मंदणुभागं करेंति ति गईया । परियत्तमाणमज्झिम-परिणामा नेरइयवज्जा ॥ ७६ ॥

टी० नारकान् वर्जयित्वा शेषगतित्रयवर्त्तिनो जीवाः परावर्त्तमानमध्यमपरिणामा एकेन्द्रियजातिस्थावरयोर्जघन्यानुभागं बध्नन्ति । इदं हि प्रकृतिद्वयमशुभं तत्रापि सङ्क्लिष्टो जन्तुरनयोरुत्कृष्टानुभागं बध्नात्यतिविशुद्धस्त्विदमुल्लङ्घ्योत्कृष्टानुभागे पञ्चेन्द्रियजातित्रसनाम्नी बध्नातीति आलोच्य मध्यमपरिणामग्रहणम्, अयं च मध्यमपरिणामो यदैकस्मिन्नन्तर्मुहूर्त्ते एकेन्द्रियजातिस्थावरनाम्नी बद्ध्वा पुनर्द्वितीयेऽपि अन्तर्मुहूर्त्ते ते एव बध्नाति तदापि भवति, केवलं तदा अवस्थितपरि-

णामे तथाविधा विशुद्धिर्न लभ्यते इति मध्यमपरिणामस्यापि परावर्त्तमानताविशेषणं, इदमुक्तं भवति । यदैकेन्द्रियजातिस्थावरे बद्धा पञ्चेन्द्रियजातित्रसनाम्नी बध्नाति, ते अपि बद्धा पुनरेकेन्द्रियजातिस्थावरे बध्नाति, तदेवं परावृत्य परावृत्य बध्नन् परावर्त्तमानमध्यमपरिणामस्तत्प्रायोग्यविशुद्धः प्रस्तुतप्रकृतिद्वयस्य जघन्यानुभागं बध्नातीति । भवत्वेवं तथापि नारकवर्जनं किमर्थमिति चेत् ? उच्यते, नारकाणां स्वभावादेव प्रस्तुतप्रकृतिद्वयबन्धस्यासम्भवादित्यलं विस्तरेणेति गाथार्थः ॥ ७६ ॥

भा० एगिंदियथावरगं ईसाणाए उ मज्झपरिणामा। जं भणियं तत्थ इमो भावत्थो पयडिदुगमेयं ॥४८॥ असुभं अइकिलिट्ठो एयणुभागं निहेइ उक्किट्ठं। असुद्दो उ पणिंदिय तसं च एयं पयडिजुयलं ॥४९॥ उक्कोसं अणुभागं निहेइ इं मज्झिमस्स इह गहणं। परियत्तमाणया पुण विभावियव्वा इहं एवं ॥५०॥ जइया इगिंदियावर-जुयलं बंधित्तु पुणवि बंधेइ । पंचिंदियजाइतसं पुणो वि एगिंदियावरगं ॥५१॥ बंधइ तया उ परियत्त-माणया इइ य सो उ तज्जोगे। सुविसुद्धो पयडिदुगं मंदणुभागं निहेइ त्ति ॥५२॥

आसोहम्मायावं अविरयसम्मो य जयइ तित्थयरं। नरगाइ उज्जोय मिच्छो पत्ररसदुवे विसोहीए ॥७७॥

टी० इह सौधर्मग्रहणेन समश्रेणिव्यवस्थितत्वादीशानोऽपि गृह्यते । ततश्च भवनपत्यादय ईशानपर्यन्ता देवास्तद्बन्धकेषु सर्वसङ्क्लिष्टा एकेन्द्रियप्रायोग्यं बध्नन्त आतपनाम जघन्यानुभागयुक्तं बध्नन्ति, अस्य हि शुभप्रकृतित्वात् सर्वसङ्क्लिष्ट एव जघन्यानुभागं बध्नाति, तद्बन्धकेषु चैत एव सर्वसङ्क्लिष्टा लभ्यन्ते । तिर्यग्मनुष्या ह्येतावति सङ्क्लेशे वर्त्तमाना नरकादिप्रायोग्यं स्वरेपुर्नारकाः सनत्कुमारादिदेवाश्च भवनपत्यादैर्नैतद् बध्नन्तीति शेषपरिहारेण यथोक्तदेवानामेव ग्रहणम् । 'अविरयसम्मो य जयइ तित्थयरं' ति चकारोऽनुक्तविशेषसमुच्चयस्ततश्चाविरतसम्यग्दृष्टिर्मनुष्यो बद्धायुष्को नरकोत्पत्त्यभिमुखोऽन्त-

रमेव मिथ्यात्वं प्रतिपित्सुर्मनुष्यस्तीर्थकरनाम्नो जघन्यानुभागं बध्नाति, तद्बन्धकेष्वयमेव सर्वसङ्क्लिष्ट इति कृत्वा। विशेषणबहुत्वस्य तु साफल्यं यथोत्कृष्टस्थितिबन्धाधिकारे 'देवाउयं पमत्तो' इत्यादिगाथाविवरणेऽस्यैव कर्मणो विचारे भावितं तथात्रापि भावनीयम्। 'चउगइउक्कडमिच्छा पन्नरस' त्ति पञ्चेन्द्रियजातितैजसकार्मणप्रशस्तवर्णादिचतुष्कागुरुलघुपराघातोच्छ्वासत्रसबादरपर्याप्तप्रत्येकनिर्माणमित्येतासां पञ्चदशप्रकृतीनां चतुर्गतिका अपि जीवा मिथ्यादृष्टयः सर्वोत्कटसङ्क्लेशा जघन्यानुभागं कुर्वन्ति। एता हि शुभप्रकृतित्वात् सर्वोत्कृष्टसङ्क्लेशैर्जघन्यरसाः क्रियन्ते, तत्र तिर्यङ्मनुष्याः सर्वोत्कृष्टसङ्क्लेशे वर्तमाना नरकगतिसहचरिता एता बध्नन्तो जघन्यरसाः कुर्वन्ति। नारका देवाश्चेशानादुपरि वर्तमानाः सनत्कुमारादयः सर्वसङ्क्लिष्टाः पञ्चेन्द्रियतिर्यक्प्रायोग्या एता बध्नन्तो जघन्यरसाः कुर्वन्ति। ईशानान्तास्तु देवाः सर्वसङ्क्लिष्टाः पञ्चेन्द्रियजातित्रसवर्जाः शेषास्त्रयोदशप्रकृतीरेकेन्द्रियप्रायोग्यं बध्नन्तो जघन्यरसाः कुर्वन्तीति। पञ्चेन्द्रियजातित्रसनाम्नी तु विशुद्धा अमी बध्नन्तीति जघन्यरसो न लभ्यते इति तद्वर्जनं 'दुवे विसोहीए' त्ति स्त्रीनपुंसकवेदलक्षणे द्वे प्रकृती चतुर्गतिका अपि मिथ्यादृष्टयो जीवा 'विसोहीए' त्ति अशुभत्वादनयोस्तत्प्रायोग्यविशुद्ध्या जघन्यरसे कुर्वन्ति, अतिविशुद्धः पुरुषवेदबन्धकः स्यादिति तत्प्रायोग्यविशुद्धिग्रहणमिति गाथार्थः ॥ ७७ ॥

भा० आसोहम्मपभणणा ईसाणंता उ भवणपभिईओ। तब्बंधगेसु किट्ठा एगिंदियजोगमायावं ॥५३॥ सुभपयडणसंकिट्ठो मंदणुभागं निहेइ इयमाणा। संकेसे तिरियनरा बंधहि नरगाइजोगंति ॥ ५४ ॥ भवपच्चयं न बंधंति नारया नेव सणंकुमाराई।

१ गाथा ७२।

अविरयसम्मो नरगे वद्धाऊ तत्थुपत्तीए ॥५५॥ सम्मुहो मिच्छं पडिवज्जिउकामो माणुसो उ मंदरस। पकरइ तित्थगराणं गोत्तं तब्बंधणसेसो ॥ ५६ ॥ अइकिट्ठोई किचा एत्थ वहुविसेसणाणसाफल्लं। देवाउयं पमत्तो ईगाहाविवरणे जेट्ठे ॥ ५७ ॥ टीबंधाहिगारे विभावियं तेण एत्थ भावणिया। नो भणिया संपइ पुण पन्नरस दु अट्ठ तेवीसं ॥ ५८ ॥ पन्नरसाईयाणं कमेण अह भावणा तहिं एया। पन्नरसविय सुभत्ता सव्वुक्किट्ठसंकिलेसेहिं ॥ ५९ ॥ मंदरसा किज्जंति तहि तिरियमणुया उ सवकिट्ठाउ। नरगगईसहचरिया एयाओ बंधयंताओ ॥ ६० ॥ मंदरसा कुवंति निरयतइयचुराठयाइया देवा। सवकिट्ठा पंचक्खतिरियजोगा उ बंधंति ॥ ६१ ॥ एया मंदरसाओ करंति ईसाणअंतया किट्ठा। पंचिंदितसविहीणा एया तेरसत्ति पयडीओ ॥ ६२ ॥ एगिंदियपाओगं बंधंता ते करंति मंदरसा। पंचिंदितसं तु इमे सुद्धा बंधंति तो तत्थ ॥ ६३ ॥ मंदरसो नो लब्भइ थीनपुंसा दो विसोहीए। असुभत्ता तज्जोगिय सुद्धा उ विहंति मंदरसा ॥ ६४ ॥

सम्मद्दिट्ठी मिच्छोव अट्ठपरियत्तमज्झिमो जयइ। परियत्तमाणमज्झिममिच्छद्दिट्ठी उ तेवीसं ॥ ७८ ॥

टी० सातासातस्थिरास्थिरशुभाशुभयशःकीर्त्ययशःकीर्त्तिलक्षणा अष्टप्रकृतीः सम्यग्दृष्टिर्मिथ्यादृष्टिर्वा परावर्त्तमानमध्यमपरिणामो जघन्यरसाः करोति। कथमिति चेत्? उच्यते, इह पूर्वं सातस्य पञ्चदश सागरोपमकोटीकोट्य उत्कृष्टा स्थितिरुक्ताऽसातस्य तु त्रिंशत्। तत्र प्रमत्तसंयतस्तत्प्रायोग्यविशुद्धोऽसातस्य सम्यग्दृष्टियोग्यस्थितिषु सर्वजघन्यामन्तःसागरोपमकोटाकोटीप्रमाणां स्थितिं बध्नाति, ततोऽन्तर्मुहूर्त्तात् परावृत्य सातं बध्नाति, पुनरप्यसातमित्येवं देशविरताविरतमिश्रसा-

१ माश्रित्य।

स्वादनमिथ्यादृष्टयोऽपि परावृत्य २ सातासाते बध्नन्ति, तत्र च मिथ्यादृष्टिः सातासाते परावृत्य तावद् बध्नाति, यावत्
सातस्य पञ्चदश सागरोपमकोटाकोटीलक्षणा उत्कृष्टा स्थितिः। ततः परतोऽपि सङ्क्लिष्टतरः संक्लिष्टतमोऽसातमेव केवलं
तावद्बध्नाति, यावत्त्रिंशत्सागरोपमकोटीकोटयः। प्रमत्तादपि परतोऽप्रमत्तादयो विशुद्धा विशुद्धतराः सातमेव केवलं बध्नन्ति,
यावत् सूक्ष्मसम्पराये द्वादश मुहूर्त्तास्तदेवं व्यवस्थिते सातस्य समयोनपञ्चदशसागरोपमकोटाकोटिलक्षणायाः स्थितेरारभ्यासा-
तेन सह परावृत्य बध्नतो जघन्यानुभागबन्धोचितः परावर्त्तमानमध्यपरिणामस्तावल्लभ्यते, यावत्प्रमत्तगुणस्थानकेऽन्तःसागरोप-
मकोटाकोटिलक्षणा सर्वजघन्याऽसातस्थितिः। एतेषु हि सम्यग्दृष्टिमिथ्यादृष्टियोग्येषु स्थितिस्थानेषु प्रकृतेः प्रकृत्यन्तरसङ्क्रमे
मन्दः परिणामो जघन्यानुभागबन्धयोग्यो लभ्यते नान्यत्र। तथाहि-येऽप्रमत्तादयः सातमेव केवलं बध्नन्ति, ते विशुद्धत्वात्त-
स्य प्रभूतमनुभागमुपकल्पयन्ति। योऽपि मिथ्यादृष्टिः सातस्योत्कृष्टां स्थितिमतिक्रान्तोऽसातमेव केवलमुपरचयति, सोऽप्यति-
सङ्क्लिष्टत्वात् तस्य प्रभूतं रसमभिनिर्वर्त्तयति। सागरोपमसप्तभागत्रयादिरूपवेदनीयस्थितिबन्धकेष्वेकेन्द्रियादिष्वपि जघन्यानु-
भागबन्धो न सम्भवति, तथाविधाध्यवसायाभावात्, तस्माद्यथोक्तस्थितिबन्ध एव जघन्यानुभागबन्धसम्भवस्तथाविधपरि-
णामसद्भावादित्यलं विस्तरेण! इति अस्थिराशुभायशःकीर्त्तीनां विंशतिसागरोपमकोटीकोटयः स्थिरशुभयशःकीर्तीनां
तु दश सागरोपमकोटीकोटय उत्कृष्टा स्थितिः पूर्वमेवोक्ता, तत्र प्रमत्तसंयतस्तत्प्रायोग्यविशुद्धोऽस्थिराशुभायशःकीर्तीनां
सम्यग्दृष्टियोग्यस्थितिषु सर्वजघन्यामन्तःसागरोपमकोटीकोटिलक्षणां स्थितिं बध्नाति। ततोऽन्तर्मुहूर्त्ताद्विशुद्धः पुनरपि स्थि-
रादिकाः प्रतिपक्षभूताः बध्नाति, ततः पुनरप्यस्थिरादिका इत्येवं परावृत्य तावद्बन्धो लभ्यते, यावन्मिथ्यादृष्टिगुणस्थाने स्थि-

रादीनामुत्कृष्टा स्थितिः। एतेषु च सम्यग्दृष्टिमिथ्यादृष्टिप्रायोग्येषु स्थितिस्थानेषु जघन्यानुभागबन्धो लभ्यते, नान्यत्र। दशसागरोपमकोटाकोटिपरतो ह्यस्थिरादय एवाशुभप्रकृतयो बहुरसा बध्यन्ते। अप्रमत्तादयस्तु विशुद्धाः स्थिरादिकाः शुभप्रकृतीरेव बहुरसा निर्वर्तयन्ति इति नान्यत्र जघन्यानुभाग आसां लभ्यत इति। शेषभावना तु सातासातवद्वाच्या। 'परियत्तमाण' इत्याद्युत्तरार्द्धं मनुष्यद्विकसंस्थानषट्कसंहननषट्कविहायोगतिद्विकसुभगदुर्भगसुस्वरदुःस्वरादेयानादेयोच्चैर्गोत्रलक्षणास्त्रयोविंशतिप्रकृतीः परावृत्त्य २ बध्नन्तश्चतुर्गतिका अपि मिथ्यादृष्टयो मध्यमपरिणामा जघन्यरसाः कुर्वन्ति। सम्यग्दृष्टीनां ह्येतासां परावृत्तिर्नास्ति। तथाहि—तिर्यग्मनुष्याश्चासम्यग्दृष्टयो देवद्विकमेव बध्नन्ति, न मनुष्यादिद्विकानि, संस्थानेषु तु समचतुरस्रमेव रचयन्ति, न शेषाणि, संहननं तु किञ्चिदपि न बध्नन्ति, तथा शुभविहायोगतिसुभगसुस्वरादेयोच्चैर्गोत्राण्येव च बध्नन्ति, न प्रतिपक्षान्। देवनारका अपि सम्यग्दृष्टयो मनुष्यद्विकमेव बध्नाति, न तिर्यग्द्विकादिकम्। संस्थानेषु तु समचतुरस्रमेव रचयन्ति, न शेषाणि, संहननेषु तु वज्रर्षभनाराचमेव, विहायोगत्यादिका अपि शुभा एव बध्नन्ति न प्रतिपक्षभूता इति तेषां परावृत्त्यभावान्मिथ्यादृष्टिग्रहणम्। तत्र मनुष्यद्विकस्य पञ्चदशसागरोपमकोटाकोटय उत्कृष्टा स्थितिः। प्रशस्तविहायोगतिसुभगसुस्वरादेयोच्चैर्गोत्रवज्रर्षभनाराचसमचतुरस्राणां तु दश। एताः शुभप्रकृतय आत्मीयात्मीयोत्कृष्टस्थितेरारभ्य प्रतिपक्षप्रकृतिभिः सह परावृत्त्य २ बध्यन्ते, यावत्तासामेव प्रतिपक्षप्रकृतीनां सर्वजघन्यान्तःसागरोपमकोटाकोटिलक्षणा स्थितिः। एतेषु स्थितिस्थानेषु परावर्तमानमध्यमपरिणाम एतासां जघन्यानुभागं बध्नाति। हुण्डसेवार्त्तयोरपि वामनकीलिकयोरुत्कृष्टस्थितेरारभ्य परावृत्तिर्लभ्यते यावदात्मीयात्मीयजघन्यस्थितिः। शेषसंहननसंस्थानानामप्यात्मीयात्मीयोत्कृष्टस्थितेरारभ्य

सम्भवदितरसंस्थानसंहननैः सह पराष्टचित्तावदलभ्यते, यावदात्मीयात्मीयजघन्यस्थितिः। एतेषु स्थितिस्थानेषु मिथ्यादृष्टिः परावर्तमानमध्यमपरिणामो जघन्यानुभागं च नातीति गाथार्थः ॥ ७८ ॥ उक्तमुत्कृष्टेतरभेदभिन्नमनुभागवन्धस्वामित्वमिदानीं सर्वघात्यघातिप्रकृतिप्ररूपणावसरस्तत्र प्रकृतयः सामान्येन तावत्त्रिधा भवन्ति। सर्वघातिन्यो देशघातिन्योऽघातिन्यश्च तत्र सर्वघातिनीस्तावदाह—

भा० सम्मद्दिट्ठी मिच्छो व अट्ठ एयस्स भावणा एवं। तप्पाओगविसुद्धो जइ पमत्तो असायस्स ॥६५॥ सम्मद्दिट्ठीबंधं आसज्ज जहन्नियं तु अयराण। अंतो कोडाकोडी बंधइ तत्तोन्तरमुहुत्ता ॥ ६६ ॥ परियट्टिय पुण सायं पुण अस्सायं इमेण नाएण। पच्छणुपुवीए देसविरयपभिइं उ पंचजणा ॥ ६७ ॥ परियट्टिय परियट्टिय सायासाए करंति तिहि मिच्छो। तत्तो बंधइ जा किल सायस्स उ पन्नरस संखा ॥ ६८ ॥ अयराण कोडिकोडी उक्किट्ठठिइं तओय परओ वि। किट्ठो किट्ठयरो विय अस्सायं केवलं बंध ॥ ६९ ॥ ता जाव तीससागरकोडाकोडी पमत्त परओ य। अपमत्ताइं सुद्धा सुद्धयरा सायमेवेगं ॥ ७० ॥ बंधंति जाव सुहुमे बारमुहुत्ता तओ य एत्र ठिए। समयूणपन्नरस सागरकोडाकोडिऽसायस्स ॥ ७१ ॥ ठीईए आरब्भिय असायपयडीतिबंधयंतस्स। मंदरसबंधउवचिओ परियत्तयमाणमज्झिमओ ॥ ७२ ॥ परिणामो ता लब्भइ जाव पमत्ते गुणंमि अयराण। अंतो कोडाकोडी सव्वजहन्ना असायठिई ॥७३॥ एएसु सम्ममिच्छा उवचियठिइठाणपगइसंकमणे। मंदज्झवसाओ मंदबधजोगो उ संभवइ ॥ ७४ ॥ तह अपमत्ताईया सुविसुद्धा सायमेव बंधंति। ते तत्थ पभूयरसं करंति जावेस किर मिच्छो ॥७५॥ केवलमसायकिट्ठो विहेइ सो विय पभूयअणुभावं। अइकिट्ठत्ता पकरइ तह वेय-

णियस्स दुविहस्स ॥ ७६ ॥ जहन्नठीबंधगेसु एगिंदियाइसुवि जहन्नअणुभागे । नो बंधो सभवइ तहविहपरिणामविरहाओ ॥ ७७ ॥ अथिरासुभाजसाण वि जई पमत्तो निहेइ मंदरसं । इह भाउणियापायं वेयणियस्सेव सबावि ॥ ७८ ॥ चउगइया मिच्छनिया तेरीसं सुवमणियपगईओ । मंदरसा पकरंती तत्थ नराणं दुगस्सेह ॥ ७९ ॥ उक्कोसठिई पनरस कोडाकोडी तहा पसत्थगई । सुसराएज्जं सुभगं गोउच्चं आइसठाणं ॥ ८० ॥ आइमसंघयणं खलु पयासि दसेव कोडिकोडीओ । एया सुभपगडीओ पयासिसुक्कोसगठिईणं ॥८१॥ आरब्भ विपक्खपयडियाहिं परियत्तिऊण सह ताओ । वज्झंती जावेयासिमेव पडिवक्खपयडीणं ॥ ८२ ॥ सबजहन्ना अंतो कोडाकोडीओ लक्खणा य ठिई । ठिइठाणेसुं सबेसु सयपरियत्तमाणेण ॥ ८३ ॥ मज्झिमपरिणामेणं बंधइ पयासि मंदअणुभागं ऊणहुंडवामणकीलियउक्किट्ठगठिईओ ॥ ८४ ॥ आरब्भि य परविती लब्भइ जावप्पणो जहन्नठिई । एवं सेसेसुवि भावणेह सबत्थ कायवा ॥ ८५ ॥ उक्किट्ठेयरभिन्नं भणियं अणुभागबंधसामित्तं । अह सबेयराई अघाइपयडी उ कित्तेमि ॥ ८६ ॥

केवलनाणावरणं दंसणछक्कं च मोहबारसगं । ता सव्वघाइसन्ना हवंति मिच्छत्तवीसइमं ॥ ७९ ॥

टी० केवलज्ञानावरणं निद्रापञ्चककेवलदर्शनावरणलक्षणं दर्शनषट्कं मोहनीयकर्मणः सम्बन्धिनः सञ्ज्वलनवर्जा द्वादश कषाया इत्येकोनविंशतिस्तावद्विंशतितमं तु मिथ्यात्वमेता विंशतिप्रकृतयः सर्वघातिसंज्ञा भवन्ति, स्वावार्यगुणं सर्वमपि घातयन्तीति कृत्वा । तथाहि—केवलज्ञानावरणस्य केवलज्ञानलक्षणो गुण आवार्यस्तं च सर्वमेव तदावृणोति, किन्त्वेकोऽनन्तभागः तस्य सर्वजीवानामनावृत एवास्ते, तदावरणे अस्य सामर्थ्याभावात् । तर्हि कथं सर्वघातित्वं तस्येति चेत्? उच्यते,

यथा बहलमेघपटले समुन्नते घनावृत्तत्वात्सर्वापि सूर्यचन्द्रमसोः प्रभाऽनेनावृत्तेति वचः प्रवर्त्तते। अथवाथापि काचित् तत्प्रभा प्रसरति। "सुट्ठ वि मेहसमुदए होइ पहा चंदसूराणमि"ति वचनात् अनुभवसिद्धत्वाच्च, यथा वा राज्ञाऽस्य सर्वस्यापहारः कृत इति वचनप्रवृत्तावपि किञ्चिद् गृहशरीरादिकं तत्रोद्धरितं दृश्यते, एवमत्रापि प्रबलकेवलज्ञानावरणावृतस्यापि केवलज्ञानस्यैकोऽनन्तभागोऽवतिष्ठते, यदि पुनस्तमप्यावृणुयात् तदा जीवोऽजीवत्वमेव प्राप्नुयात्। सोऽपि चोद्धरितस्तदनन्तभागो मेघावृत्तशेषसूर्यादिप्रभेवकटकुड्यादिभिर्नृपापहृतोद्धरितगृहसारमिव वा दायादादिभिर्मतिश्रुतावधिमनःपर्यायज्ञानावरणैराव्रियते, तथापि च काचिन्निगोदावस्थायामपि ज्ञानमात्रावतिष्ठत एवान्यथाऽजीवत्वप्रसङ्गात्। मतिज्ञानादिविषयभूतांश्चार्थान्यन्न जानाति स केवलज्ञानावरणोदयो न भवति, किं तर्हि मतिज्ञानावरणाद्युदय एवेति। केवलदर्शनावरणस्य समस्तवस्तुसामान्यावबोध आवार्यस्तं सर्वं हन्तीति सर्वघात्युच्यते। तदनन्तभागं त्विदमपि सामर्थ्याभावान्नावृणोति। सोऽपि चानावृतोऽनन्तभागश्चक्षुरचक्षुरवधिदर्शनावरणैराव्रियते, शेषो मेघदृष्टान्तादिचर्चस्तथैव। चक्षुर्दर्शनादिविषयभूतांश्चार्थान्यन्न पश्यति, स केवलदर्शनावरणोदयो न भवति, किं तर्हि चक्षुर्दर्शनावरणाद्युदय एव। यद्येवं तर्हि केवलज्ञानकेवलदर्शनावरणक्षयेऽपि मतिज्ञानादि-चक्षुर्दर्शनादिविषयाणामर्थानामेव बोधो न प्राप्नोति, तदन्यज्ञानविषयत्वादिति चेत्? अयुक्तम्, केवलालोकलाभे शेषबोधलाभान्तर्भावात्, ग्रामलाभे क्षेत्रलाभान्तर्भाववदिति। निद्रापञ्चकमपि सर्वं वस्त्ववबोधमावृणोतीति सर्वघाति। यत्तु निद्रावस्थायामपि किञ्चिच्चिकेति (चेतति) तत्र मेघदृष्टान्तादिचर्चस्तथैव। कषायास्तु यथोक्ता द्वादशापि सर्वविरतिरूपं चारित्रं सर्वं घ्नन्तीति सर्वघातिनो, यत्तु तेषां प्रव-

१ सुट्ठपि मेघसमुदये भवति प्रभा सूर्यचन्द्रमसोरिति। २ 'भिन्नज्ञा' इति सि.

लोदयेऽप्ययोग्याहारादिविरमणं दृश्यते, तत्र मेघादिदृष्टान्तः । मिथ्यात्वं तु सर्वज्ञप्रणीततत्त्वश्रद्धानं सर्वमुपहन्तीति सर्वघाति । यत्तु तस्य प्रबलोदयेऽपि मनुष्यद्रव्यादिश्रद्धानं किञ्चिद्देशतो भवति, तत्रापि मेघादिदृष्टान्त इति गाथार्थः ॥ ७९ ॥ इदानीं देशघातित्व उच्यते—

भा० सव्वग्घाईणिच्चगाहाए तह य देसघाईओ । नाणाईगाहाए तहायसेसाइगाहाए ॥ ८७ ॥ अन्नाइं भणिस्सइ अह केवलनाणदरओ उ गुणो । जाहि किर पयडीहिं आवरियइ सव्वपाएण ॥ ८८ ॥ नवरं अणंतभागो केवलनाणस्स सया जीवाणं । अण आवरिओ चिट्ठइ सया वि किल तस्स भावत्ता ॥ ८९ ॥ सव्वघाइत्तणो विहु कोइ गुणो पसरई उ जं भणियं। सुट्ठुवि मेहसमुदए होइ पहा चंदसूराणं ॥ ९० ॥ जहवा भूयेणं सव्वदवरणे करइ किंचिवि य । गिहिसारं उद्धरियं दीसइ तह केवलस्सावि ॥ ९१ ॥ उद्धरिओ चिट्ठइणंतभागसेसो तओ य भेएहिं । आवरियचंदमाईण जह पभा कुट्टिमाईहिं ॥ ९२ ॥ निवईहि हरियसेसं गेहसारं व गोवियाईहिं । मइसुयओहीमणपज्जवेहि नाणेहिं तह एत्थ ॥ ९३ ॥ जीवस्स आवरिज्जइ तहावि किंची निगोयवत्था जा । होइ तहिंपि चिट्ठइ नाणलवो कोवि जीवस्स ॥ ९४ ॥ एवइमेत्ताभावे जिओवि पावेइ किर अजीवत्तं । मइनाणाईणिसए अंपे किर जन्न पावाइ ॥ ९५ ॥ सो केवलनाणस्सा–वरणो उदओ न होइ, पुण किंतु । मइनाणावरणस्स रि उदओ एवं बुहा चिंति ॥ ९६ ॥ केवलदंसण आवरण–पंति सामन्नओ य वत्थूणं । जं किर बोहावरणं तं केवलदंसणावरणं ॥ ९७ ॥ तस्स वि अणंतभागो चक्खुअचक्खूहीवि आवरिओ। मेहाइदिट्ठंता तहेव एत्थवि य भणियव्वा ॥ ९८ ॥ केवलनाणदंसण–खयम्मि मइचक्खुमाइभेयाणं । अवबोहो पावइ जह गामुवलंभम्मि वत्थूण ॥ ९९ ॥ खेत्ताईण वि लाभो·

संभरई तइ य निद्दपणगस्स । सबघाइत्तणे वि हु निद्दावत्थाए जं किंचि ॥ ७०० ॥ वेएई मेहाई दिट्ठंता हुंति एत्थ ते चेव । निद्दापणकेवलदंसणाणं इय छक्कयं भणियं ॥ १ ॥ संजलणवज्जसेसग–कसायबारस उ मोहबारसगं । सबनिरईयरूवं हणेइ सबंपि चारित्त ॥ २ ॥ तत्थुदए वि अ जोग्गा–हाराईणं जियस्स जा विरई । होइ तहिं मेहाई दिट्ठंता एत्थ विन्नेया ॥ ३ ॥ मिच्छत्तं जीवाईतत्ताणं सद्दहाणरूवं । तं सबं उवहाणइ जं पुण तस्सवि उदयम्मि ॥ ४ ॥ जीवो नराइदबं सद्दहई तत्थ मेहदिट्ठंतो । पुवं व भावणीओ अह भणई देसघाईओ ॥ ५ ॥

नाणावरणचउक्कं दंसणतिगमंतराइए पंच । पणुवीसदेसघाई संजलणा नोकसाया य ॥ ८० ॥

टी० केवलज्ञानावरणवर्ज्यानि मतिश्रुतावधिमनःपर्यायज्ञानावरणरूपाणि चत्वारि ज्ञानावरणानि, केवलदर्शनावरणवर्ज्यानि चक्षुरचक्षुरवधिदर्शनावरणरूपाणि त्रीणि दर्शनावरणानि, पञ्चान्तरायाणि, चत्वारः सञ्ज्वलनाः, नवनोकषाया एताः पञ्चविंशतिप्रकृतयो देशघातिन्यो विज्ञेयाः । तथा हि मत्याद्यावरणचतुष्कं केवलज्ञानावरणमुक्तं ज्ञानदेशं हन्तीति देशघाति ज्ञानचतुष्टयविषयभूतानर्थान्यत्र पश्यति, स हि मत्यावरणाद्युदयस्तदविषयभूतांस्त्वनन्तगुणान्यन्न पश्यति, स केवलज्ञानावरणस्यैवोदय इति । चक्षुरचक्षुरवधिदर्शनावरणान्यपि केवलदर्शनावरणानावृतदर्शनैकदेशमावृण्वन्तीति देशघातीनि । तथा हि चक्षुरचक्षुरवधिदर्शनविषयभूतानेवार्थानेतदुदयान्न पश्यति, तदविषयभूतांस्त्वनन्तगुणान् केवलदर्शनावरणोदयादेव न पश्यति । दानान्तरायादीनि पञ्चान्तरायाण्यपि देशघातीन्येव । तथा हि दानलाभभोगोपभोगानां तावद्ग्रहणधारणयोग्यान्येव द्रव्याणि विषयत्वानि च समस्तपुद्गलास्तिकायस्यानन्तभागरूपे देश एव वर्त्तन्ते । अतो यदुदयात्तानि पुद्गलास्तिकायदे-

वर्तीनि द्रव्याणि दातुं लब्धुं भोक्तुमुपभोक्तुं च न शक्नोति, तानि दानलाभभोगोपभोगान्तरायाणि तावद्देशघातीन्येव । यत्तु सर्वलोकवर्तीनि द्रव्याणि न ददाति न लभेत न भुङ्क्ते नाप्युपभुङ्क्ते तत्र दानान्तरायाद्युदयात्, किन्तु तेषामेव ग्रहण-धारणाविषयत्वेनाशक्यानुष्ठानत्वादिति मन्तव्यम्। वीर्यान्तरायमपि देशघात्येव तदुदयेऽपि हि निगोदजीवानादौ कृत्वा यावत्क्षीणमोहस्तीर्थकरादिस्तावद्वीर्यमल्पं बहु बहुतरं बहुतमं च तारतम्याद्भवत्येवेति देशघातीदम् । यदि पुनः सर्वघाति स्यात् तदा यथैव मिथ्यात्वस्य कषायद्वादशकस्य वा उदये तदावार्यसम्यक्त्वगुणं संयमगुणं च जघन्यमपि न लभते, तथैवैतदुदयेऽपि तदावार्यं जघन्यमपि वीर्यगुणं न लभेत, न चैवं, तस्मादिदमपि देशघातीति स्थितम् । सञ्ज्वलना नोकषायाश्च लब्धस्य चारित्रस्य देशघातिन एव, मूलोत्तरगुणातिचारजनकत्वात । तदुक्तं–'[1]सव्वे वि य अइयारा संजलणाणं तु उदयओ हुंति । मूलच्छेज्जं पुण होइ बारसण्हं कसायाणं ॥ १ ॥ " इति गाथार्थः ॥ ८० ॥

भा० केवलनाणनिरहियं नाणावरणचउक्कयं भणियं । केवलदंसणरहियं भणियं दंसणतिगं चेत्थ ॥ ६ ॥ मइनाणाइचउक्कं केवलआवरणमुक्क नाणस्स । देसे हणईई देस–घाइ तह नाणचउगस्स ॥ ७ ॥ विसए भूए अत्थे जं नो पेक्खइ तत्थ किर उदओ । मइनाणप्पभिईणं अविसयभूए उ पुण तेसिं ॥ ८ ॥ अत्थे उ जं न पस्सइ सो केवलनाणवरणओ उदओ। एवं केवलदंसण–उ(य)कं नाणस्स देसं तु ॥ ९ ॥ हणइ तो देसघाई विसए दंसणतिगस्स अत्थे उ । जं नो पस्सइ तत्थ उ दंसणतियगस्स उदओ ॥ १० ॥ तेसिं अविसयभूए णंतगुणे जं न पस्सए जीवो । तहिं उदओ केवल–दंसणस्स नाणीहिं किर

[1] सर्वेऽपि चातिचाराः संज्वलनानां तूदयतो भवन्ति । मूलच्छेद्यं पुनर्भवति द्वादशानां कषायाणाम् ॥ १ ॥

भणिओ ॥ ११ ॥ तह अंतरायपणगे आइमचउगस्स जे उ किर दव्वे । गहणधारणजोगे ते विसए हुंति किर ते वि ॥ १२ ॥ वट्टंति णंतभागे समत्थपोग्गलनिकायरूवस्स । नो ताइं दव्वाइं दाउं लद्धुं तहा भोत्तुं ॥ १३ ॥ नो सक्कइ तो भन्नइ आइमयं अंतराइयचउक्कं । देसग्घाइं जं पुण लोगगयत्ताणि दव्वाणि ॥ १४ ॥ नो देई नो लभए नो भुंजे नोवभुंजए तन्न । दाणलाभाइयाणं उदओ पुण किंतु तेसिं पि ॥ १५ ॥ गहणस्स धारणस्स य निव्विसयत्तं इहं समवसेअं । अहवा विहु असक्काणु-ट्ठाणाओ वि विन्नेओ ॥ १६ ॥ विरियंतराइयंपि हु देसघाई जओ तदुदयम्मि । जीवा निगोयमाई किच्चा जा खीणमोहो त्ति ॥ १७ ॥ विरियगाई तार उ अप्पा बहुयाइया बहूभेया । तारतमेणं हुंति (य) संजलणा नोकसाया य ॥ १८ ॥ लद्धस्स चरित्तस्स उ मूलुत्तरगुणइयारभागाओ । देसग्घाइं भवंती सुत्तम्मि इमं जओ भणियं ॥ १९ ॥ सव्वे वि य अइयारा संजलणाणं तु उदयओ हुंति । मूलच्छेज्जं पुण होइ बारसण्हं कसायाणं ॥ २० ॥

अवसेसा पयडीओ अघाइया घाइयाहि पलिभागा । ता एव पुन्नपावा सेसा पावा मुणेयव्वा ॥ ८१ ॥

टी० भणितशेषा वेदनीयायुर्नामगोत्रप्रकृतयो ज्ञानदर्शनचारित्रादिगुणानां मध्ये न किञ्चिद् गुणं घातयन्तीत्यघातिन्य उच्यन्ते । केवलं 'घाइयाहिं पलिभाग'त्ति स्वयमघातिन्योऽप्येता घातिनीभिस्सह वेद्यमानास्तत्तुल्या दृश्यन्त इत्यर्थः । यथा स्वयमतस्करस्वभावोऽपि तस्करैः सह वर्त्तमानस्तस्कर इव दृश्यते । एवमेता अपि घातिनीभिःस्सह वेद्यमानास्तद्दोषा इव भवन्तीति भावः । 'ता एव पुण्णपाव'त्ति ता एव घातिस्वरूपाः प्रकृतयः काश्चित्सातावाद्या द्विचत्वारिंशत्पुण्यप्रकृतयः काश्चिदसातावाद्याः पापप्रकृतयो भवन्ति । शेषास्तु पूर्वोक्ताः सर्वदेशघातिन्यः पापप्रकृतय एव मुणितव्याः । अयं च पुण्यपाप-

तासामपि स्वभावात् सर्वसङ्क्लिष्टोऽपि द्विस्थानिकमेव रसं करोति । येषु तु मध्यमेष्वध्यवसायस्थानेषु शुभप्रकृतयो बध्यन्ते, तेषु तासां द्विस्थानिकपर्यन्त एव रसो बध्यते, नैकस्थानिको मध्यमपरिणामत्वादेवेति न क्वापि शुभप्रकृतीनामेकस्थानिकरससम्भव इति गाथार्थः ॥ ८२ ॥ तदेवं कृता स्थानप्ररूपणा । साम्प्रतं प्रत्ययनिरूपणार्थमाह—

भा० चेयइ आवरणाइं गाहाएणुभागट्ठाणया भणइ । तहिं नाणावरणेसुं देसघाईसव्वेसु ॥ २७ ॥ केवलवज्जा चउरो नाणे नाणम्मि दंसणा तिन्नि । चक्खुअचक्खुओही एयाणी देसघाईणि ॥२८॥ पण अंतरायसंजलणचउगपुरिस च ईइ रसरसा । चउविहभावपरिणया इयपयसेस भावत्थो ॥२९॥ इह हुंतेगरसाइं चउरसा सव्वसेस पयडीओ । सेसा सुहासुहाओ निवरिणया इगरसं मोत्तुं ॥ ३० ॥ अह देऊकारणनाम लक्खिया पच्चयपरूवणया ।

चउपच्चइएगमिच्छत्त सोलस दुपच्चया य पणतीसं । सेसा तिपच्चया खलु तित्थयराहारवज्जाओ ॥ ८३ ॥

टी० एका सातलक्षणा प्रकृतिश्चतुःप्रत्यया मिथ्यात्वाविरतिकषाययोगलक्षणैश्चतुर्भिरपि प्रत्ययैर्बध्यत इत्यर्थः । तथाहि—सातं मिथ्यादृष्टौ बध्यत इति मिथ्यात्वप्रत्ययम्, शेषा अपि अविरत्यादयस्तु ये प्रत्ययास्तत्र सन्ति, केवलं मिथ्यात्वसंयोग एवान्येषामपि तदन्तर्गतत्वेनैव विवक्षिताः, एवमुत्तरत्रापि । तदेव सातं मिथ्यात्वाभावेऽप्यविरतिमत्सु सासादनादिषु बध्यत इत्यविरतिप्रत्ययं शेषं तु कषाययोगप्रत्ययद्वयं पूर्ववत्तदन्तर्गतत्वेन विवक्ष्यते, तदेवं मिथ्यात्वाविरत्यभावेऽपि कषाययोगवत्सु प्रमत्तादिषु सूक्ष्मसम्परायावसानेषु बध्यत इति कषायप्रत्ययं योगप्रत्ययस्तु पूर्ववदन्तर्गतो विवक्ष्यते । तदेवोपशान्तादिषु केवलयोगवत्सु मिथ्यात्वाविरतिकषायाभावेऽपि बध्यत इति योगप्रत्ययमित्येवमेका सातलक्षणा प्रकृतिश्चतुःप्रत्यया । 'मिच्छत्त

'सोलस'त्ति इह पूर्वं प्रकृतिबन्धविचारे 'सोलसमिच्छंता' इत्यादिगाथावृत्तौ यासां मिथ्यात्वादिषोडशप्रकृतीनां मिथ्यादृष्ट्यन्त उक्तास्ता मिथ्यात्वप्रत्यया भवन्तीत्यर्थः । तद्भावे बध्यते, तदभावे तूत्तरत्र सास्वादनादिषु न बध्यते इत्यन्वयव्यतिरेकाभ्यां मिथ्यात्वमेवासां प्रधानं कारणम्, शेषप्रत्ययत्रयं तु गौणमिति भावः । 'दुपच्चया य पणवीसं' ति पूर्वमेव सास्वादनेऽविरते च यासां पञ्चविंशतेः प्रकृतीनां बन्धव्यवच्छेद उक्तास्ता द्विप्रत्ययाः । मिथ्यादृष्टौ बध्यन्त इति मिथ्यात्वप्रत्यया एताः, सास्वादनादिष्वपि बध्यन्त इत्यविरतिप्रत्ययाः, शेषप्रत्ययद्वयं तु गौणम्, तद्भावेऽप्युत्तरत्र तद्बन्धाभावादिति भावः । 'सेसा तिपच्चये'त्यादि तीर्थकरनामाहारकं च वर्जयित्वा भणितशेषाः सर्वा अपि प्रकृतयस्त्रिप्रत्यया भवन्ति। मिथ्यादृष्ट्यविरतेषु सकषायेषु च सर्वेषु सूक्ष्मसम्परायावसानेषु यथासम्भवं बध्यन्त इति मिथ्यात्वाविरतिकषायलक्षणा प्रत्ययत्रयनिबन्धना भवन्तीत्यर्थः । उपशान्तमोहादिषु केवलयोगवत्सु योगसद्भावेऽप्येतासां बन्धो नास्तीति योगप्रत्ययो न विवक्ष्यते, अन्वयव्यतिरेकसमधिगम्यत्वात् कार्यकारणभावस्येति हृदयम्। तीर्थंकराहारकनाम्नोस्तु प्रत्ययः "सम्मत्तगुणनिमित्तं तित्थयरमि"त्यादिना पूर्वमेवोक्त इतीह तद्वर्जनम्, अपरं चेह पूर्वं "चउपच्चइओ बंधो" इत्यादिना मिथ्यादृष्ट्यादिगुणस्थानेषु बन्धप्रत्यया उक्ताः। साम्प्रतं तु प्रकृतीराश्रित्यामी चिन्तिता इति न पौनरुक्त्यमाशङ्कनीयम् । आह-भवत्वेवं तथाऽप्यनुभावबन्धे विचार्ये प्रकृतीनां प्रत्ययनिरूपणमप्रस्तुतम्, सत्यम्, किन्त्वेवं मन्यते यासां प्रकृतीनामिह ये मिथ्यात्वादयः प्रत्यया उक्तास्तत्सम्बन्धिनोऽनुभागस्यापि त एव प्रत्यया द्रष्टव्यास्तदव्यतिरिक्तत्वात्तस्येति प्रकृतीनां प्रत्ययनिरूपणद्वारेण तदनुभागस्यैव प्रत्यया निरूपिता

१ गाथा ४५ । २ गाथा ४३ । ३ गाथा १४ ।

द्रष्टव्या इति गाथार्थः ॥ ८३ ॥ उक्तं मत्यपद्वारम् । साम्प्रतं विपाकान्विभागतो दर्शयन्नाह—

भा० भणइ चउपच्चयाइँ गाहाए तत्थ किल एगं ॥ ३१ ॥ सायं चउपच्चइयं मिच्छाविरईकसायजोगेहिं । हेऊहिं
बज्झइ इह जई भणियं तहवि एसत्थो ॥ ३२ ॥ साय मिच्छद्दिट्ठी बंधइई मिच्छपच्चयं चेय । होइ तहिँ च किर अविरयाईया
ऊण तियगपि ॥ ३३ ॥ तयत्थि केवलं इह मिच्छत्तंऽनरगयत्तणानेव । एत्थं विवक्खिया एत्तमुत्तरत्था वि नायव्वा ॥ ३४॥
वह मिच्छअभावे विहु अविरइमंतेसु सासणाईसु । साय जेण निबज्झई तो अविरयपच्चयं भणियं ॥ ३५ ॥ एत्थवि उवरि-
मजोग-पच्चयजुयलं तु गोणविवीए । गणयइ वह मिच्छत्तअविरइमाया सजोगेसु ॥ ३६ ॥ सकसाएसु पमत्ताईसुं सुहुमं-
तएसु ठाणेसुं । बज्झइ कसायहेऊ इहइंपि हु जोगहेऊओ ॥ ३७ ॥ सीतरगभोत्ति उवसम माईसुं जोगपच्चओ चेव । चउप-
च्चयं सायं एत्थ इमा भावणाए कया ॥ ३८ ॥ मिच्छत्तसोल एत्थं सोलसकम्मत्थयम्मि जा उत्ता । मिच्छत्तपच्चयाओ तब्भावे-
नेव बज्झंति ॥ ३९ ॥ तस्साभावम्मि सासणाइठाणेसु नेव बज्झंति । सेसं तु पच्चयतिग होइ परं किंतु तं गोणं ॥ ४० ॥
दुपच्चयपणवीसं तत्थय पणवीससासणे पयडी । दस अविरयम्मि मिलिया पणवीसं ता दुपच्चइया ॥ ४१ ॥ मिच्छो बंधइ
मिच्छत्त पच्चया सासणाइसु एवं । बज्झंते इं अविरइपच्चइया ताउ निद्दंसंति ॥ ४२ ॥ अविरयहेउत्ताओ सेसं पच्चयदुगंवि इह-
गोणं । तब्भावंमि किर उत्तरत्थ बंधा अभावाओ ॥ ४३ ॥ सेसा सव्वाओ निय तिपच्चया मिच्छअविरएसुं च । सकसाएसु
य सेसेसु सुहुमठाणावसाणेसु ॥ ४४ ॥ मिच्छाविरयकसाया हेऊतिगमंभरोत्थि तहि बंधो । उवसंताइसु केवलजोगप्पभवो-
जावि बंधो ॥ ४५ ॥ अत्थि तहावि विवक्खा एत्थं न कया यओ इहं भणियं । सेसा तिपच्चया खलु तित्थयराहार पुण हेऊ-

॥ ४६ ॥ सम्मत्तगुणनिमित्तं तित्थयरं एवमाइयुच्चंपि । भणियं अओ उ भणियं तित्थयराहारवज्जाओ ॥ ४७ ॥ चउपच्चओ बंधो पभिइंगाराहिं बंधदारम्मि । पुव्विं गुणठाणेसुं पयत्तिया पच्चया इह उ ॥ ४८ ॥ पयडी आसज्ज इमे चिंतियाओ न पयत्थ पुणरुत्तं । विन्नेयं तह पयडी पच्चयरूवणेण तासिं पि ॥ ४९ ॥ जे अणुभागो तेसिं पि पच्चया ते वि चेव दट्ठव्वा । पयडीणणुभागाणं एगत्ताओ इमं नेयं ॥ ५० ॥ भणियं पच्चयदारं विवागदारंपि संपयं भणिमो । तत्थ इमा पयडीओ चउहा विवागा हवंतेवं ॥ ५१ ॥ पुग्गलविवागिणीओ भवखेत्तविवागिजियविवागीओ । तेहिं पंचयअगुरुलहूपभिइंगाहाण जुयलेण ॥ ५२ ॥ पुग्गलविवागिणीओ भणिही आऊणिमाए गाहाए । भवखेत्तजियविवागीण भणिहिही किंचि वि सरूवं ॥ ५३ ॥

पंचग छव्विय,छप्पंच दुन्नि पंचय हवंति अट्ठेव । सरिराई फासंता, पयडीओ आणुपुव्वीए ॥ ८४ ॥

अगुरुलहुपराघायोवघायउज्जोवआयवनिमेणं । पत्तेयथिरसुभेयरनामाणि य पोग्गलविवागा ॥ ८५ ॥

टी० शरीराद्याः स्पर्शपर्यन्ताः शरीरसंस्थानाङ्गोपाङ्गसंहननवर्णगन्धरसस्पर्शलक्षणा अष्टौ पिण्डप्रकृतयो भवन्तीति पूर्वार्द्धे क्रिया । कथम्भूता भवन्तीत्याह-पुद्गलविपाका इत्युत्तरगाथान्ते सम्बन्धः । उत्तरभेदानाश्रित्य कियद्भेदाः सन्त्यस्ताः पुद्गलविपाका भवन्तीत्याह-' पंचगे 'त्यादि आनुपूर्व्या यथासङ्ख्यं पञ्चकादिभेदा इत्यर्थः । एतदुक्तं भवति-पञ्च शरीराणि, षट् संस्थानानि, त्रीण्यङ्गोपाङ्गानि, षट् संहननानि, पञ्च वर्णाः, द्वौ गन्धौ, पञ्च रसाः, अष्टौ स्पर्शा इत्येताः प्रकृतयः पुद्गलेष्वेव विपच्यन्ते इति पुद्गलविपाका बोद्धव्याः । शरीरपुद्गलेष्वेवात्मीयां शक्तिं दर्शयन्तीत्यर्थः । तथाहि-शरीरनामोदयाच्छरीरतया पुद्गला एव परिणमयन्ति । संस्थाननामोदयादपि तेष्वेवाकारविशेषो भवत्यङ्गोपाङ्गोदयादपि तेष्वेव

शिरःपादादिविभागो भवतीत्यादि स्वधिया वाच्यम्, यावत्स्पर्शनामोदयादपि तेष्वेव शरीरपुद्गलेषु कर्कशादिः कश्चित्स्पर्शो भवत्यत एताः पुद्गलविपाकाः । किमेता एव? नेत्याह–अगुरुलघुपराघातोपघातोद्योतातपनिर्माणानि प्रत्येकादिष्वितर-शब्दस्य प्रत्येकमभिसम्बन्धात्प्रत्येकसाधारणस्थिरास्थिरशुभाशुभनामानि च पुद्गलविपाकानि भवन्ति, सर्वेषामप्यमीषां शरीरपुद्गलेष्वेव स्वविपाकदर्शनादिति गाथाद्वयार्थः ॥ ८४–८५ ॥ शेषप्रकृतयस्तर्हि किं विपाका इत्याह—

भा० तहिं पचयगाहाए सरीरसंठाणअंगुवंगाणं । संघयणवन्नगंधो रसफासा अट्ठपयडीणं ॥ ५४ ॥ उवरिं कमसो नेया सत्ता पंचय इमाए गाहाए । तह एत्थं सरिराइं फासंता जइवि किर भणियं ॥ ५५ ॥ तह विहु बंधणसंघायणाउ एत्थं न हुंति गणियव्वा । बंधे जेणं ते किर सरीरगहणेण वी गहिया ॥ ५६ ॥ तह पंचयगाहाए चालीसं अगुरुलहुयगाहाए । बारस दोहिं वि मिलिएहिं होइ सत्तावि बावन्ना ॥ ५७ ॥ जाइं एए मज्झे वन्नाइं वीसइं किर समत्थि । तहिं वन्नाइ चउरो गब्भा सोलस न घेत्तव्वा ॥५८॥ पुग्गलविवागिपयडो तो छत्तीसं हवंतिइ संखा । जा अन्नत्थ पढिज्जइ सा किर परमत्थनिचीए ॥५९॥

आऊणिभवविवागा खित्तविवागा य आणुपुव्वीओ । अवसेसा पयडीओ जीवविवागा मुणेयव्वा ॥८६॥

टी० भवन्ति जन्तवोऽस्मिन्निति भवो नारकादिपरिणतिविशेषः, स च विग्रहगतेरारभ्य द्रष्टव्यो 'नेरइए नेरइएसु उववज्जइ'[1] त्ति वचनात्, तस्मिन् भव एव विपाक उदयो येषां तानि भवविपाकानि नारकादीनि चत्वार्यप्यायूंषि भवन्ति, यथासम्भवं प्राग्भवे बद्धान्यागामिनि भवे विपच्यन्त इति भावः । क्षेत्रमाकाशं तत्रैव विपाक उदयो ताः क्षेत्रविपाका-

१ नैरयिको नैरयिकेषूत्पद्यते.

श्चतस्रोऽप्यानुपूर्व्यो विग्रहगतावेव तासामुदयो भवति, नान्यत्रेतिभावः । अवशेषाः-भणितशेषा ज्ञानावरणादिप्रकृतयो जीव एव विपाकः स्वशक्त्याविर्भावलक्षणो यासां ता जीवविपाका ज्ञातव्यास्तथाहि-ज्ञानावरणोदयाज्जीव एवाज्ञानी स्यात् न पुनः शरीरपुद्गलेषु तत्कृतः कश्चिदुपघातोऽनुग्रहो वा भवति । एवं दर्शनावरणोदयादपि जीव एवादर्शनी भवति । सातासातोदयादपि स एव सुखी वा दुःखी वा भवति । मोहोदयादप्यदर्शन्यचारित्री वा स एव भवति । एवं गतिजात्युच्छ्वासविहायोगतिसप्ततिपक्षत्रसबादरपर्याप्तकसुभगसुस्वरादेययशःकीर्त्तितीर्थकरोच्चैर्नीचैर्गोत्रान्तरायपञ्चकलक्षणानामपि प्रकृतीनां उदये सति तदनुभावाज्जीव एव तं तं भावमासादयति, न शरीरपुद्गला इत्येताः सर्वा अपि जीवविपाकाः, या अपि पुद्गलभवक्षेत्रविपाका उक्तास्ता अपि वस्तुतो जीवविपाका एव पारंपर्येण जीवस्यैवानुग्रहोपघातकारित्वात् । केवलं तत्तद्विपाकस्य मुख्यतया तत्र २ विवक्षितत्वात्तत्तद्विपाकव्यपदेश इति गाथार्थः ॥ ८९ ॥ अनुभागबन्धः समाप्तः ॥

भा० एत्थवि समत्थि एवं तो संदेहो न एत्थ कायव्वो । भवखेत्तविवागीओ सुगमा अह जियविवागीओ ॥ ९० ॥
चउगइ ४ विहदुग २ जाई ५ तसतिग ३ थावरतिगं ३ चऊसासं । सुभगदुभगाइ ४ चउचउ नीउच्चं सायमस्सायं ॥ ९१ ॥
तित्थं सम्मं मीसं पणयालीसं च घाइपयडीओ । इय अडहत्तरि पयडी जीवविवागा मुणेयव्वा ॥ ९२ ॥

अणुभागबंधो सम्मत्तो ॥

टी०—इदानीं क्रमप्राप्तः प्रदेशबन्ध उच्यते—तस्य च चत्वार्यनुयोगद्वाराणि तद्यथा—कर्मप्रदेशादानविधिः, भागप्ररूपणा, साद्यादिप्ररूपणा, स्वामित्वप्ररूपणा चेति। तत्र कर्मप्रदेशादानविधौ—

भा० भणिओ णुभागबंधो संपइ वसरो पएसबंधस्स। तस्साणुओगदारा चत्तारि हवंति ते इमे ॥६३॥ कम्मस्स पएसाणं आयाणविहीओ भागकित्तणया। साईयाइपरूवण—सामित्तपरूवणे चेव ॥ ६४ ॥

एगपएसो गाढं सव्वपएसेहिं कम्मुणो जोग्गं। बंधइ जहुत्तहेउं साइयमणाइयं यावि ॥ ८७ ॥

पंचरसपंचवन्नेहिं संजुयं दुविहगंधचउफासं। दवियमणंतपएसं सिद्धेहिं अणंतगुणहीणं ॥८८ ॥

टी० इह पुद्गलद्रव्यं जीवो बध्नातीति योगः। कथम्भूतमित्याह—' एगपएसो गाढं 'ति एकस्मिन् प्रदेशेऽवगाढमेकप्रदेशावगाढम्। यत्रैव जीवस्यात्मप्रदेशास्तत्रैव यदवगाढं तदेव बध्नाति, न पुनरन्यत्तत्रानीय बध्नाति, इत्यर्थः। यथाहि दहनः स्वक्षेत्रस्थमेव दाह्यमात्मसात्करोति, न व्यवहितमेवं जीवोऽपि स्वक्षेत्रस्थमेव द्रव्यमादत्ते, नहि बहिर्वर्तीति भावः। तच्च सर्वैरप्यात्मीयप्रदेशैर्बध्नाति, नत्वेकेन द्व्यादिभिर्वा, एतदुक्तं भवति समस्तलोकाकाशप्रदेशराशिप्रमाणा एकस्य जन्तोः प्रदेशा भवन्ति। मिथ्यात्वादिबन्धकारणोदये च सति सर्वे स्वस्वाकाशप्रदेशेभ्यो युगपदेव कर्मद्रव्यं गृण्हन्ति, परस्परं च सर्वेऽप्युपकुर्वन्ति। निबिडसुवर्णशृङ्खलावत्परस्परसम्बद्धत्वादेकस्मिन् प्रदेशे चेष्टमाने सर्वेषामपि चेष्टनादतः सर्वैः प्रदेशैः सर्वप्रदेशसन्निहितं द्रव्यं जीवो बध्नातीत्यर्थः। पुनरपि कथम्भूतं तदित्याह—कर्मणो योग्यं कर्मवर्गणान्तर्गतमित्यर्थः। ननु तत्किं सहेतुकं बध्नाति,

१ ' परिणयं 'सि.

निर्हेतुकं वा? इत्याह–'जहुत्तहेउं 'ति यथोक्तहेतुयें पूर्वं मिथ्यात्वादयः सामान्यविशेषा हेतवः प्रोक्तास्तैर्बध्नाति न निर्हेतुकमिति भावः। एतच्च सादिकमनादिकं च बध्नाति। तत्र यो बन्धव्यवच्छेदं कृत्वा प्रतिपत्य पुनस्ता एव प्रकृतीर्बध्नाति, तस्य सादिर्बन्धोऽप्राप्तबन्धव्यवच्छेदस्य त्वनादिः। अपिशब्दादभव्यो ध्रुवं भव्योऽध्रुवं बध्नातीत्यपि द्रष्टव्यम्। तच्च द्रव्यं प्रतिस्कन्धं कृष्णादिपञ्चवर्णोपेतं तिक्तादिरसपञ्चकयुक्तं सुरभीतरद्विगन्धं चतुःस्पर्शं च गृह्णाति। तत्र मृदुलघुलक्षणं स्पर्शद्वयं तावदवस्थितं भवत्यपरौ च स्निग्धोष्णौ स्निग्धशीतौ वा रूक्षोष्णौ रूक्षशीतौ वा द्वावविरुद्धस्पर्शौ भवतः। प्रज्ञप्त्याद्यभिप्रायात्तु स्निग्धरूक्षशीतोष्णा भवन्ति। कियत्प्रमाणं गृह्णातीत्याह 'अणंतपएसं'ति अनन्ताः प्रदेशाः पुद्गलाः स्कन्धा यत्र तदनन्तप्रदेशम्। तत्रानन्तकस्य बहुभेदत्वात् विशेषयति। 'सिद्धेहिं अणंतगुणहीणं 'ति उपलक्षणत्वादभव्येभ्योऽनन्तगुणं सिद्धेभ्योऽनन्तगुणहीनं द्रव्यं गृह्णातीत्यर्थः। एतदुक्तं भवत्यभव्येभ्योऽनन्तगुणैः सिद्धेभ्योऽनन्तगुणहीनैः परमाणुभिर्निष्पन्नमेकैकं कर्मस्कन्धं गृह्णाति। तानपि स्कन्धान् प्रतिसमयमभव्येभ्योऽनन्तगुणान् सिद्धानामनन्तभागवर्त्तिन एव गृह्णातीति गाथाद्वयार्थः ॥८८॥

८९॥ अत्राह–तन्त्राद्यगाथायां कर्मणो योग्यमिति द्रव्यस्य विशेषणं कृतं तत्किं कर्मायोग्यमपि किञ्चिद् द्रव्यमस्ति? येनैवं विशिष्यते सत्यमस्ति, तथाहि–कर्मयोग्यायोग्यमपि द्रव्यविभागदर्शनार्थमेव सजातीयपरमाण्वादि द्रव्यसमुदायरूपा वर्गणाः प्ररूप्यन्ते–इह समस्तलोकाकाशप्रदेशेषु ये केचनैकाकिनः परमाणवो विद्यन्ते। तत्समुदायः सजातीयत्वादेका वर्गणा, इयं च स्वभावाज्जीवानां ग्रहे नागच्छतीति अग्रहणवर्गणेत्युच्यते। एवं द्विप्रादेशिकस्कन्धवर्गणाप्यग्रहणवर्गणा। एवं त्रिचतुष्पञ्चादिप्रादेशिकस्कन्धानामपि वर्गणा वाच्याः, यावत्सङ्ख्यातप्रादेशिकस्कन्धानामपि वर्गणा अग्रहणवर्गणाः, एवमसङ्ख्यातप्रादेशि-

कस्कन्धानामपीति । अनन्तानन्तप्रादेशिकस्कन्धवर्गणा अप्यनन्ता अतिक्रम्यात्रान्तरेऽनन्तानन्तैरेव परमाणुभिर्निष्पन्नानामेकोत्तरवृद्धिभाजां स्कन्धानां समुदायरूपा अनन्ता औदारिकशरीरनिष्पत्तिहेतुभूता औदारिकवर्गणा भवन्ति । तदनन्तरं द्रव्यमाश्रित्य वृद्धानां परिणाम स्वाश्रित्य सूक्ष्माणामेकोत्तरवृद्धिभाजां स्कन्धानां समुदायरूपा वैक्रियशरीरनिष्पत्तिहेतुभूता अनन्ता वैक्रियवर्गणा भवन्ति । तदनन्तरं द्रव्यतो वृद्धानां परिणामं स्वाश्रित्य सूक्ष्मतराणामेकोत्तरवृद्धिमतामेव स्कन्धानां समुदायरूपा आहारकशरीरनिष्पत्तिहेतुभूता अनन्ता आहारकवर्गणा। अत्र च जघन्यवर्गणारम्भकस्कन्धस्यानन्तभागे यावन्तोऽणवस्तत्प्रमाणेन विशेषेणोत्कृष्टवर्गणारम्भक एकैकस्कन्धोऽधिको वक्तव्यः, एवमौदारिकवैक्रियवर्गणास्वपि जघन्यवर्गणारम्भकस्कन्धेभ्य उत्कृष्टवर्गणारम्भकस्कन्धानां विशेषाधिकत्वं वाच्यमिति । तदुपरि रूपाधिकस्कन्धैरारब्धा जघन्या अग्रहणवर्गणा, अतीतवक्ष्यमाणाहारकतैजसयोरयोग्येति कृत्वा । एवमेता अपि यथोत्तरं एकोत्तरवृद्धिमत्स्कन्धारब्धा अनन्ता अग्रहणवर्गणा भवन्ति । एव जघन्यवर्गणास्कन्धेभ्यश्चोत्कृष्टवर्गणा स्कन्धा अनन्तगुणपरमाण्वारब्धा द्रष्टव्याः । स च गुणकारः सिद्धानामनन्तभागेऽभव्येभ्योऽनन्तगुणो द्रष्टव्यः । वर्गणा अप्येता एतद्गुणकारवृद्धपरमाणुराशिसङ्ख्योपेता द्रष्टव्याः । एवमुत्तरत्रापि यावन्तो निजनिजगुणकारकेष्वणवो वर्द्धन्ते, वर्गणा अपि तत्सङ्ख्या द्रष्टव्यास्तदुपरि रूपाधिकस्कन्धारब्धा तैजसशरीरनिष्पत्तिहेतुभूता जघन्या तैजसवर्गणा । ततो यथोत्तरमेकैकवृद्धिमत्स्कन्धारब्धा एता अप्यनन्ता वर्गणा वाच्याः । जघन्यवर्गणारम्भकस्कन्धपरमाणुभ्यश्चोत्कृष्टवर्गणारम्भकस्कन्धपरमाणवो विशेषाधिकाः, स च विशेषो जघन्यवर्गणास्कन्धस्यानन्तभागलक्षणस्तदनन्तरं रूपाधिकस्कन्धैरारब्धा जघन्या अग्रहणवर्गणा, अतीतवक्ष्यमाणतैजसभाषायोग्यत्वादेता अपि समु-

पकारात्तैजसाहारकान्तरालवर्गणावदनन्ता वाच्याः, तदुपरि रूपाधिकस्कन्धैरारब्धा जघन्या भाषावर्गणा । तत एकोत्तरवृद्धिमत्स्कन्धारब्धा एता अपि भाषानिष्पत्तिहेतुभूता अनन्ता भाषावर्गणा मन्तव्याः । जघन्यस्कन्धादुत्कृष्टस्कन्धस्य च विशेषाधिकत्वं तैजसवर्गणावद्वाच्यम् । तदुपरि भाषानापानवर्गणाऽयोग्यत्वात् पूर्वोक्ताग्रहणवर्गणावत् सगुणकारा अनन्ता अग्रहणवर्गणा बोद्धव्याः । तदुपरि भाषावर्गणावत् अनन्ता आनापानवर्गणा ज्ञेयाः, जघन्यादुत्कृष्टस्कन्धस्य विशेषाधिकत्वमपि तथैव, ततोऽप्युपर्यानापानमनोऽयोग्यत्वात् पूर्ववत्सगुणकारा अनन्ता अग्रहणवर्गणा वाच्याः । तदुपर्यानापानवर्गणावन्मनोनिष्पत्तिहेतुका अनन्ता मनोवर्गणा अवसेया, विशेषाधिकत्वमप्युत्कृष्टस्कन्धानां तथैव । तदुपरि मनःकर्मायोग्यत्वात् तथैव सगुणकारा अनन्ता अग्रहणवर्गणा ज्ञातव्याः । तदुपरि च ज्ञानावरणादिहेतुभूता मनोवर्गणावदनन्ताः कर्मवर्गणा अवगन्तव्याः । विशेषाधिकत्वमप्युत्कृष्टस्कन्धानां तथैव । ततो रूपाधिकस्कन्धैरारब्धा जघन्या ध्रुवा अचित्तवर्गणा, तत एकोत्तरवृद्धिमत्स्कन्धैरारब्धा एता अप्यनन्ताः । जघन्यवर्गणारम्भकस्कन्धादुत्कृष्टवर्गणारम्भकस्कन्ध अनन्तगुणवृद्धः, स च गुणकारः सर्वजीवेभ्योऽनन्तगुणः । एताश्च वर्गणा न कदाचिल्लोके न भवन्त्यतो ध्रुवा उच्यन्ते । चैतन्यरहितत्वेन त्वचित्ताः । मध्ये च कृतमिदं विशेषणं पूर्वमुत्तरत्र च द्रष्टव्यम् । सर्वस्यापि पुद्गलराशेरचित्तत्वादिति । ध्रुवत्वविशेषण तु प्रागपि सर्वत्र द्रष्टव्यम् । तासामपि सर्वदैव लोके सद्भावात्, उत्तरत्र त्विदं न सम्बध्यते, कासांचित्कदाचिदसत्त्वादपि । तथाहि—तदुपरि रूपाधिकस्कन्धारब्धा जघन्याऽध्रुवाचित्तवर्गणा भवति । ततो रूपाधिकस्कन्धैरारब्धा एता अप्यनन्ता ध्रुवाचित्तवर्गणावत्सगुणकारा वाच्याः । लोके च कदाचिदेता न भवन्त्यपीत्यध्रुवा उच्यन्ते । तदुपरि त्वेकोत्तरवृद्धिभाजोऽनन्ताः शून्यवर्गणा भवन्ति । गुणकारः सर्वजीवान-

न्तगुणः पूर्ववद्वाच्यः। एताश्च प्ररूपणामात्रम्, द्रव्यस्याभावात्। प्ररूप्यन्ते तर्हि किमर्थमिति चेत्? उच्यते, ध्रुवाचित्तोत्कृष्टवर्गणाया अनन्तरवक्ष्यमाणप्रत्येकशरीरजघन्यवर्गणायाश्चान्तरे यथैकोत्तरवृद्ध्या द्रव्यं लभ्यते, तदैतावत्यो वर्गणा उत्तिष्ठन्त इत्यन्तरालमहत्त्वख्यापनार्थमेताः प्ररूप्यन्ते, न पुनरत्र द्रव्यमस्त्यत एताः शून्यवर्गणाः, एवमुत्तरास्वपि शून्यवर्गणासु समाधानं वाच्यम्। तदुपर्येकोत्तरवृद्धिमत्स्कन्धसमुदायैरारब्धा अनन्ताः प्रत्येकशरीरवर्गणा वाच्याः। अत्र च जघन्यवर्गणास्कन्धाणुभ्य उत्कृष्टवर्गणास्कन्धाणवोऽसङ्ख्येयगुणाः, स च गुणकारः क्षेत्रपल्योपमासङ्ख्येयभागवर्त्तिप्रदेशराशिरूपः। एताश्च प्रत्येकशरीरिभिः पृथिव्यादिजीवैर्यथासम्भवं यदुपात्तमौदारिकादिशरीरपञ्चकहेतुभूतमौदारिकवैक्रियाहारकतैजसकार्मणनामकर्म्म तदाश्रयेण वर्त्तन्ते, तदाश्रित्य तिष्ठन्ति। यथा भूमिकादिपुद्गलाः पर्वताश्रयेणेत्यतः प्रत्येकशरीरवर्गणा उच्यन्ते। तदुपरि पुनः साक्षेपपरिहाराः शून्यवर्गणास्तथैव वाच्याः। केवलमत्र गुणकारोऽसङ्ख्येयलोकाकाशप्रदेशराशिरूपः। तदुपरि रूपाधिकैर्यथोत्तरमेकोत्तरवृद्धैश्च स्कन्धैरारब्धा अनन्ता बादरनिगोदवर्गणा वाच्याः। जघन्यस्कन्धेभ्य उत्कृष्टानामणूनाश्रित्यासङ्ख्यातगुणवृद्धत्वात्, स च गुणकारः क्षेत्रपल्योपमासङ्ख्येय भागः। इह च बादरनिगोदजीवानां यान्यौदारिकादिशरीरनामकर्म्माणि सम्भवन्ति, तदाश्रयेणैता वर्त्तन्त इति बादरनिगोदवर्गणा उच्यन्ते। तदुपरि पुनरप्यनन्ताः शून्यवर्गणाः, जघन्यवर्गणास्कन्धेभ्यश्चोत्कृष्टवर्गणास्कन्धा अणूनाश्रित्यासङ्ख्यातगुणाः। स च गुणकारोऽङ्गुलासङ्ख्येयभागवर्त्तिक्षेत्रस्य यावन्त आवलिकासङ्ख्येयभागे समयास्तावन्ति वर्गमूलानि गृह्यन्ते। तत्र चरमवर्गमूले यावन्त आकाशप्रदेशास्तदसङ्ख्येयभागरूपो द्रष्टव्यः, आक्षेपपरिहारौ पूर्ववत्। तदुपर्यनन्ताः सूक्ष्मनिगोदवर्गणाः। जघन्यवर्गणास्कन्धेभ्य-

श्चोत्कृष्टवर्गणास्कन्धा अणूनाश्रित्यासङ्ख्यातगुणाः । स च गुणकारः आवलिकाऽसङ्ख्येयभागवर्त्तिसमयराशिमानः, एताश्च सूक्ष्मनिगोदजीवानां यान्यौदारिकतैजसकार्मणनामकर्म्माणि सम्भवन्ति, तदाश्रयेण वर्त्तन्ते इति सूक्ष्मनिगोदवर्गणा उच्यन्ते । तदुपरि पुनरप्यनन्ताः शून्यवर्गणा जघन्यवर्गणास्कन्धेभ्यश्चोत्कृष्टवर्गणानां स्कन्धाः अणूनाश्रित्यासङ्ख्यातगुणवृद्धाः, स च गुणकारोऽसङ्ख्येयाकाशश्रेणिप्रदेशराशिमानः प्रतरासङ्ख्येयभाग इति यावदाक्षेपपरिहारौ तथैव । तदुपरि रूपाधिकस्कन्धैरारब्धा अनन्या महास्कन्धवर्गणा, तत एकोत्तरवृद्धिमत्स्कन्धारब्धा एता अप्यनन्ता वाच्याः । जघन्यवर्गणारम्भकस्कन्धेभ्य उत्कृष्टवर्गणारम्भकस्कन्धा अणूनाश्रित्यासङ्ख्यातगुणाः, स च गुणकारः क्षेत्रपल्योपमासङ्ख्येयभागः 'सङ्ख्येयभाग' इति पाठान्तरं एताश्च महास्कन्धवर्गणा भूभृत्कूटटङ्काराद्याश्रयेणैव वर्त्तन्त इति प्रतिपत्तव्यम् । अत्र च जघन्यौदारिकवर्गणास्कन्धा अप्यभव्येभ्योऽनन्तगुणैः सिद्धानन्तभागवर्त्तिभिः पुद्गलैर्निष्पन्ना, वर्गणा अपि औदारिकायाः सर्वत्रानन्ता उक्ता इति यथास्थित्या दर्शयितुमशक्यत्वात् पञ्चादिपरमाणुनिष्पन्नान् स्कन्धान् प्रत्येकं त्रिप्रमाणा वर्गाश्च परिकल्प्य विनेयानुग्रहार्थमौदारिकवर्गणा आदौ कृत्वा स्थापना दर्श्यते । (पृष्ठ १०६ (२))

अत्र च सिद्धान्तिका बृहच्चूर्ण्यनुसारेण कार्मग्रन्थिकाश्च केचिदौदारिकवैक्रियाहारकवर्गणानामप्यन्तरद्वयेऽग्रहणवर्गणा इच्छन्ति, युक्तं चैतल्लक्ष्यते, यत औदारिकवर्गणाभ्यो वैक्रियवर्गणास्ताभ्योऽपि चाहारकवर्गणाः प्रदेशतोऽसङ्ख्येयगुणा इष्यन्ते, एतच्चान्तरालेऽग्रहणवर्गणाऽन्तरेण नोपपद्यते, परं कर्मप्रकृत्यादिषु केनाप्यभिप्रायेण नोक्ता इत्यस्माभिरपि नाभिहिता इत्याद्यन्यदपि सैद्धान्तिकमतभेदादिकं बहु वक्तव्यं तत्तु नोच्यते ग्रन्थविस्तरभयाद् गमनिकामात्रफलत्वात्प्रयासस्येति । तदेवमत्र

| | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ७ | ७ | ७ | १० | १० | १० | १३ | १३ | १३ | १६ | १६ | १६ | १९ | १९ | १९ | २२ | २२ | २२ | २५ | २५ | २५ | २८ | २८ | २८ |
| ६ | ६ | ६ | ९ | ९ | ९ | १२ | १२ | १२ | १५ | १५ | १५ | १८ | १८ | १८ | २१ | २१ | २१ | २४ | २४ | २४ | २७ | २७ | २७ |
| ५ | ५ | ५ | ८ | ८ | ८ | ११ | ११ | ११ | १४ | १४ | १४ | १७ | १७ | १७ | २० | २० | २० | २३ | २३ | २३ | २६ | २६ | २६ |
| औदारिकवर्गणा | | | वैक्रियवर्गणा | | | आहारकवर्गणा | | | अग्रहणवर्गणा | | | तैजसवर्गणा | | | अग्रहणवर्गणा | | | भाषावर्गणा | | | अग्रहणवर्गणा | | |
| ३१ | ३१ | ३१ | ३४ | ३४ | ३४ | ३७ | ३७ | ३७ | ४० | ४० | ४० | ४३ | ४३ | ४३ | ४६ | ४६ | ४६ | ४९ | ४९ | ४९ | ५२ | ५२ | ५२ |
| ३० | ३० | ३० | ३३ | ३३ | ३३ | ३६ | ३६ | ३६ | ३९ | ३९ | ३९ | ४२ | ४२ | ४२ | ४५ | ४५ | ४५ | ४८ | ४८ | ४८ | ५१ | ५१ | ५१ |
| २९ | २९ | २९ | ३२ | ३२ | ५२ | ३५ | ३५ | ३५ | ३८ | ३८ | ३८ | ४१ | ४१ | ४१ | ४४ | ४४ | ४४ | ४७ | ४७ | ४७ | ५० | ५० | ५० |
| आनपानवर्गणा | | | अग्रहणवर्गणा | | | मनोवर्गणा | | | अग्रहणवर्गणा | | | कर्मवर्गणा | | | ध्रुववर्गणा | | | अध्रुववर्गणा | | | शुन्यवर्गणा | | |
| ५५ | ५५ | ५५ | ५८ | ५८ | ५८ | ६१ | ६१ | ६१ | ६४ | ६४ | ६४ | ६७ | ६७ | ६७ | ७० | ७० | ७० | ७३ | ७३ | ७३ | | | |
| ५४ | ५४ | ५४ | ५७ | ५७ | ५७ | ६० | ६० | ६० | ६३ | ६३ | ६३ | ६६ | ६६ | ६६ | ६९ | ६९ | ६९ | ७२ | ७२ | ७२ | | | |
| ५३ | ५३ | ५३ | ५. | ५६ | ५६ | ५९ | ५९ | ५९ | ६२ | ६२ | ६२ | ६५ | ६५ | ६५ | ६८ | ६८ | ६८ | ७१ | ७१ | ७१ | | | |
| प्रत्येकशरीर-वर्गणा | | | शुन्यवर्गणा | | | बादरनिगोद-वर्गणा | | | शुन्यवर्गणा | | | सूक्ष्मनिगोद वर्गणा | | | शुन्यवर्गणा | | | महास्कन्ध-वर्गणा | | | | | |

कर्म्मवर्गणास्वरूपं द्रव्यं कर्म्मणो योग्यं, शेष त्वयोग्यमित्यस्य व्यवच्छेदार्थं कर्म्मणो योग्यमिति विशेषणम्, तदेवमवसितः कर्म्मप्रदेशादानविधिः। साम्प्रतं भागप्ररूपणाया अवसरः। तत्र य उपशान्तमोहादिरेक वेदनीयमेव वन्धाति, स यत्किमपि द्रव्यं गृण्हाति, तदेकस्य वेदनीयस्यैव भवति, अन्यस्य तत्र वन्धाभावात्। यस्तु सूक्ष्मसम्परायः षड्विधं बन्धाति, तेन गृहीतं द्रव्यं षड्भिर्भागैः परिणमति। सप्तविधवन्धकस्य सप्तभिर्भागैरष्टविधबन्धकस्य त्वष्टभिर्भागैः परिणमति। अत्राह– ननु ते भागाः कर्म्मणां समा भवन्ति, विषमा वा इति शिष्यजिज्ञासायां निजगाद–

भा० एगपएसोगाढ ईगाइदुगेग पढमदारंति। वच्चेइ वत्थ कम्मं जह गिण्हइ तह किर भणइ॥ ६५॥ इह एगस्स जियस्स उ लोगागासप्पएसपरिमाणा। हुंति पएसा ते पुण मिच्छाईबंधहेऊण॥ ६६॥ उदए सव्वेहिं पिय नियपएसेहिं वंधए जीवो। नउ एगदुगाईहिं एगपएसावगाढंति॥ ६७॥ जत्थेव उ जीवस्सउ नियपएसा तहिं च किर खेत्ते। जं अवगाढं दव्वं तं गिण्हइ न पुण वाहिरयं॥ ६८॥ एगपएसे वावरमाणे सव्वेसि होइ वावारो। अइनिविडहेमसंकल-गडियाण्णोन्नजुत्ताणं॥ ६९॥ तह कम्मवग्गणाणं मज्झगयं विंति कम्मुणो जोगं। इह गहणजोग अग्गहणवग्गणाणं च मंतरओ॥ ७०॥ सयगस्स उ वित्तीओ कम्मप्पयडीओ वा विउसेहिं। विन्नेयं अह साइय-मणाइयं वावि इयवयणे॥७१॥ अविसद्दाओ अधुवं भवो उ धुवं च बंधइ अभवो। चउफासमेत्थ मिउलहुफासदुगमवट्ठियं चेव॥ ७२॥ अन्नं च निद्धउण्हा निद्धासीया व रुक्खसीया य। रुक्खा उण्हा अविरुद्धफासजुयसहियचउफासा॥ ७३॥ पन्नत्तीभिप्पाया निद्धयरसीयउण्ह चउफासा। हुंतिण्हि भागपरूवणक्खदारं पवन्नेइ॥ ७४॥

आउयभागो थोवो नामे गोए समो तओ अहिओ। आवरणमंतराए तुल्लो अहिओ य मोहे वि ॥ ८९ ॥
सव्वुवरि वेयणीए भागो अहिगो य कारणं किन्तु। सुहदुक्खकारणत्ता ठिईविसेसेण सेसाणं ॥ ९० ॥

टी० इहायुर्बन्धकालेऽष्टविधं बध्नन् प्रतिसमयं यदनन्तस्कन्धात्मकं द्रव्यं गृण्हाति, तन्मध्यात्सर्वस्तोको भाग आयुष्करूपतया परिणमति। नामगोत्ररूपतया तु यः परिणमति, स स्वस्थाने द्वयोरपि समस्त आयुष्कभागात्त्वधिको विशेषाधिक इत्यर्थः। 'आवरणमंतराए'त्ति ज्ञानावरणदर्शनावरणान्तरायरूपतया तु यो भागः परिणमति, स स्वस्थाने त्रयाणामपि तुल्योऽधिकश्च, नामगोत्रापेक्षया विशेषाधिक इत्यर्थः, 'मोहे वि'त्ति न केवलं पूर्वोक्तकर्म्मणां भागो विशेषाधिको भवति, मोहनीयेऽपि कर्म्मणि यो द्रव्यभागः परिणमति सोऽप्यधिक इतीहापि सम्बध्यते, अनन्तरोक्तकर्म्मत्रयभागापेक्षया विशेषाधिक इत्यर्थः। 'सव्वुवरिं वेयणीए भागो अहिगो य'त्ति वेदनीयकर्म्मणि यो भागः परिणमति, स सर्वेषामपि शेषकर्म्मभागानामुपरि वर्त्तते। इदमुक्तं भवति-पूर्वोक्तकर्म्मभागानां सर्वेषामपि तावन्मोहनीयभाग उपरि जातस्ततोऽपि वेदनीयभाग उपरीति, कथम्भूत इत्याह-अधिको मोहनीयभागापेक्षयापि विशेषाधिक इत्यर्थः। चकारः पूर्वोक्तभागेभ्योऽपि विशेषार्थ एव 'कारणं किन्तु'त्ति अत्र च शिष्यः पृच्छति, किं पुनरिह कारणं येनोक्तक्रमेण कर्म्मणां भागाधिकत्वं भवतीत्यत्र वेदनीयस्य तद्भागाधिक्ये कारणमाह-'सुहदुक्खकारणत्त'त्ति सुखदुःखकारणत्वं हि वेदनीयं तद्भागपरिणताश्च पुद्गलाः स्वभावादेव प्रचुराः सन्तः स्वभावकार्यभूते सुखदुःखे स्फुटतरीकर्त्तुमलं, शेषकर्म्मपुद्गलास्त्वल्पा अपि स्वकार्यं निवर्त्तयन्ति, दृष्टं च पुद्गलानां स्वकार्यजनने अल्पबहुत्ववैचित्र्यं। यथा हि-घृ(प)ष्ट्यादिकदशनं बहुतरमुपभुक्तं तृप्तिलक्षणं स्वकार्यमातनोति। मद्यीकादिक

लेष्ट्वादिकं तु प्रचुरमित्येवमिहाप्युपनयः
स्वल्पमपि भुक्तं तृप्तिमुपकल्पयति, यथा वा विषं स्वल्पमपि मारणादिकं कार्यं साधयति स्वल्पमपि भुक्तं तृप्तिमुपकल्पयति सुखदुःखकारणत्वाद्वेदनीयस्य महान् भाग इति स्थितम्।
कार्यः, तस्मात् प्रभूता वेदनीयपुद्गलाःसुखदुःखे साधयन्ति इति सुखदुःखकारणत्वाद्वेदनीयस्य महान् भाग इति स्थितम्। शेषकर्मणां भागस्य हीनाधिकत्वे कारणमाह–'ठिइविसेसेणं सेसाणं'त्ति वेदनीयाच्छेषकर्म्मणामायुष्कादीनां भागस्य हीनत्वमा-
धिक्य वा विज्ञेयं, केनेत्याह–स्थितिविशेषेण हेतुभूतेन, यस्य नामगोत्रादेरायुष्काद्यपेक्षया महती स्थितिस्तस्य तदपेक्षया भागोऽपि महान्, यस्य त्वसौ हीना तस्य सोऽपि हीन इति हृदयम्। आह–ननु यदि स्थित्यनुरोधेन द्रव्यवृद्धिस्तर्ह्यायुष्कस्थितेर्नाम-
गोत्रस्थितिः सङ्ख्यातगुणवृद्धेति तयोर्द्रव्यभागोऽपि संख्यातगुणवृद्धः प्राप्नोति, कथं विशेषाधिक उक्तः? सत्यमेतत्, किन्तु नारकादिभवप्रायोग्यः सर्वोऽपि नरकगत्यादिकर्म्मनिवह आयुष्कोदयमूलस्तदुदय एव तस्योदयादत आयुष्कं प्रधानत्वाद्ध-
हुद्रव्यं लभते। यद्येवं तदपेक्षयाऽप्रधानत्वात् नामगोत्रयोर्भागस्य विशेषाधिकत्वं नोपपद्यत इति चेत्? सत्यम्, किन्तु नामगोत्रे ध्रुवबन्धित्वात् तदपेक्षया बहुतरं द्रव्यमवाप्नुतः, आयुष्कं तु कादाचित्कबन्धत्वादल्पं तदाप्नोति। एतदुक्तं भवति–शेषकर्मोद-
याक्षेपकत्वेन प्रधानत्वात् स्थित्यनुरोधेन सङ्ख्यातगुणहीनताप्राप्तावपि नामगोत्रापेक्षया किञ्चिन्न्यूनमेव भागमायुष्कं लभ्यते। नामगोत्रे त्वप्रधानतया हीनताप्राप्तावपि ध्रुवबन्धित्वात् तदपेक्षया विशेषाधिकमेव भागं लभत इति। ननु तथापि ज्ञानावरणी-
याद्यपेक्षया मोहनीयस्य सप्ततिसागरोपमकोटाकोटिलक्षणा स्थितिः सङ्ख्यातगुणेति भागोऽपि तस्य सङ्ख्यातगुणः प्राप्नोति, कथं विशेषाधिक उक्तः, सत्यम्, किन्त्वेकस्या एव दर्शनमोहलक्षणाया मिथ्यात्वप्रकृतेः सप्ततिसागरोपमकोटाकोटिलक्षणा
स्थितिश्चारित्रमोहनीयस्य तु कषायलक्षणस्य चत्वारिंशत्सागरोपमकोटाकोटिलक्षणैव स्थितिरेवं तदनुरोधेन विशेषाधिक एव

तद्भाग उक्तो, दर्शनमोहद्रव्य तु चारित्रमोहद्रव्यस्यानन्तभाग एवं वर्तत इति न किञ्चित्तेन वर्द्धत इति । युक्तिमात्रं चैतन्निश्चयतस्तु सर्वज्ञवचनप्रामाण्यादेवातीन्द्रियार्थप्रतिपत्तिः । भवत्वेवं तथाऽप्येकस्मिन् समये गृहीतद्रव्यस्य कथमष्टधा परिणामः ? कथं चैर भागादिकल्पना ? इति चेत् ? उच्यते-अचिन्त्यत्वाज्जीवशक्तेर्विचित्रत्वाच्च पुद्गलपरिणामस्य, जीवव्यतिरिक्तानामपि शक्रेन्द्रधनुरादिपुद्गलानां विचित्रा परिणतिर्दृश्यते, किमुत ! जीवपरिगृहीतानामित्यलं विस्तरेणेति । तदेवं सूत्रकृता मूलप्रकृतीनां भागप्ररूपणा कृता । उत्तरप्रकृतीनां तु ग्रन्थविस्तरभयादिकात् कुतश्चित्कारणाच्चेनासौ न कृतेति । सोपयोगत्वाद्विनेयानुग्रहार्थं सङ्क्षेपतो वयमेव तां ब्रूमः । तत्र ज्ञानावरणस्य पञ्च तावदुत्तरप्रकृतयः, केवलज्ञानावरणलक्षणा एका सर्वघातिनी, शेषास्तु मतिज्ञानावरणाद्याश्चतस्रो देशघातिन्यः । तत्र ज्ञानावरणभागे यद् द्रव्यमागच्छति, तन्मध्ये सर्वघातिनां तीव्ररसेन युक्तं यद् द्रव्य तदल्पं शेषद्रव्यस्यानन्तभागवर्त्यैव, तच्च केवलज्ञानावरणभागतयैव परिणमति । शेषं तु देशघातिद्रव्यं चतुर्भिर्भागैर्भूत्वा शेषप्रकृतिचतुष्टयरूपतया परिणमति । दर्शनावरणस्य तु केवलदर्शनावरणं निद्रापञ्चकं चेति षट् सर्वघातिन्यचक्षुर्दर्शनावरणाद्यास्तु शेषास्तिस्रो देशघातिन्य इति सर्वा अपि नवोत्तरप्रकृतयः । तत्र दर्शनावरणभागे यदागच्छति द्रव्यं तन्मध्येऽपि सर्वघातिरसयुक्तं शेषस्यानन्तभागवर्त्यैव, तच्च षड्भिर्भागैः सम्भूय सर्वघातिषट्प्रकृतिरूपतया परिणमति, शेषं तु देशघातिरसयुक्तं शेषदेशघातिप्रकृतित्रयरूपतया परिणमति । वेदनीयस्य सातासातरूपे द्वे उत्तरप्रकृती । अत्र चैकस्मिन् कालेऽनयोरेकैव बध्यते । ततो वेदनीयभागलब्धं द्रव्यमेकस्या एव बध्यमानप्रकृतेः सर्वं भवति । मोहनीयस्य मिथ्यात्वं द्वादश कषायाश्चाद्याः सर्वघातिनश्चत्वारः सञ्ज्वलना नव नोकषायाश्च देशघातिन इत्येताः षड्विंशतिरुत्तरप्रकृतयो बध्यन्ते । तत्र

मोहनीयभागे यद् द्रव्यमागच्छति तन्मध्येऽपि सर्वघातिरसयुक्तं द्रव्यं शेषस्यानन्तभाग एव लभ्यते । तन्मध्याद्दर्शनमोहलक्षण-स्य मिथ्यात्वस्यैको भागो भवति, द्वितीयस्तु चारित्रमोहस्य, स पुनराद्यकषायद्वादशकस्यैवं द्वादशभिः भागैः परिणमति । शेषं तु देशघातिद्रव्यं द्विधा परिणमति, कषायरूपतया, नोकषायरूपतया च । कषायरूपतया यत्परिणतं तत्पुनरपि सञ्ज्वलनचतुष्टयभेदाच्चतुर्धा परिणमति । नोकषायस्त्वेकस्मिन् काले पञ्चैव बध्यन्ते । तद्यथा-वेदत्रयमध्यादेको वेदो, हास्यरत्यरति-शोकयुगलयोर्मध्येऽन्यतरयुगलम्, भयम्, जुगुप्सा चेत्यतो नोकषायरूपतया यत्परिणतं द्रव्यं तत्पञ्चभिर्भागैः परिणमति । आयुष्कस्य नारकायुष्काद्याश्चतस्र उत्तरप्रकृतय एतासु च मध्ये एकस्मिन् काले एकैव बध्यते, अत आयुष्कभागलब्धं द्रव्यं बध्यमानाया एकस्या एव प्रकृतेर्भवति । नाम्नस्तु सप्तषष्टिरुत्तरप्रकृतयो बन्धेऽधिक्रियन्ते । तत्र चैकस्मिन् समये त्रयोविंश-त्यादिकाः पूर्वोक्तस्वरूपाः प्रकृतयो बध्यन्ते । अतो यावत्य एकस्मिन् काले बध्यमानाः प्रकृतयो भवन्ति, तावद्भिर्भागैर्ना-मभागलब्धं द्रव्यं परिणमति । वर्णगन्धरसस्पर्शानां च भागे यदागच्छति, तत्पुनरपि विंशत्या भागैः परिणमति । ते हि विंश-तिभेदा अपि केवलज्ञानावरणादिवद् ध्रुवबन्धित्वात् सदैव बध्यन्त इति । गोत्रस्योच्चैर्नीचैर्गोत्रलक्षणे द्वे एवोत्तरप्रकृती । अन-योश्चैकस्मिन् काले एकैव बध्यते, अतो गोत्रभागलब्धं द्रव्यं बध्यमानाया एकस्या एव प्रकृतेः सर्वं भवति । अन्तरायस्य तु दानान्तरायाद्याः पञ्चोत्तरप्रकृतयः सदा बध्यन्ते इत्यन्तरायभागलब्धं द्रव्यं पञ्चभिर्भागैः सम्पद्यन्त इति । इह च यस्या उत्त-रप्रकृतेर्बन्धो व्यवच्छिद्यते, तद्भागद्रव्यं यावत्समानजातीया एकापि प्रकृतिर्बध्यते, तावत्तस्या एव तद्भवति, यदा तु समान-जातीया अपि सर्वा व्यवच्छिद्यन्ते, न च मिथ्यात्वादेरिवापरासमानजातीया प्रकृतिरस्ति, तदा तद्भागद्रव्यं सर्वमपि स्वमू-

लप्रकृत्यन्तर्गतानां विजातीयप्रकृतीनामपि भवति । यदा तु ता अपि व्यवच्छिद्यन्ते, तदा सर्वमप्यन्यस्या मूलप्रकृतेर्भवति । अत्र निदर्शनं यथा स्त्यानर्द्धित्रिकबन्धे व्यवच्छिन्ने तद्भागद्रव्यं समानजातीयत्वान्निद्राप्रचलयोर्भवति । तयोरपि बन्धव्यवच्छेदे स्वमूलप्रकृत्यन्तर्गतानां चक्षुर्दर्शनावरणादीनां विजातीयानामपि भवति । तेषामपि बन्धव्यवच्छेदे उपशान्ताद्यवस्थायां सर्वं वेदनीयस्यैव भवति । मिथ्यात्वादेस्तु समानजातीया प्रकृतिर्नास्त्यतस्तद्व्यवच्छेदे तद्भागद्रव्यं विजातीयप्रकृतीनामेव क्रोधादीनां भवत्येवमन्यत्रापि स्वधियाऽभ्यूह्यमित्यत्र बहु वक्तव्यम्, तत्तु ग्रन्थविस्तरभयान्नोच्यत इति गाथाद्वयार्थः ॥८९॥ ९० ॥ तदेवमवसितं भागद्वारम्, साम्प्रतं साद्यादिप्ररूपणां चिकीर्षुराह—

भा० आउयभागो इणाइ गाहजुयलेण तत्थ उवसंतो । आई धरित्तु सव्वे वेयणियं चेव बंधंति ॥ ७५ ॥ वेयणियकम्मदव्वं वेयणियस्सेव होइ नन्नेसिं । तह सुहुमसंपराओ य छव्विहं बंधए कम्मं ॥ ७६ ॥ तेण गिहीयं दव्वं भागेहिं छहि उ परिणमइ तह य । सगडविहबंधगाणं सगडभागेहिं परिणमइ ॥ ७७ ॥ अट्ठविहबंधगं पइ आउगभागो इमाइ गाहदुगं । मूलपयडीउ आसज्ज वन्नियं भागदारं ति ॥ ७८ ॥ तहिं थोवत्ते तुल्लत्तणंमि अहिगत्तणंमिं चालणया । भावत्थजुयं सव्वं उत्तरदाणाइयं तह य ॥ ७९ ॥ उत्तरपयडीणं पिहु भागाइपवत्तणे उ सव्वा वि । संखेवओ नओत्ता सा नेया सयगविन्तीओ ॥ ८० ॥ किंची पुण विउसेहिं समईए एत्थ ऊहियव्वं ति । एत्तो भणेमि संपइ सायाइपरूवणादारं ॥ ८१ ॥

छण्हंपि अणुक्कोसो पएसबंधे चउव्विहो बंधो । सेसतिगे दुविगप्पो मोहाउयसव्वहिं चेव ॥ ९१ ॥

टी० अपिशब्द एवकारार्थो भिन्नक्रमश्च । षण्णां ज्ञानावरणदर्शनावरणवेदनीयनामगोत्रान्तरायलक्षणानां कर्मणामनु-

त्कृष्ट एव प्रदेशबन्धे चतुर्विधः साद्यनादिध्रुवाध्रुवलक्षणो बन्धो भवति । इह तावद्यत्र सर्वबहवः कर्मस्कन्धा गृह्यन्ते स उत्कृष्टप्रदेशबन्धस्ततः स्कन्धहानिमाश्रित्य यावत्सर्वस्तोककर्मस्कन्धग्रहणं तावत्सर्वोऽप्यनुत्कृष्ट इत्युत्कृष्टानुत्कृष्टप्रकाराभ्यां सर्वोऽपि प्रदेशबन्धः सङ्गृहीतः । यत्र सर्वस्तोककर्मस्कन्धग्रहणं स जघन्यप्रदेशबन्धस्ततः एकस्कन्धवृद्धिमादौ कृत्वा यावत्सर्वबहुस्कन्धग्रहणं तावत्सर्वोऽप्यजघन्य इति । जघन्याजघन्यप्रकाराभ्यां वा सर्वोऽपि प्रदेशबन्धः सङ्गृहीत इत्यनया परिभाषयाऽमीषां षण्णां कर्मणामनुत्कृष्टः प्रदेशबन्धः साद्यादिचतुर्विकल्पो भवतीत्यर्थः । तथा हि—प्रस्तुतकर्मषट्कविषयः क्षपकस्योपशमकस्य वा सूक्ष्मसम्परायस्य सर्वोत्कृष्टयोगे वर्तमानस्यैकं द्वौ वा समयौ यावदुत्कृष्टः प्रदेशबन्धः प्राप्यते । सूक्ष्मसम्परायो हि मोहनीयायुःकर्मद्वयं न बध्नाति, किं त्वेतदेव प्रस्तुतकर्मषट्कं बध्नात्यतो मोहनीयायुर्भागयोरत्रैव कर्मषट्के प्रवेशाद्बहुद्रव्यमिह लभ्यत इति सूक्ष्मसम्परायग्रहणम् । उत्कृष्टश्च प्रदेशबन्धो वक्ष्यमाणनीत्या उत्कृष्टेनैव योगेन भवतीत्युत्कृष्टयोगग्रहणम् । उत्कृष्टयोगावस्थानकालश्चैतावानेव भवतीत्येकद्विसमयग्रहणम् । एवं चोत्कृष्टप्रदेशबन्धं कृत्वा उपशान्तमोहावस्थां चारुह्य पुनः प्रतिपत्योत्कृष्टयोगाद्वाऽथैव प्रतिपत्य यदाऽनुत्कृष्टं प्रदेशबन्धं करोति, तदाऽसौ सादिरेतच्च स्थानमप्राप्तपूर्वाणामनादिः, सदा निरन्तरं बध्यमानत्वात् । ध्रुवाध्रुवावभव्याभव्ययोः पूर्ववत् । 'सेसतिगे दुविगप्पो' त्ति भणितशेषे जघन्याजघन्योत्कृष्टप्रदेशबन्धलक्षणे त्रिके द्विविकल्पः साद्यध्रुवलक्षणो बन्धो भवति । तत्रानुत्कृष्टभणनप्रसङ्गेनोत्कृष्टः सूक्ष्मसम्परायेऽनन्तरं दर्शितः । स च तत्प्रथमतया बध्यमानत्वात् सादिः । उपशान्ताद्यवस्थायां पुनरनुत्कृष्टबन्धगमने वाऽवश्यं न भवतीत्यध्रुवः । जघन्यः पुनरमीषां षण्णां कर्मणां प्रदेशबन्धोऽपर्याप्तस्य सर्वमन्दवीर्यलब्धिकस्य सप्तविधबन्धकस्य सूक्ष्मनिगोदस्य भवाद्यसमये लभ्यते ।

जघन्यप्रदेशबन्धो हि जघन्ययोगेन भवतीति वक्ष्यति । स चास्यैव यथोक्तविशेषणविशिष्टस्य लभ्यते । द्वितीयादिसमयेषु त्वसङ्ख्येयगुणवृद्धिना वीर्येण वर्द्धत इति भवाद्यसमयग्रहणम् । द्वितीयादिसमयेष्वयमप्यजघन्यं बध्नाति, पुनः सङ्ख्यातेनासङ्ख्यातेन वा कालेन पूर्वोक्तजघन्ययोगं प्राप्य स एव जघन्यं प्रदेशबन्धं करोति, पुनरजघन्यमित्येवं जघन्याजघन्यप्रदेशबन्धयोः संसरतामसुमतां द्वावप्येतौ साद्यध्रुवौ भवतः । 'मोहाउयसवहिं चेव 'त्ति मोहायुषोः सर्वस्यैवोत्कृष्टेऽनुत्कृष्टे जघन्येऽजघन्ये च प्रदेशबन्धे 'दुविगप्पो 'त्तीहापि सम्बध्यते, द्विविकल्पः साद्यध्रुवलक्षण एव बन्धो भवति। तत्र मिथ्यादृष्टिः सम्यग्दृष्टिर्वाऽनिवृत्तिबादरान्तः सप्तविधबन्धकाले उत्कृष्टयोगे वर्त्तमानो मोहनीयस्योत्कृष्टप्रदेशबन्धं करोति, पुनरनुत्कृष्टयोगं प्राप्यानुत्कृष्टं प्रदेशबन्धं करोति, पुनरुत्कृष्टं पुनरप्यनुत्कृष्टमित्येवमुत्कृष्टानुत्कृष्टप्रदेशबन्धयोः संसरतां जन्तूनां मोहस्योत्कृष्टानुत्कृष्टप्रदेशबन्धौ द्वावपि साद्यध्रुवौ भवतः। जघन्याजघन्यौ प्रदेशबन्धौ यथा सूक्ष्मनिगोदादिषु संसरतां जन्तूनां कर्मपट्कस्यानन्तरमेवभावितौ, तथात्रापि निर्विशेषं भावनीयौ । आयुष्कस्य ध्रुवबन्धित्वादेव तत् प्रदेशबन्ध उत्कृष्टादिचतुर्विकल्पोऽपि साद्यध्रुव एव भवतीति गाथार्थः ॥ ९१ ॥ तदेवं कृता मूलप्रकृतीनां साद्यादिप्ररूपणा, साम्प्रतं उत्तरप्रकृतीनां तामाह--

भा० छण्हं गाहाए छण्ह मोहाउयविरहियाण पयडीण। अणुक्कोसथोवे (पएस) बंधे सायाइचउविहो बंधो ॥८२॥ होइ तस्स य उवसामगस्स खवगस्स वा वि दसमगुणे। छक्कम्माई बंधंतयस्स मोहणियआऊणं ॥८३॥ भागाण कम्मबंधम्मि संपवेसाउ एत्थ बहु दवं। लब्भइ तो दसमगुणो मव्वुक्कोसम्मि जोगम्मि ॥ ८४ ॥ वट्टमाणस्स एगं दुगं च समयाउ जाव उक्कोसो। होई पएसबंधो पएसबंध तमुक्कोसं ॥ ८५ ॥ एक्कारित्ता उवसामगवत्थागयो चिय पुण वि परिवडिय। अहवा तत्थेव ठिओ उक्कोस-

जोगा उ परिवड्डिय ॥ ८६ ॥ थोवं पएसबंधं तस्स करितस्स साइओ बंधो । तं ठाणमपत्तस्स उ अणाइबंधो मुणयव्वो ॥ ८७ ॥ सेसतिगे उक्कोसे जहन्नअजहन्नयम्मि बंधतिगे । दुविगप्पो साईअ-धुवलक्खणो होइ किर बंधो ॥ ८८ ॥ तत्थ अणुक्किट्ठखवण-प्पसंगओ सुहुमसम्परायम्मि । भणिओ पएसबंधो उक्कोसो सो य किर पढमं ॥ ८९ ॥ बंधंतस्स उ साई तहो-वसंताउ परिवडंतस्स । तत्थेवोक्किट्ठजोगओ य अणुक्किट्ठजोगम्मि ॥ ९० ॥ गच्छंतस्स उक्किट्ठो न होइ तो तत्थ अधुवओ बंधो । होइ जहन्नओ पुण छण्हं कम्माण एएसिं ॥ ९१ ॥ होई पएसबंधो सुहुमनिगोयस्स अप्पजत्तस्स । सव्वअइमंदवीरिय-लद्धीजुत्तस्स सत्तस्स ॥ ९२ ॥ सत्तविहं बंधगस्स उ अजहन्नजोगित्तणे पढमगम्मि । भवसमयम्मि जहन्नो पएसबंधो फुडं होई ॥ ९३ ॥ तस्सेव निगोयस्स उ भवदुवितुरियाइएसु समएसु । अजहन्नो सो होई असंखगुणविरियजुत्तस्स ॥ ९४ ॥ तो पुण संखेज्जेणं असंखकालेण वा वि पुज्जुत्त । पाविज्जजहन्नजोगं स एव बंधं जहन्नं तु ॥९५॥ पकरइ पएसबंधं पुण अजहन्नं इमाए रीईए । संसारम्मि अणंते परिब्भमंताण जीवाणं ॥९६॥ अजहन्नजहन्ने पएसबंधे य दोवि किर हुंति । साईय अधुवबंधो अह पभणइ मोहआऊणं ॥ ९७ ॥ तत्थय किर मोहआउयसव्वहिं चेव इय पएससत्थो । सव्वत्थ य उक्किट्ठे अणुक्किट्ठजहन्नअजहन्ने ॥ ९८ ॥ सेसतिगे च इहं पि य दुविगप्पो साइअधुवओ होइ । तहि मिच्छो इयरो वा अनियट्टी बायरो जाव ॥ ९९ ॥ सत्तविहबंधकाले उक्कोसजोगम्मि वट्टमाणो उ । मोहणियस्सुक्कोसं पएसबंधं किर विहेइ ॥ ८०० ॥ पुणरवि अणुक्किट्ठं पि य जोगं पाविज्जु कुणइ अणुक्किट्ठं । बंधं पुण उक्किट्ठं अणुक्किट्ठं पुण वि बंधेइ ॥ १ ॥ एवं उक्किट्ठ अणुक्किट्ठएसु दोसु वि पएसबंधेसु । साइअधुवरूवा दोवि विगप्पा भवंतेव ॥ २ ॥ जह सुहुमनिगोयाइसु एत्थ जीवाण संसरंताण । अजहन्न जहन्नबंधा एत्थेवाणं-

तरं छन्हं ॥ ३ ॥ कम्माणं परिकहिया तहेव मोहे वि निविसेसेणं । विन्नेया दुविगप्पा आउं पुण अधुवबंधंता ॥ ४ ॥ उक्किट्ठाई चउविह-पएसबंधं पि साइअधुवेहिं । दोहि विगप्पेहि जुयं जीवाण बंधंति संसारे ॥ ५ ॥ सायाइपरूवणत्तिच मूलपयडीण छण्हगाहाए । भणिया संपइ उत्तर-पयडीणं सा परूवेइ ॥ ६ ॥

तीसण्हमणुक्कोसो उत्तरपयडीसु चउविहो बंधो । सेसतिगे दुविगप्पो सेसासुं चउविगप्पो वि ॥९२॥

टी० ज्ञानावरणपञ्चकस्त्यानर्द्धित्रिकवर्जदर्शनावरणषट्कानन्तानुबन्धिवर्जकषायद्वादशकभयजुगुप्सान्तरायपञ्चकलक्षणानामुत्तरप्रकृतिषु मध्ये त्रिंशतः प्रकृतीनामप्यनुत्कृष्टो बन्ध इत्युत्तरेण सम्बन्धः । ततश्चानुत्कृष्टो बन्धः–प्रदेशबन्धः । 'चउविहो' त्ति साधनादिध्रुवाध्रुवरूपश्चतुर्विकल्पोऽपि भवतीत्यर्थः । तथाहि–ज्ञानावरणपञ्चकस्यान्तरायपञ्चकस्य चानुत्कृष्टप्रदेशबन्धो यथा मूलप्रकृतिषट्कस्य साद्यादिचतुर्विकल्पो भावितस्तथा भावनीयः । चक्षुरचक्षुरवधिकेवलदर्शनावरणचतुष्कस्यापि तथैव । केवलं तत्र मोहनीयायुर्भागलाभाधिक्यमेवोक्तमत्र तु निद्रापञ्चकभागलाभाधिक्यमपि वाच्यम् । निद्राद्विकस्य त्वविरतसम्यग्दृष्ट्यादयो अपूर्वकरणान्ताः सर्वोत्कृष्टयोगवृत्तयः सप्तविधबन्धकाले एकं द्वौ वा समयावुत्कृष्टप्रदेशबन्धं कुर्वन्ति । आयुर्दलभागोऽधिको लभ्यत इति सप्तविधबन्धकग्रहणम्, स्त्यानर्द्धित्रिकं सम्यग्दृष्टयो न बध्नन्ति, अतस्तद्भागलाभोऽपि भवतीति सम्यग्दृष्टीनामेव ग्रहणम्, मिथ्यादृष्टिसास्वादनौ स्त्यानर्द्धित्रिकं बध्नीत इति नेह गृहीतौ, मिश्रस्त्वेतन्न बध्नाति, केवलं वक्ष्यमाणनीत्या तस्योत्कृष्टयोगो न लभ्यत इति सोऽपि नेहाधिकृतः एते चाविरतसम्यग्दृष्ट्यादयो यदोत्कृष्टयोगाद्बन्धव्यवच्छेदाद्वा प्रतिपत्यानुत्कृष्टं प्रदेशबन्धमुपकल्पयन्ति, तदाऽसौ सादिः । सम्यक्त्वसहितं चोत्कृष्टयोगमप्राप्तपूर्वाणामनादिः

ध्रुवाध्रुवौ तथैव। अप्रत्याख्यानावरणकषायचतुष्टयस्योत्कृष्टयोगोऽविरतसम्यग्दृष्टिः सप्तविधबन्धक उत्कृष्टं प्रदेशबन्धं करोति। मिथ्यात्वमनन्तानुबन्धिनश्चासौ न बध्नात्यतस्तद्भागद्रव्यमधिकं लभ्यत इत्यस्यैव ग्रहणम्। मिथ्यादृष्टिर्मिथ्यात्वमनन्तानुबन्धिनश्च, सास्वादनस्त्वनन्तानुबन्धिनो बध्नातीति तयोरग्रहणम्, मिश्रस्त्वेतानि न बध्नाति, किन्तु तद् ग्रहणे कारणं पूर्वोक्तम्। देशविरतादयस्त्वप्रत्याख्यानावरणान्न बध्नातीति शेषव्युदासेनाविरतसम्यग्दृष्टिरेवाधिकृतः। प्रत्याख्यानावरणचतुष्टयस्योत्कृष्टयोगो देशविरतः सप्तविधबन्धक उत्कृष्टप्रदेशबन्धं करोति, अप्रत्याख्यानावरणानामप्यसावबन्धकोऽतस्तद्भागोऽधिको लभ्यत इति कृत्वा। भयजुगुप्सयोः सम्यग्दृष्टिरविरतादिरपूर्वकरणान्त उत्कृष्टयोगे वर्त्तमान उत्कृष्टं प्रदेशबन्धं करोति। मिथ्यात्वभागो लभ्यत इति सम्यग्दृष्टिग्रहणम्। कषायभागः पुनः सजातित्वात्कषायाणामेव भवति, नैतयोः। मिथ्यादृष्टिस्तु मिथ्यात्वं बध्नातीति मिथ्यात्वभागो न लभ्यत इति तस्येहाग्रहणम्। सास्वादनमिश्रयोस्तु लभ्यते मिथ्यात्वभागः, परमग्रे वक्ष्यमाणनीत्या तयोरुत्कृष्टयोगो न लभ्यत इति तावपि नेहाधिकृतौ। अपूर्वकरणोपरिवर्त्तिनस्तु भयजुगुप्से न बध्नन्तीत्यपूर्वकरणान्तविशेषणम्। सञ्ज्वलनक्रोधस्यानिवृत्तिबादरः पुंवेदबन्धव्यवच्छिन्ने सञ्ज्वलनक्रोधादिचतुष्टयं बध्नन्नुत्कृष्टयोगे स्थित उत्कृष्टं प्रदेशबन्धं करोति, मिथ्यात्वाद्यकषायद्वादशभागः सर्वनोकषायभागश्च लभ्यत इति कृत्वा। मानसञ्ज्वलनस्य स एव सञ्ज्वलनक्रोधबन्धे व्यवच्छिन्ने मानादिसञ्ज्वलनत्रयं बध्नन्नुत्कृष्टं करोति, क्रोधभागो लभ्यत इति कृत्वा। स एव मानबन्धे व्यवच्छिन्ने मायालोभौ बध्नन्मायाया उत्कृष्टं करोति, मानभागोऽपि लभ्यत इति कृत्वा। स एव मायाबन्धे व्यवच्छिन्ने लोभमेक बध्नंस्तस्यैवोत्कृष्टं करोति एकं द्वौ वा समयौ। एतच्च विशेषणं प्रागपि द्रष्टव्यम्।

समस्तमोहनीयभागस्तत्र लभ्यत इति मोहबन्धकस्यैव ग्रहणम् । तदेवमविरतसम्यग्दृष्ट्यादिस्थानेष्वप्रत्याख्यानावरणादिप्रकृतीनामुत्कृष्टः प्रदेशबन्धो दर्शितः । एते चाविरतादयस्तत्तत्प्रकृतीनां बन्धव्यवच्छेदादुत्कृष्टयोगाद्वा प्रतिपत्य यदा पुनरनुत्कृष्टप्रदेशबन्धं कुर्वन्ति, तदाऽसौ सादिस्तत्स्थानमप्राप्तपूर्वाणामनादिर्ध्रुवाध्रुवौ पूर्ववत् । तदेवं त्रिंशतः प्रकृतीनामनुत्कृष्टः प्रदेशबन्धः साद्यादिश्चतुर्विकल्पोऽपि भावितः । शेषे जघन्यादी माह—'सेसतिगे दुविगप्पो'त्ति भणितशेषेऽनुत्कृष्टजघन्याजघन्यप्रदेशबन्धलक्षणे त्रिके द्विविकल्पः । साद्यध्रुवलक्षणो बन्धो भवतीत्यर्थः, तत्रानुत्कृष्टभणनक्रमेणोत्कृष्टबन्धस्त्रिंशतोऽपि प्रकृतीनां सूक्ष्मसम्परायादिषु दर्शितः । स च नत्मयपतया बध्यमानत्वात् सादिः । सर्वथा बन्धाभावेऽनुत्कृष्टबन्धसम्भवे चाऽवश्यं न भवतीत्यध्रुवः । जघन्याजघन्यप्रदेशबन्धौ त्वासां त्रिंशतोऽपि प्रकृतीनां यथासूक्ष्मनिगोदादिषु संसरतामसुमतां ज्ञानावरणादिमूलप्रकृतीनां साद्यध्रुवौ भावितौ, तथाऽत्रापि भावनीयौ । 'सेसासुं चउविगप्पो वि'त्ति भणितत्रिंशतः शेषासु स्त्यानर्द्धित्रिकमिथ्यात्वानन्तानुबन्धिचतुष्टयवर्णादिचतुष्कतैजसकार्मणागुरुलघूपघातनिर्माणलक्षणासु सप्तदशसु ध्रुवबन्धिनीषु, पूर्वोक्तरूपासु च त्रिसप्तत्यध्रुवबन्धिनीषूत्कृष्टानुत्कृष्टजघन्याजघन्यलक्षणश्चतुर्विकल्पोऽपि प्रदेशबन्धो 'दुविगप्पो'त्ती इत्येतदत्रापि सम्बध्यते, द्विविकल्पः सादिरध्रुवश्च भवति । तथा ह्यध्रुवबन्धिनीनामध्रुवबन्धित्वादेवोत्कृष्टादिरूपस्तत्प्रदेशबन्धः सर्वोऽपि साद्यध्रुव एव भवति । स्त्यानर्द्धित्रिकमिथ्यात्वानन्तानुबन्धिनां सप्तविधबन्धक उत्कृष्टयोगे वर्तमानो मिथ्यादृष्टिरुत्कृष्टं प्रदेशबन्धमेकं द्वौ वा समयौ यावत्करोति सम्यग्दृष्टिस्तु ता न बध्नातीति मिथ्यादृष्टिग्रहणम् । मिथ्यात्ववर्ज्यान्येतानि सास्वादनोऽपि बध्नाति, परं वक्ष्यमाणनीत्योत्कृष्टयोगो न लभ्यत इति तस्याग्रहणम् । उत्कृष्टयोगस्यैतावानेव काल इत्येक-

द्विसमयनियमः। उत्कृष्टयोगात् प्रतिपत्य स एवानुत्कृष्टप्रदेशबन्धं करोति, पुनः स एवोत्कृष्टं पुनरनुत्कृष्टमित्येवं द्वावप्येतौ साद्यध्रुवौ। जघन्यप्रदेशबन्धं पुनरेतासां सर्वजघन्यवीर्यलब्धिर्भवाद्यसमये वर्तमानः सप्तविधं बध्नन्नपर्याप्तसूक्ष्मनिगोदः करोति। द्वितीयादिसमयेषु च स एवाजघन्यं करोति, कालान्तरेण पुनः स एव जघन्यमित्येतावपि द्वौ साद्यध्रुवौ भवतः। विशेषणसाफल्यादिभावना त्वत्र मूलप्रकृतिवद्वाच्याः। शेषवर्णादिप्रकृतिनवकस्याप्युत्कृष्टानुत्कृष्टौ जघन्याजघन्यौ च प्रदेशबन्धौ साद्यध्रुवौ एवमेव वाच्यौ। नवरमुत्कृष्टयोगो मूलप्रकृतिसप्तकबन्धको नाम्नस्त्रयोविंशतिमुत्तरप्रकृतीर्बध्नन् मिथ्यादृष्टिरुत्कृष्टप्रदेशबन्धको वाच्यः, शेषं तथैव। नाम्नो हि पञ्चविंशत्यादिबन्धग्रहणे बहवो भागा भवन्तीति त्रयोविंशतिबन्धग्रहणमिति गाथार्थः॥ ९१॥ तदेवं कृता साद्यादिप्ररूपणा, साम्प्रतमुत्कृष्टेतरप्रदेशबन्धस्यैव स्वामित्वं चिन्तयन्नाह–

भा० तीसन्हं गाहाए नाणपणग अंतराइए पंच। अणबंधिचउगरहियं सेसकसायाण बारसगं॥ ७॥ थीणतिगरहियदंसण–छगं दुगुंछा भयं च इय तीसं। एएसि अणुकोसो साथाइचउविहो बंधो॥ ८॥ होई जहएत्यय मूलपयडिछक्कस्सगुक्कसबंधो। पुव्विं भणिओ तहय इह निव्विसेसोंतरायस्स॥ ९॥ नाणस्स य चउभेओ विन्नेओ दंसणस्स चउगे वि। एसेव विही नवरं तहि मोहणियाउभागाणं॥ १०॥ लाभस्स उ अहिगत्तं उत्तं एत्थं तु निद्दपणगस्स। लाभस्स वि अहिगत्तं भणियव्वं तत्थिमो भावो॥ ११॥ निद्दादुगस्स अविरयसम्माईया अपुव्वकरणंता। सत्तविहबंधकाले सव्वुक्कोसम्मि जोगम्मि॥ १२॥ वट्टंता एगं दो वा समया उक्कसं पएसाणं। बंधं करंति तत्थ य आउयभागो तहिं अहिगो॥ १३॥ लब्भइ तवो गहणंय सत्तविहबंधगस्स इह पंकयं। थीणद्धितिगं पुण सम्मदिट्ठिणो नेव बंधंति॥ १४॥ थीणतिगभा–

गाणं लाभो वि य जेण होइ फिर अहिगो । तेणं एत्थं सम्माइयाणगहणं कयं नेयं ॥ १५ ॥ तह थीणतिगं मिच्छो सासाणो वि य पबंधए जेणं । तेणात्थ ते न वुत्ता मिस्सो वि न बंधए एयं ॥ १६ ॥ थीणतिगं नवरं वक्खमाणनीईइ तस्स उक्कोसो । जोगो न लब्भई इइ सो विय नेवेत्थ अहिगरिओ ॥ १७ ॥ एवं ठिए अविरयपभिइणो उक्कोसजोगओ जइया । बन्धंधछेयओ वा परिवडियअणुक्कसं बंधं ॥१८॥ पकरंति तया बंधो सो साई सम्मसहियमुक्कोसं। जोगं अपत्तपुवाणं होइ अणाइ इह बंधो ॥ १९ ॥ पुवंपिर धुवअधुवा बंधा नेया तहा कसायाण । अपच्चक्खाणाण चउक्कगस्स उक्कोसजोगजुओ ॥ २० ॥ अविरयसम्मो सत्तविहबंधगो उक्कसं कुणइ बंधं । एसो नो मिच्छत्तं पढमकसाया य बंधेइ ॥ २१ ॥ ता तब्भागो अहिओ लब्भइ एत्थं अओ इमो गहिओ । जेणं मिच्छो मिच्छं बंधेइ पढमिगकसाया ॥२३॥ सासो पढमकसाए बंधइ तेणं इमे उ नो गहिया । मोमदिट्ठिस्स ओ भणियं अगहणे कारणं पुव ॥ २२ ॥ देसविरयाइया पुण बीयकसायाओनेव बंधंति । इय सेसजियचाएण सम्मदिट्ठी इहं गहिओ ॥ २४ ॥ तइयकसायचउक्कस्स देसविरओ उ जोगउक्कोसो । सत्तविहबंधगो संविहेइ उक्कोसगं बंधं ॥ २५ ॥ दुइयकसायाण अबंधगो उ एसो अओ उ तब्भागो । एत्थं अहिओ लब्भइ देसविरयस्स उ तो गहणं ॥२६॥ अविरयसम्माईया अपुव्वकरणंतया उ बंधंतो । वि दुगुच्छभए उक्कोसजोगया उक्कसं बंधं ॥ २७ ॥ बंधंति मिच्छभागो लब्भई सम्मदिट्ठिणो गहणं । नियजाइत्ता होई कसायभागो कसायाणं ॥ २८ ॥ मिच्छदिट्ठी मिच्छस्स बंधगो नो लहेइ तब्भागं । इय तस्सागहणं मिस्स–सासणे पुण लहंतेवं ॥२९॥ मिच्छथीयं मागं नवरं इह वक्खमाणनीईए । तेसिं उक्कडजोगो नो लब्भइ तेण ते एत्थ ॥ ३० ॥ नो भणिया अनियट्टिपभीईया भयदुगुंछपयडीओ । नो बंधंतीह तओ अपुव्वकरणंतया

पयडीणं ॥ ४८ ॥ पत्तेयं दुविगप्पो साइअधुवप्पभेयओ भणिओ । तह भणियव्वो एत्थंपि सोवओगेहिं निस्सेसो ॥ ४९ ॥
सेसासु चउविगप्पो इयवयणा सेसियाउ तीसाए । अन्ना जा पयडीओ तासुं हवइ चउविगप्पो ॥ ५० ॥ ताओ पुण पय-
डीओ थीणद्धितिगं तहेव मिच्छत्तं । अणंताणुबंधिचउगं वन्नाइचउक्कयं च तहा ॥ ५१ ॥ तेयकम्मागुरुलहुउवघायनिम्माण इई
सत्तरसा । धुवबंधिणी उ एया अद्धुवबंधो उ पुण एया॥५२॥ उरलविउव्वाहारग २ दुगाणि गइ ४ जाइ ५ खगइ २ अणुपुव्वी ४ ।
संघयणा ६ गी ६ तसवीसु २० सास १ तित्था १ य दु १ ज्जोयं १ ॥ ५३ ॥ परघायं वेयणियाउगोय २ हासाइदुजुय-
लतिवेयं ३ । विग्घावरण विणा एया तेवत्तरि अधुवबंधा ॥ ५४ ॥ इय नउई पयडीओ उक्किट्ठणुक्किट्ठजहन्नअजहन्नो । चउविह-
पएसबंधो पत्तेयं होइ दुविगप्पो ॥ ५५ ॥ साइअधुवप्पभेया तत्थ य पयडीण अधुवबंधीणं । अद्धुवबंधित्ताओ उक्किट्ठाई
चउविहो वि ॥५६॥ बंधो दु(चउ)विगप्पोत्ति ई अविसहाउ होइ दुविगप्पो । साई तह अधुवो वि तह थीणतिगस्स मिच्छस्स
॥ ५७ ॥ अणुबंधीचउगस्स य मिच्छो सत्तविहबंधगो जीवो । उक्कसजोगो एगं दो वा समया–कुणइ बंधं ॥ ५८ ॥ सम्मो
पुण एयाइं नो बंधइ -तेण मिच्छगहणंति । सासायणो वि एयाणि मिच्छरहियाणि बंधेइ ॥ ५९ ॥ नवरं उक्कसजोगो न
लब्भए वक्खमाणनीईए । इय तस्स वि अगहण इगदुसमयनियमओ ओ पुणो ॥ ६० ॥ उक्कोसजोगिस्सेव उक्कोसजोगस्स
पत्तिओ कालो । उक्कस्सजोगाओ परिवडिउ सो चेव अणुक्कोसं ॥ ६१ ॥ बंधं करेइ पुण सो उक्किट्ठं पुणणुक्किट्ठयं बंधं ।
एवं साई अधुवा दुवे वि बंधा हवंतेवं ॥ ६२ ॥ एयासिं पि य पयडीण अप्पजियविरियलद्धिसंजुत्तो । भवपढमे समयम्मी
वट्टंतो सत्तविहबंधी ॥६३॥ जहन्नपएसबंधं सुहुमनिगोओ करेइ सो वि जिओ । भववीयाइसु समएसु करेइ बंधं जहन्नियरं

॥६४॥ कालंतरेण पुणरवि सो वि जहन्नं पुणो वि अजहन्नं । साईअधुवपभेया पत्तेयं हुंति दुविगप्पा ॥६५॥ एत्थ विसेसणाणं फरणंमी कारणंतु निन्नेयं । मूलपयडीणमिव सेसयवन्नाइस्स नवगस्स ॥६६॥ उक्किट्ठाणुक्किट्ठो जहन्नअजहन्नओ चउविहो वि । पत्तेयं दुविगप्पो साई अधुवो य धुवं न ॥६७॥ विन्नेओ नवरं आउ-वज्ज सत्तन्हमूलपयडीणं । वंधो मिच्छो उत्तर-पयडीणं नामसद्वाणं ॥ ६८ ॥ तेवीसाए वंधं कुवंतो उक्कसेसु जोगेसु । वट्टंतो उक्कोसग-पएसबंधस्स कारिचि ॥ ६९ ॥ भणियवो सेसं पुण तेहेव नामस्स एत्थ तेवीसा । पुविं भणिया नामस्स पंचवीसाइगहणेणं ॥ ७० ॥ फिर हुंति बहूभागा ईई तेवीसवंधगाणंति । इय तीसन्हं गाहा वक्खाया तस्समत्तीए ॥ ७१ ॥ भणिया साधाइपरूवणाउ अह उक्कसस्स बंधस्स । तदियरबंधस्सेव य सामित्तं एत्थ पभणेइ ॥ ७२ ॥

आउक्कस्स पएसस्स पंच मोहस्स सत्त ठाणाणि । सेसाणि तणुकसाओ बंधइ उक्कोसए जोगे ॥ ९३ ॥

टी० 'आउक्कस्स पएसस्स पंच'त्ति आयुष उत्कृष्टप्रदेशबन्धस्य पञ्चस्वामिनः, एतदुक्तं भवति–मिथ्यादृष्टयविरतदेशविरतप्रमत्ताप्रमत्तलक्षणाः पञ्चैव जनाः 'संन्नी उक्कडयोगी'त्यादिगाथाभणिष्यमाणसम्भवद्विशेषणविशिष्टा आयुष उत्कृष्टप्रदेशबन्धमुपकल्पयन्ति । मिश्रोऽपूर्वकरणादयश्चायुर्न बध्नन्ति इति नेह गृहीताः । सास्वादनस्तर्ह्यायुर्बध्नात्येव स किमिति न गृहीत इति चेत् ? उच्यते, तस्योत्कृष्टप्रदेशनिबन्धनोत्कृष्टयोगाभावात् । तथाहि पूर्वमनन्तानुबन्धिनामुत्कृष्टोऽनुत्कृष्टश्च प्रदेशबन्धो मिथ्यादृष्टौ साद्यध्रुव एवोक्तो, यदि तु सास्वादनेऽप्युत्कृष्टयोगो लभ्येत तदा असावप्यनन्तानुबन्धिनो बध्नात्येवातो यथाऽऽवि-

१ गाथा ९७ ।

रतादिप्त्यप्रत्याख्यानावरणादिप्रकृतीनामुत्कृष्टप्रदेशबन्धसद्भावतोऽनुत्कृष्टप्रदेशबन्धः साद्यादिचतुर्विकल्पोऽभिहितस्तथैवानन्तानुबन्धिनां मिथ्यात्वभागलाभात् सास्वादने उत्कृष्टप्रदेशबन्धसद्भावतोऽनुत्कृष्टः साद्यादिचतुर्विकल्पोऽपि स्यान्न चैवं निर्दिष्टः तस्माज्ज्ञायते अल्पकालभावित्वेन तथाविधप्रयत्नाभावादन्यतो वा कुतश्चिद्धेतोः सास्वादनस्योत्कृष्टयोगो नास्ति । किञ्चानन्तरमेवोत्तरप्रकृतिस्वामित्वे मतिज्ञानावरणादिप्रकृतीनां प्रत्येकं सूक्ष्मसम्परायादिपूत्कृष्टं प्रदेशबन्धमभिधाय भणितशेषप्रकृतीनां मिथ्यादृष्टिमेवोत्कृष्टप्रदेशस्वामिनं निर्देक्ष्यति, न सास्वादनं वक्ष्यति । 'सेसपएसुक्कडम्मिच्छो'त्ति अतोऽपि ज्ञायते नास्त्यस्योत्कृष्टयोगसम्भवः । अतो ये सास्वादनमप्यायुष उत्कृष्टप्रदेशबंधस्वामिनमिच्छन्ति, तन्मतमुपेक्षणीयमिति स्थितम् । 'मोहस्स सत्त ठाणाणि'त्ति मोहनीयस्योत्कृष्टप्रदेशबन्धस्वामित्वे सप्तगुणस्थानान्यधिक्रियन्ते, इदमत्र हृदयम्–मोहनीयं तावदनिवृत्तिबादरान्ता नव बध्नन्ति । तत्र सास्वादनमिश्रौ वर्जयित्वा शेषाः सप्तजना उत्कृष्टयोगे वर्त्तमानाः सप्तविधबन्धका मोहस्योत्कृष्टं प्रदेशबन्धं कुर्वन्ति । अन्ये तु सास्वादनमिश्रावपि सङ्गृह्य "मोहस्स नव उ ठाणाणि'त्ति पठन्ति, तच्च न युक्तियुक्तम्, यतः सास्वादनस्योत्कृष्टयोगो न लभ्यत इत्युक्तमेव, मिश्रेऽप्युत्कृष्टयोगो न लभ्यते, तथाहि-द्वितीयकषायाणामुत्कृष्टप्रदेशबन्धस्वामिनमविरतमेव निर्देक्ष्यति, यद्वक्ष्यति 'अजई बीयकसाए'त्ति । यदि तु मिश्रेऽप्युत्कृष्टयोगो लभ्यते, तदा सोऽपि तत्स्वामितया निर्दिश्येत न च वक्तव्यम्, मिथ्यादर्शनरप्रकृतिबन्धकोऽविरत इत्ययमेव गृहीतः । यतोऽविरतोऽपि मूलप्रकृतीनां सप्तविधबन्धकस्तत्र गृहीष्यते. मिश्रोऽपि सप्तविधबन्धक एव, उत्तरप्रकृतीरपि मोहस्य सप्तदशाविरतो बध्नाति, मिश्रोऽप्येताव-

*१ गाथा २६ चतुर्थपाद । २ 'अतोऽप्यागमात्तस्योत्कृष्टयोगासंभव'त्ति

वीरेव । तस्मादुत्कृष्टयोगाभावं विहाय नापरं तत्परित्यागे कारणं पश्याम इति । मिथोऽप्युत्कृष्टयोगाभावात्सैव मोहोत्कृष्ट-
प्रदेशबन्धका इति स्थितम् । भणितशेषाणि ज्ञानावरणदर्शनावरणवेदनीयनामगोत्रान्तरायलक्षणानि षट्कर्माणि तनुकषायः–
सूक्ष्मसम्परायः, उत्कृष्टयोगे वर्त्तमान उत्कृष्टप्रदेशान् बध्नाति । सूक्ष्मसम्परायो हि मोहायुषी न बध्नाति अतस्तद्भागोऽधिको
लभ्यत इति अस्यैव ग्रहणमिति गाथार्थः ॥ ९३ ॥ तदेवमुक्तं मूलप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वामित्वमिदानीं तासामेव जघ-
न्यप्रदेशबन्धस्वामित्वमाह–

उक्कोसगम्मि भन्नंति आउकम्मस्स पंच जणा ॥ ७३ ॥

भा० तत्थाउक्कस्सत्ति गाहाए मूलपयडीण सामियबंधे । जीवा पएसबंधं मिस्सो तह तेय पुणो मिच्छअविरय–देसविरयाइतिन्नि पंच । पज्जत्ता सत्तुकडजोगे बंधंति उक्कोसं ॥ ७४ ॥ सासाणो पुण एवं बंधइ नवरं तु अप्पकालत्ता । पुव्वकरणमाईया । नो बंधंती आउं कइयावि हु तेण नो भणिया ॥ ७५ ॥ न हवइ तत्तो उक्कस–जोगसंबंधो । हेऊओ सासायणगुणस्स उक्कस्स जोगसंबंधो । जणाभावाउ तहाविहाउ अन्ना वि कुओ वा ॥ ७६ ॥ मिच्छप्पभिई अनियट्टिबायरंता उ नव-पएसबंधस्स उ अभावा ॥ ७७ ॥ सासायणो न होई सत्त उ ठाणाणिमाणि मोहस्स । उक्कोसं ठाणा ॥ ७८ ॥ तं मज्झा दुइयतइयगुणठाणा मोत्तु सेसगा जे उ । सत्तट्ठाणा तत्थ ठियाओ सत्तवि जणा बंधं ॥ ७९ ॥ पयणुकसाओ सुहुमो उक्कस-पविहंती छउत्थकम्मस्स तह य सेसाणं । आइमदुतइयछसत्तअट्ठमाणं तु कम्माणं ॥ ८० ॥ जोगम्मि वट्टमाणो उ । उक्कोसगबंधं संविहेइ सुहुमो हि मोहाउं ॥ ८१ ॥ नो बंधइ तो तेसिं भागो अहिगोत्थ लब्भई ।

१ गाथा ९९ तृतीयपादः ।

ईई सुहुमस्स कयं गहणं उक्कोसबंधसामित्तं ॥ ८२ ॥ मूलपयडीण एयं वुत्तं अह तेसिमेव पभणेइ । जहन्नपएसबंधाण सामियत्तं समासेणं ॥ ८३ ॥

सुहुमनिगोयापज्जत्तगस्स पढमे जहन्नए जोगे । सत्तण्हं तु जहन्ना आउगबन्धे वि आउस्स ॥ ९४ ॥

टी० सूक्ष्मनिगोदस्यापर्याप्तकस्य भवप्रथमसमये सर्वजघन्ययोगे च वर्त्तमानस्यायुर्वर्जसप्तकर्म्मणामेक समयं जघन्यप्रदेशबन्धो भवति । विशेषणसाफल्यं पूर्ववद्वाच्यम् । ' आउगबंधे वि आउस्स 'त्ति अपिशब्दो भिन्नक्रमे, आयुषोऽपि जघन्यः प्रदेशबन्धोऽस्यैव भवति । कदेत्याह–आयुर्बन्धकाले, एतदुक्तंभवत्ययमेव सूक्ष्मापर्याप्तकनिगोदस्स्वजायुषो भागद्वयमतिवाह्यावशिष्टत्रिभागस्याद्यसमये आयुः सहितमष्टविधं बध्नन्नायुषो जघन्यप्रदेशबन्धं करोति । स्वायुषः प्रथमभागद्वये जीवा आयुरेव न बध्नन्तीति तद्वर्जनम् । अवशिष्टत्रिभागस्यापि द्वितीयादिसमयेष्वसङ्ख्येयगुणवृद्ध्या वीर्येणापर्याप्तकाः सर्वेऽपि वर्द्धन्त इत्याद्यसमयग्रहणमिति गाथार्थः ॥९४॥ तदेवं मूलप्रकृतीनामुत्कृष्टस्य जघन्यस्य च प्रदेशबन्धस्वामिन उक्ताः । इदानीमुत्तरप्रकृतीनां तस्य तानभिधित्सुराह–

भा० सुहुमगाहाए सव्वं सुगमं नवरं तु सुहुमनिगोओ । अपज्जत्तजिओ नियआउगस्स भागदुगेव गए ॥ ८४ ॥ तइयभागस्स पढमे समयम्मि आउसहियमट्ठविहं । वधं बंधंतो आउ–गस्स जहन्नं कुणइ बंधं ॥ ८५ ॥ सत्तन्हं पुण पढमे जं भणियं तं भवस्स पढमम्मि । समए एक्कं समयं जहन्नबंधं कुणइ जीवो ॥ ८६ ॥ उक्किट्ठेयरजहन्नपएसबंधस्स सामिणो भणिया । मूलप्पयडीणं अह उत्तर–पयडीण संबंधे ॥ ८७ ॥ उक्किट्ठयरभेयाण सामिणो अह कमेण पभणेइ ।

सत्तर सुहुमसरागो पचगमनियट्टि संमगो नवगं । अजई बीयकसाए देसजई तइयए जयइ ॥ ९९ ॥

टी० ज्ञानावरणपञ्चकदर्शनावरणचतुष्कसातवेदनीययशःकीर्त्युच्चैर्गोत्रान्तरायपञ्चकलक्षणानां सप्तदशप्रकृतीनां सू-
क्ष्मसम्पराय उत्कृष्टयोगे वर्तमान उत्कृष्टप्रदेशबन्धं करोति । मोहायुषी असौ न बध्नातीत्यत्र तद्भागो लभ्यते । अपरं च दर्श-
नावरणभागो नामभागश्च सर्वोऽपीह यथासङ्ख्यं दर्शनावरणचतुष्कस्य यशःकीर्त्तेश्चैकस्या भवतीति सूक्ष्मसम्परायस्यैव ग्रह-
णम्। 'पचगमनियट्टि'त्ति पुरुषवेदसञ्ज्वलनचतुष्टयलक्षणप्रकृतिपञ्चकस्य सर्वोत्कृष्टयोगोऽनिवृत्तिबादर उत्कृष्टप्रदेशं बध्नाति।
तत्र पुरुषवेदस्य पुंवेदसञ्ज्वलनचतुष्टयात्मकं पञ्चविध बध्नन्नसावुत्कृष्टं प्रदेशबन्धं करोति । हास्यरतिभयजुगुप्साभागो लभ्यत
इत्यस्यैव ग्रहणम्। सञ्ज्वलनचतुष्टयस्य तु यथा साद्यादिप्ररूपणायां त्रिंशत्प्रकृतिभावनाप्रक्रमे भावना कृता, तथैव द्रष्टव्या।
'सम्मगो नवगं'ति सम्यग्गच्छति ज्ञानादिमोक्षमार्ग इति सम्यग्गः सम्यग्दृष्टिरुत्कृष्टयोगे वर्त्तमानो निद्राद्विकहास्यरत्यरति-
शोकभयजुगुप्सातीर्थंकरनामलक्षणं प्रकृतिनवकमुत्कृष्टप्रदेशं बध्नन्ति । तत्र निद्राद्विकभावना यथा त्रिंशत्प्रकृतिमध्ये साद्यादि-
प्ररूपणायां कृता, तथाऽत्रापि सर्वा कार्या । हास्यादिषट्कस्य तु ये ये सम्यग्दृष्टयोऽविरताद्यपूर्वकरणान्तानां मध्ये तद्बन्धका-
स्ते ते उत्कृष्टयोगे वर्त्तमाना उत्कृष्टं प्रदेशबन्धमभिनिर्वर्त्तयन्ति । मिथ्यात्वभागो लभ्यत इति सम्यग्दृष्टिग्रहणम् । तीर्थकरना-
म्नोऽप्यविरताद्यपूर्वकरणान्तः सम्यग्दृष्टिर्मूलप्रकृतिसप्तविधबन्धको, नाम्नस्तु भूयस्कारादिविचारावसरे दर्शितस्वरूपां देवग-
तिप्रायोग्यां तीर्थकरनामसहितामेकोनत्रिंशदुत्तरप्रकृतीर्बध्नन्नुत्कृष्टयोगे वर्त्तमान उत्कृष्टं प्रदेशबन्धं करोति । मिथ्यादृष्टिरेतन्न
बध्नातीति सम्यग्दृष्टिग्रहणम् । तीर्थकरनामसहिताश्चान्यास्त्रिंशदादिकाः पूर्वोक्तरूपा नाम्न उत्तरप्रकृतयो न बध्यन्ते । त्रिंश-

देवत्रिंशद्‌बन्धौ तु पूर्वोक्तनीत्या तीर्थकरनामसहितौ वर्ज्येते, केवलं तत्र भागबाहुल्यादुत्कृष्टप्रदेशबन्धो न लभ्यत इति शेषप-रिहारेणैकोनत्रिंशत्प्रकृतिबन्धग्रहणम् । 'अजई बीयकसाए' इत्यादि, अयतिः—अविरतसम्यग्दृष्टिर्द्वितीयानप्रत्याख्यानावरण-कषायान्, देशयतिः देशविरतिस्तृतीयान् प्रत्याख्यानावरणकषायान्, यतते अनेकार्थत्वाद्धातूनामुत्कृष्टप्रदेशानिति प्रक्रमाद्गम्यते । भावार्थस्त्विह सर्वोऽपि यथा साद्यादिप्ररूपणायां त्रिंशत्प्रकृतिमध्ये प्रोक्तस्तथा वाच्य इति गाथार्थः ॥ ९५ ॥

भा० सत्तरसमाइयाहिं गाहाहिं चउहिं संखेवा ॥ ८८ ॥ विग्घं नाणावरणं पणगं दंसणचउक्क सा उच्च । जसकीत्ति सत्तरसणं सुहुमो उक्किट्ठजोगे य ॥ ८९ ॥ वट्टंतो उक्कोसं पएसबंधं करेइ मोहाउं । नो बंधइ तो तेसिं णं लब्भइ तह य सेसस्स ॥ ९० ॥ अबज्झमाणदंसणपणस्स भागो उ दंसणचउक्के । सेसनामस्स भागो जसकित्तीए हवइ अहिगो ॥ ९१ ॥ इय हेऊओ सुहुमगगहणं पुंवेयसंजलचउक्क । इय पणगस्स निपट्टी उक्कसजोगो उ उक्कोसं ॥ ९२ ॥ बंधं विहेइ तत्थ य इय पंचप्पयडिबंधगो बंधं । पुंवेयस्सुक्कोसं बंधं पकरेइ तत्थ विय ॥ ९३ ॥ हासरइभयदुगुंछा भागो अहिगो उ लब्भई तत्थ । ईतगहणं संजलणाणं सायाइकहणम्मि ॥ ९४ ॥ जह तीसइपगईणं कहणावसरम्मि भावणा पकया । तह इहंपि हु नेया तह सम्मो पगडिनवगस्स ॥ ९५ ॥ निद्ददुगं हासाईउक्कं तित्थयरमेव नवगंति । उक्कोसपएसं संविहेइ तहिं निदनिद्ददुयगस्स ॥ ९६ ॥ जह तीसइ पगडीणं मज्झे सायाइकहणवसरम्मि । भणिओ भागो तह इह सव्वो वि हु होइ भणि-यव्वो ॥ ९७ ॥ हासाइछक्कगस्स उ जे जे सम्माइनियहियंताणं । मज्झम्मितब्बंधं करंति ते ते उ उक्कोसे ॥ ९८ ॥ जोगम्मि वट्टमाणा उक्सबंधं करंति तत्थ ठिया । मिच्छविभागो लब्भइ ईसम्मदिट्ठिणो गहणं ॥ ९९ ॥ तित्थयरस्स उ अविरयपभिई

जीवो अपुव्वकरणंतो । सम्मो मूलप्पगडोसगविहबंधम्मि उज्जुत्तो ॥ १०० ॥ भुयगाराइचिंता–वसरे नामस्स दरिसियस-
रूवं । देवगईपाओग्गं तित्थयरसुनामसहियाए ॥ १ ॥ एगुणतीसं उत्तरपगईबंधम्मि वट्टमाणो उ । उक्कडजोगो उक्कस-
पएसबंधं किर विहेई ॥ २ ॥ मिच्छद्दिट्ठी एया न बंधइ तेण सम्मजियगहणं । तित्थयरनामसहिया तेवीसइपभिइया पुव्वं
॥ ३ ॥ जाओ भणिया नाम–स्सुत्तरपयडीओ ता न वज्झंते । तीसिगतीसइबंधो धुवं भणियाइ नीइए ॥ ४ ॥ तित्थ-
यरनामसहिओ बंधंती नवरि तत्थ भागाणं । बाहुल्लत्ता उक्कसपएसबंधो न लब्भइ तो ॥ ५ ॥ इंसेसगपरिहारा इह एगुण-
तीसइए गहणंति । एक्कं अजओ बीए देसजई तइयए जयइ ॥ ६ ॥ धाऊण अणेगत्तत्तणओ जयइ त्ति बंधई जीवो । उक्को-
सपएसं इह भावत्थो तीसपयडीणं ॥ ७ ॥ मज्झे सायाईणं कहणावसरे जहेव किर भणिओ । तहय इहंपि हु वच्चो
तेरस बहुप्पएसा सम्मो मिच्छो व कुणइ पयडीओ । आहारमप्पमत्तो सेसपएसुक्कडं मिच्छो ॥ ९६ ॥
टी० असातवेदनीयमनुष्यायुर्देवायुर्देवद्विकवैक्रियद्विकसमचतुरस्रवज्रर्षभनाराचप्रशस्तविहायोगतिसुभगसुस्वरादेयलक्ष-
णास्त्रयोदश प्रकृतीः सम्यग्दृष्टिर्मिथ्यादृष्टिर्वा बहुप्रदेशाः–उत्कृष्टप्रदेशाः करोति । तथा ह्यसातं यथा मिथ्यादृष्टिः सप्तविधब-
न्धको बध्नाति, तथा सम्यग्दृष्टिरपि सप्तविधबन्धक एवैतद्बध्नात्यतः प्रकृतिलाघवादिविशेषाभावादुत्कृष्टयोगौ द्वावप्येतदुत्कृष्ट-
प्रदेशबन्धं कुरुतः । देवमनुष्यायुषोरप्यष्टविधबन्धकौ उत्कृष्टयोगे वर्तमानौ द्वावप्यविशेषेणोत्कृष्टप्रदेशबन्धं कुरुतः । शेषास्तु
वज्रर्षभनाराचवर्जा नवनामप्रकृतयो नाम्नोऽष्टाविंशतिबन्धकाल एव बन्धमागच्छन्ति, नाशस्तनेषु पूर्वोक्तरूपेषु त्रयोविंशति-
पञ्चविंशतिपड्विंशतिबन्धेषु । तां चाष्टाविंशतिं देवगतिप्रायोग्यां सम्यग्दृष्टिर्मिथ्यादृष्टिश्च बध्नात्येतावत्यो देवगतिप्रायोग्या-

ष्टाविंशतिबन्धसहचरिता एता नव प्रकृतीर्निर्वर्त्तयन्तौ सप्तविधबन्धकौ द्वावप्युत्कृष्टयोगावविशेषेणोत्कृष्टप्रदेशा विधत्तः । अष्टाविंशतेरुपरितनेष्वेकोनत्रिंशदादिबन्धेष्वप्येता नव प्रकृतयो बध्यन्ते । केवलं तत्र भागबाहुल्यादुत्कृष्टप्रदेशबन्धो न लभ्यत इत्यष्टाविंशतिसहचारित्वेन ग्रहणम् । वज्रर्षभनाराचस्यापि सम्यग्दृष्टिर्मिथ्यादृष्टिर्वा सप्तविधबन्धको नाम्नो वज्रर्षभनाराचसहितामेकोनत्रिंशत निर्वर्त्तयन्नुत्कृष्टयोगेन उत्कृष्टप्रदेशबन्धं करोति । एकोनत्रिंशतोऽधस्तनबन्धेष्विदं न बध्यते । त्रिंशद्बन्धे तु बध्यते, केवलं भागबाहुल्यात् तत्रोत्कृष्टप्रदेशबन्धो न लभ्यत इत्येकोनत्रिंशद्बन्धस्यैव ग्रहणमिति सम्यग्दृष्टिमिथ्यादृष्ट्योरविरोधेन भावितत्रयोदशानामपि प्रकृतीनामुत्कृष्टः प्रदेशबन्धः । 'आहारमप्पमत्तो 'त्ति अप्रमत्तग्रहणेनाप्रमत्तयतिरपूर्वकरणश्च गृह्यते, द्वयोरपि प्रमादरहितत्वाविशेषात् । ततश्चैतौ द्वावपि देवद्विकपञ्चेन्द्रियजातिवैक्रियद्विकसमचतुरस्रपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरशुभसुभगसुस्वरादेययशःकीर्त्तिरित्येता एकोनविंशतिर्वर्णादिचतुष्कतैजसकार्मणागुरुलघूपघातनिर्माणमित्येता नाम्नो नव ध्रुवबन्धिन्य आहारकद्विकं चेत्येतद्देवगतिप्रायोग्यं त्रिंशन्नामोत्तरप्रकृतिकदम्बकं बध्नन्तौ उत्कृष्टयोगे स्थितौ आहारकद्विकमुत्कृष्टप्रदेशं बध्नीतः । तीर्थंकरनामसहिते एकत्रिंशद्बन्धेऽप्येतद्बध्यते, किन्तु तत्र भागबाहुल्यान्न गृह्यते । 'सेसपएसुक्कडं मिच्छो 'त्ति भणितचतुःपञ्चाशत्प्रकृतिभ्यः शेषाणां स्त्यानर्द्धित्रिकमिथ्यात्वानन्तानुबन्धिचतुष्टयस्त्रीनपुंसकवेदनारकतिर्यगायुष्कनरकद्विकतिर्यग्द्विकमनुष्यद्विकजातिपञ्चकौदारिकद्विकतैजसकार्मणादिवर्जसंस्थानसंहननदशकवर्णादिचतुष्कागुरुलघूपघातपराघातोच्छ्वासातपोद्योतप्रशस्तविहायोगतिसप्रतिपक्षत्रसबादरपर्याप्तप्रत्येकस्थिरशुभानि दुर्भगदुःस्वरानादेयायशःकीर्त्तिनिर्माणनीचैर्गोत्राणि चेत्येतासां षट्षष्टिप्रकृतीनां कदम्बकं प्रदेशोत्कटमुत्कृष्टप्रदेशं

मिथ्यादृष्टिरेव करोति । तथाहि– मनुष्यद्विकपञ्चेन्द्रियजात्यौदारिकद्विकतैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातपराघातो-
च्छ्वासत्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरशुभाशुभायशःकीर्त्तिनिर्माणलक्षणा पञ्चविंशतिप्रकृतीर्मुक्त्वा शेषा एकचत्वारिंश-
त्सम्यग्दृष्टेर्बन्ध एव नागच्छन्ति । सास्वादनस्तु काश्चिद् बध्नाति, परं तस्योत्कृष्टयोगो न लक्ष्यते । अत एता एकचत्वा-
रिंशत्प्रकृतीर्मिथ्यादृष्टिरेवोत्कृष्टयोगे वर्त्तमानो मूलप्रकृतीनां नामोत्तरप्रकृतीनां च यथासम्भवमल्पतरबन्धक उत्कृष्टप्रदेशाः
करोति । अपि चोक्तस्वरूपाः पञ्चविंशतिप्रकृतयः सम्यग्दृष्टेर्बन्धे समागच्छन्ति । तास्वपि मध्ये औदारिकतैजसकार्मणव-
र्णादिचतुष्कागुरुलघूपघातबादरप्रत्येकास्थिराशुभायशःकीर्त्तिनिर्माणलक्षणानां पञ्चदशप्रकृतीनामपर्याप्तैकेन्द्रिययोग्यो नाम्न-
स्त्रयोविंशतिप्रकृतिनिष्पन्नो यः पूर्वं दर्शितो बन्धस्तेनैव सह बध्यमानानामुत्कृष्टः प्रदेशबन्धो लभ्यते, नोत्तरैः पञ्चविं-
शत्यादिबन्धैर्भागबाहुल्यात् । शेषाणां तु मनुष्यद्विकपञ्चेन्द्रियजात्यौदारिकाङ्गोपाङ्गपराघातोच्छ्वासत्रसपर्याप्तस्थिरशुभलक्षणानां
दशप्रकृतीनां यथासंभवं पर्याप्तैकेन्द्रियापर्याप्तत्रसयोग्यं पञ्चविंशतिबन्धेनैव सह बध्यमानानामुत्कृष्टः प्रदेशबन्धो लभ्यते,
नोत्तरैः षड्विंशत्यादिबन्धैर्भागबाहुल्यादेव । नाप्यधस्तनेन त्रयोविंशतिबन्धेन, तत्रैतासां बन्धाभावादेव । तौ च त्रयोविं-
शतिपञ्चविंशतिबन्धौ सम्यग्दृष्टेर्न भवतो देवपर्याप्तमनुष्यप्रायोग्यबन्धकत्वात् तस्येति । अत एतासामपि पञ्चविंशतिप्रकृतीनां
यथोक्तप्रकारेण त्रयोविंशत्या पञ्चविंशत्या च सह बध्यमानानां सप्तविधबन्धक उत्कृष्टयोगो मिथ्यादृष्टिरेवोत्कृष्टं प्रदेशबन्धं
करोतीति युक्तमुक्तम् । 'सेसपएसुक्कडं मिच्छो'त्तीति गाथार्थः ॥ ९५ ॥ तदेवमुत्तरप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वामित्वमुक्त-
मिदानीं तासामेव जघन्यप्रदेशबन्धस्वामित्वं क्रमप्राप्तमप्यनभिधाय विचित्रत्वात् ग्रन्थकारभणितीनां कीदृशो जन्तुरुत्कृष्टप्रदेश-

कर्त्ते करोतीति कीदृशं जघन्यमित्येतत्सामान्यलक्षणं तावत्—

मा० भद्द गेरमईइ गादाए ॥ ८ ॥ असायथणुयदेवाउदेवदुविउरियजुयलसमचउरं । आइमसंघयणं सुभगइ सुभगं सुसराएज्जं ॥ ९ ॥ एयासि पयडीणं सम्मो मिच्छोव उक्कसं बंधे । कुणई तत्थ असाये जह मिच्छो सत्तविहबंधो ॥ १० ॥ बंधइ तह सम्मो वि हु परिणओ चेव बंधई एवं । उक्कसजोगो नह देव-मणुयआऊण अट्ठविहो ॥ ११ ॥ अट्ठविहे बंधंमी वट्टंतो उक्कस्सम्मि जोगम्मि । उक्कसपएसबंधं पकुणंती सम्ममिच्छजिया ॥ १२ ॥ सेसा आइमसंघयण-वज्जिया नव उ नाम-पयडीओ । भाग्गलंभी बंधे अट्ठवीसइबंधकाले वि ॥ १३ ॥ जो देविम्मेसु नियपणछवीसइबंधएसु सा य पुणो । अट्ठावी-सा सुरगइजोग्गा सम्मो य मिच्छो य ॥ १४ ॥ बंधंतो वो सुरगइ पाउग्गडवीससंघसहचरिया । एया नव पयडीओ करेइ उक्किट्ठबंधो उ ॥ १५ ॥ नगवंधुक्कसजोगो सम्मो मिच्छोय इगुणतीसाई । बंधेसु वि नवपयडी एया बंधेइ नवरं तु ॥ १६ ॥ भागाव बहुयाओ गत्तुक्कोसो न लब्भए बंधो । जो अट्ठवीसइ सहचारिमारओ एसि गहणं तु ॥ १७ ॥ आइमसंघयणस्स वि सम्मो मिच्छो य सुरगुणजुओ । नारायसरिसनामस्सेगुणतीसाउ पयडीओ ॥ १८ ॥ बंधंतो उक्कोसं बंधं पकरेइ इगुण-तीसाए । हिट्ठामेसुं एय नो पज्जइ जोगबंधे नु ॥ १९ ॥ पज्जइ नवरं तु तहिं भागाण बहुत्तणाउ उक्कोसो । नो बंधइ कम्मइ इगुणतीसाबंधगारगवि ॥ २० ॥ आहारयमपमत्तो एस व अपमत्तभणणओ नियट्टो । अपमत्तो चिय गहिओ दोण्णि वि एए उ नामस्स ॥२१॥ आहारजुयकयणियाओ तीसई पयडीओ निद्दिट्ठा । बंधंता आहारग-दुगस्स उक्कोसयं बंधे ॥२२॥ एक्कतीसुक्कसजोगा तिथ्यरजुयंपि एक्कतीसाए । बंधेंति पज्जइ इमं नवरं भागाण बहुयत्ता ॥ २३ ॥ जो नस्स भणिय-इमे

सेसपयसुदइं ति इह सेसा । धुवपगडियाणं चउपन्ना एत्थ पयडीणं ॥ २४ ॥ उद्धरिया जा पयडी ताओ धुवं थिणद्धितिग-
मिच्छं । णंताणुबंधिचउगं थीसंढं तिरियनरगाऊ ॥ २५ ॥ नरगदुगं तिरियदुगं नरदुगपणजाइउरलजुयलं च । तेययकम्मय
आउमरहिया संठाणसंहणणा ॥ २६ ॥ वन्नाइचउअगुरुलहुउस्सासुवघायपराघायायवं । उज्जोयसुहाविहगइतसबायरपज्ज-
पत्तेयं ॥ २७ ॥ थिरसुभइयछक्कं चिय सप्पडिवक्खं तहा य दुभगं च । दुस्सरणएज्जजसकीत्तिनिमिण तह नीयगोयं च
॥ २८ ॥ इय छासट्ठी पयडी उक्कोसपएसियाओ पकरेइ । मिच्छो तत्थ य मणुदुग-पंचिंदियउरलदुगमेव ॥२९॥ तेयगकम्म-
गवन्नाइचउअगुरुलहुनायपरघायं । ऊसासं तसबायर-पज्जं पत्तेयथिरअथिरं ॥ ३० ॥ सुभजुयलअजसनिमिणं एयाओ
पंनवीसइंपयडी । मोत्तुं सेसिगचत्ता पयडीओ सम्मदिट्ठिस्स ॥ ३१ ॥ मा गच्छंवी वंधे काओ वि सासायणो पुणो वंधे ।
नवरं तदुक्कोसो जोगो नो लब्भई तेणं ॥ ३२ ॥ इगचत्तालीसाए पयडीणं मिच्छदिट्ठिओ जीवो । मूलपयडीण नाम
स्सुत्तरपयडीण जह जोगं ॥ ३३ ॥ अप्पयरबंधगो उक्कसंमि जोगंमि वट्टमाणो उ । उक्कसबंधं पकरइ जाओ भणियस्स
एयाओ ॥ ३४ ॥ पणवीसइ पगडीओ सम्मदिट्ठिस्स हुंति बंधम्मि । तासु वि मज्झे उराल-यतेयकम्मइगंपयडीओ ॥३५॥
वन्नाइचउअगुरुलहुउवघायं बायरं च पत्तेयं । अथिरासुभाऽजसं पिय निमेणपन्नरसपयडीणं ॥ ३६ ॥ अपज्जेगिंदि
जोगनामस्स तिवीसईहि पयडीहिं । निप्फन्नो जो पुव्विं भणिओ बंधो उ तेणेव ॥ ३७ ॥ वज्झमाणेणं समगं पाविज्जइ
उक्कसो इह बंधो । उवरिमगेसुं पणवीसपभिइबंधेसु भागाणं ॥ ३८ ॥ बाहुल्लत्ता नो लब्भई उ तह सेसगाण एयाण । मणु-
दुगपणिंदिजाईओरालिअंगुवंगं च ॥ ३९ ॥ परघूसासतसं पि य थिरपज्जं सुभ[जसं] च इयदसगं । जह जोगं पज्जत्तेगिंदिय-

अपज्जत्तयपत्तसाणं ॥ ४० ॥ जोगेणं पणवीसइबंधेण सहेव वज्झमाणेणं। उक्कसबंधो लब्भइ छवीसइपभिइबंधेसु ॥ ४१ ॥ नो लब्भइ भागाणं पउरत्ता नवि य देहिसे बंधे। तेवीसइमे तत्थ य एयासिं बंधविरहाओ ॥ ४२ ॥ ते विय तेवीसपणवीस-इयबंधा उ सम्मदिट्ठिस्स। न भवंति देवपज्जत्त-मणुयपाओगबंधस्स ॥ ४३ ॥ बंधगत्ताओ तस्स य तो एसिंपि पंचवीसाए। पयडीण भणियकमा तेवीसा पन्नवीसाए ॥ ४४ ॥ वज्झमाणेणं समगं उक्कसजोगो उ सत्तविहबंधी। उक्किट्ठं पकरेई मिच्छदिट्ठी निओ बंधं ॥ ४५ ॥ इय उत्तरपयडीणं उविरुद्धपएसबंधसामित्तं। वुत्तं संपइ इयरं पयडीणं बंधसामित्तं ॥ ४६ ॥ कमपत्तं पि य मोत्तुं वइचित्तता ओ गंथकाराणं। भणिऊणं केरिसओ जंतू उक्कसपएसाणं ॥ ४७ ॥ बंधं पकरइ तह केरिसो य इयराण कुणइ बंधंति। सामन्नलक्खणं इहय तार दुन्नंपि भणेइ ॥ ४८ ॥

सन्नी उक्कडजोगी पज्जत्तो पयडिबंधमप्पयरो। कुणइ पएसुक्कोसं जहन्नयं जाणविवरीयं ॥ ९७ ॥

टी० इह मनो विकल्पलब्धिसंज्ञेत्युच्यते, सा यस्यास्त्यसौ संज्ञी, स प्रदेशबन्धमुत्कृष्टं करोतीति संटङ्कः उत्कृष्टप्रदेशबन्धो हि तीव्रचेष्टस्य भवति। चेष्टा च समस्तजीवराशिमध्ये संज्ञिन एव तीव्रा भवतीत्यस्य ग्रहणम्। ननु संज्ञी किं सर्वोऽपि तमुत्कृष्टं करोति? नेत्याह–' पज्जत्तो 'त्ति यथायोगं सम्बन्धः, अपर्याप्तात्पर्याप्तस्य तीव्रचेष्टत्वादिति भावः। स चाल्पव्यापारोऽपि भवतीत्याह–' उक्कडजोगि 'त्ति सर्वोत्कृष्टयोगे व्यापारे वर्तमान इत्यर्थः। एवंभूतोऽपि यदि बह्वीनां ज्ञानावरणादिप्रकृतीनां बन्धको भवति, तदा भागबाहुल्यादुत्कृष्टप्रदेशबन्धो न लभ्यत इत्याह–' पयडिबंधमप्पयरो 'त्ति प्रकृतिबन्धमाश्रित्याल्पतरो स्तिमितप्रकृतिबन्धकोऽल्पप्रकृतिबन्धक इत्यर्थः। एतावद्विशेषणविशिष्ट एव जन्तुरुत्कृष्टप्रदेशबन्धं करोत्यतः पूर्वोक्तो-

विशेषणानि द्रष्टव्यानि। 'जहन्नयं जाण विवरीय'त्ति उक्तविपरीते जन्तौ जघन्यकं
रकृष्टप्रदेशबन्धकजन्तूनामनुक्तान्यप्येतानि विशेषणानि द्रष्टव्यानि। असञ्ज्ञी जघन्ययोगो लब्ध्यपर्याप्तको विवक्षितप्रकृतिबन्धकेषु बहुप्रकृतिबन्धको मूलो-
प्रदेशबन्धं जानीहि। इदमुक्तं भवति। असञ्ज्ञी जघन्ययोगो लब्ध्यपर्याप्तको विवक्षितप्रकृतिबन्धकेषु बहुप्रकृतिबन्धको मूलो-
त्तरप्रकृतीनां जघन्यं प्रदेशबन्धं करोति। अतो वक्ष्यमाणजघन्यप्रदेशबन्धकजन्तूनामेतानि विशेषणानि द्रष्टव्यानीति गाथार्थः
॥ ९७ ॥ इदानीं प्रकृतमेवोत्तरप्रकृतीनां जघन्यप्रदेशबन्धस्वामित्वमभिधित्सुराह-

भा० सत्तो गाहा सुगमा अह पत्थुय उत्तराण पयडीणं। पभणइ य जहन्नबंध-सामित्तं घोलणाइए ॥ ४९ ॥

घोलणजोगि असन्नी बंधइ चउ दुन्नि अप्पमत्तो य। पंचासंजयसम्मो भवाइसुहुमो भवे सेसा ॥ ९८ ॥

टी० नरकदेवायुषी नरकद्विकं चेत्येताश्चतस्रः प्रकृतीर्घोलमानयोगः-परावर्त्तमानयोगोऽसञ्ज्ञी बध्नाति। जघन्यप्रदेशा
इति प्रक्रमाल्लभ्यते। तथाहि-पृथिव्यादयश्चतुरिन्द्रियावसाना देवनारकेषूत्पत्त्यभावादेतत्प्रकृतिचतुष्टयं न बध्नन्तीति नेहाधि-
क्रियन्ते। असञ्ज्यप्यपर्याप्तकस्तथाविधसङ्क्लेशविशुद्ध्यभावान्नैतद्बध्नात्यतः सूत्रे सामान्योक्तावपि पर्याप्तकोऽसौ द्रष्टव्यः।
सोऽपि यद्येकस्मिन्नेव वाग्योगे काययोगे वा चिरमवतिष्ठमानो गृह्येत तदा तीव्रचेष्टो भवेत्, योगात् योगान्तरं पुनः सङ्क्रामतः
स्वभावादल्पा चेष्टा भवतीति परावर्त्तमानयोगस्य ग्रहणम्। ततश्च परावर्त्तमानयोगोऽष्टविधं बध्नन् पर्याप्तोऽसञ्ज्ञी स्वभायोग्य-
सर्वजघन्यवीर्ये स्थितः प्रस्तुतप्रकृतिचतुष्टयस्यैकं चतुरो वा समयान् यावज्जघन्यप्रदेशबन्धं करोतीति परमार्थः। पर्याप्तजघन्य-
योगस्योत्कृष्टतोऽपि चतुःसमयावसानत्वादुत्तरत्राप्येष कालनियमो द्रष्टव्यः। ननु पर्याप्तसञ्ज्ञी किमिति प्रस्तुतप्रकृतिचतुष्टयं
न बध्नातीति चेत्? उच्यते, प्रभूतयोगत्वाज्जघन्योऽपि हि पर्याप्तसञ्ज्ञियोगः पर्याप्तासञ्ज्ञ्युत्कृष्टयोगादप्यसङ्ख्येयगुण इत्यलं

॥१२१॥ निस्वरेण । 'दुम्मि अप्पमत्तो 'त्ति ' योलणयोगि 'त्येतद् अत्रापि सम्बध्यते । ततश्च परावर्त्तमानयोगोऽष्टविधबन्धकः स्वप्रायोग्यसर्वजघन्यवीर्ये व्यवस्थितो नाम्न एकत्रिंशत्प्रकृतीरप्रमत्तयतिराहारकद्विकं जघन्यप्रदेशं बध्नाति । त्रिंशद्बन्धेऽप्येतद्बध्यते, परं तत्राल्पा भागा इत्येकत्रिंशद्बन्धग्रहणम् । एतच्च प्रकृतिद्वयमन्यत्र न बध्यत इत्यप्रमत्तयतिग्रहणम् । शेषं पूर्ववत् । 'पंचसंगपसम्मो भवाइ 'त्ति देवद्विकवैक्रियद्विकतीर्थंकरनामलक्षणाः पञ्चप्रकृतीर्भवाद्यसमये वर्त्तमानोऽविरतसम्यग्दृष्टिर्जघन्यप्रदेशाः करोति । तथाहि—कश्चिन्मनुष्यः तीर्थंकरनाम बद्ध्वा देवेषूत्पन्नः प्रथमसमये एव मनुष्यगतिप्रायोग्यां पूर्वदर्शितां नामप्रकृतित्रिंशतं बध्नतः मूलप्रकृतिसप्तविधबन्धकोऽविरतसम्यग्दृष्टिः स्वप्रायोग्यजघन्यवीर्ये स्थितस्तीर्थंकरनाम जघन्यप्रदेशं बध्नाति । नारकोऽपि श्रेणिकादिवद्देवबन्धकः सम्भवति, परमिह देवोऽल्पयोगत्वादनुत्तरवासी गृह्यते । नारकेषु त्वेवम्भूतो जघन्ययोगो न लभ्यते, अतस्तेषूत्पन्नो नेह गृहीतः । तिर्यञ्चस्तु तीर्थंकरनाम न बध्नन्तीत्युपेक्षिताः । मनुष्यास्तु भवाद्यसमये तीर्थंकरनामसहितां नाम्न एकोनत्रिंशतमेव बध्नन्ति, अतस्तत्राल्पा भागा भवन्ति । एकत्रिंशद्बन्धस्तु तीर्थंकरनामसहितः संयतस्यैव भवति, तत्र च तीर्थपदं न लभ्यते । अन्येषु तु नामबन्धेषु तीर्थंकरनामैव न बध्यते, अतः शेषपरिहारेण त्रिंशद्बन्धकस्य देवस्यैव ग्रहणम् । देवद्विकवैक्रियद्विकयोस्तु बद्धतीर्थंकरनामा देवनारकेभ्यश्च्युत्वा समुत्पन्नो मूलप्रकृतिसप्तविधबन्धको भूपस्कारादिविस्तारसदर्शितस्वरूपां तीर्थंकरनामसहितां देवगतिप्रायोग्यां नामैकोनत्रिंशतिं निर्वर्त्तयन् स्वप्रायोग्यसर्वजघन्यवीर्ये व्यवस्थितो भवाद्यसमये वर्त्तमानो मनुष्यो जघन्यं प्रदेशबन्धं करोति । देवनारका हि तावद्भवप्रत्ययादेव तत्प्रकृतिचतुष्टयं न बध्नन्तीति नेहाधिकृताः । तिर्यञ्चस्त्वकर्मभूमिजा भवाद्यसमयेऽपि बध्नन्त्येतत्, केवलं ते देवगतिप्रायोग्याम-

प्वार्विंशतिमेव पूर्वदर्शितस्वरूपां रचयन्ति, नैकोनत्रिंशदादिबन्धास्तेषां तीर्थंकराहारकसहितत्वात्तिरश्चां च तद्बन्धकसादृत-
संगु भागा अल्पा लभ्यन्त इति तेऽपीह नाधिक्रियन्ते । मनुष्यस्याप्यष्टाविंशतिबन्धकस्य भागा बहवो न लभ्यन्ते । त्रिंश-
देकत्रिंशद्बन्धौ तु देवगतिप्रायोग्यौ संयतस्य भवतस्तत्र च वीर्यमल्पं न लभ्यते । अन्ये तु देवगतिप्रायोग्या नाम्नि बन्धा एव
न सन्तीत्याकोच्यैकोनत्रिंशद्बन्धकस्य मनुष्यस्यैव ग्रहणम् । ननु तिर्यक्षु पर्याप्तासंज्ञी देवगतिप्रायोग्यमेतत् प्रकृतिचतुष्टयं
पध्नाति, स कस्मादिह नाश्रीकृतः ? उच्यते, प्रभूतयोगत्वात्, अपर्याप्तसञ्ज्ञियोगात् हि पर्याप्तासञ्ज्ञियोगो जघन्योऽप्यनङ्गुल्ये-
पगुणः । 'सुहुमो भवे सेस' त्ति 'भवाइ' इत्येतदत्रापि संबध्यते । भणितैकादशप्रकृतिभ्यः शेषाः नवोत्तरशतलक्षणाः
प्रकृतीराश्रित्य सर्वजघन्यवीर्यलब्धियुक्तो यथासंभवं वह्वीः प्रकृतीर्बध्नन् भवाद्यसमये वर्तमानः सूक्ष्मापर्याप्तनिगोदजीवो
भवति जघन्यप्रदेशबन्धकः इति शेषः । सर्वासामप्यत्र बन्धसद्भावात्, सर्वजघन्यवीर्यस्य चात्रैव भावादिति गाथार्थः ॥ ९८ ॥
अथाह-ननूक्तो भवद्भिः कर्मप्रदेशादानविध्यादिभिः द्वारैः स्वरूपतः प्रदेशबन्धः । परं कस्माद्धेतोरमुं जीवः करोतीति वक्त-
व्यमिति प्रश्नपाशङ्क्य प्रदेशबन्धस्य प्रसङ्गतः पूर्वोक्तानां प्रकृतिस्थित्यनुभागानां च हेतुन्निरूपयन्नाह—
भा० घोलणजोगी परियत्त-माणजोगी असन्निओ जीवो । जहन्नपएसा बंधइ चउपयडी ता उ पुण एया ॥ ५० ॥
नरगदुगं नरयाउं देवाउं तह य पुढविमाईया । चउरिंदियावसाणा देवेसुं तहय नरएसुं ॥ ५१ ॥ उप्पत्तिभभावाओ इय पयडि-
चउक्कं न बंधंति । असन्निऽपज्जत्तो तह संकेसविसुद्धिविरहा उ ॥ ५२ ॥ एयं पयडिचउक्कं नो बंधइ तेण उच्चरियनाया ।
असन्नी पज्जत्तो सुत्तेऽणुत्तो वि दट्ठवो ॥ ५३ ॥ सोविय इग जोगट्ठिओ उक्कडजोगो भवेज्ज तेणुत्तं । घोलणजोगो अट्ठविह—

बंधगो सव्वलहुविरिओ ॥ ५४ ॥ परभुयपयडिचउक्कस्सेगं चउरो य समया जा। जहन्नपएसबंधं पकरेई एस परमत्थो ॥ ५५॥ पज्जत्तजहन्नजोगो सव्वुक्कोसो वि समयचउगं जा। एसेव कालनियमो उत्तरसुत्ते वि दट्ठव्वो ॥ ५६ ॥ पज्जत्तसन्निजोगो जहन्नो वि हु पज्जअमणजीवस्स। उक्कसजोगाओ वि हु असंखगुणिओ त्ति किर होइ ॥ ५७ ॥ तो पउरजोगभावा पज्जगसन्निणो न गहंति। पकयं सुत्ते तह किर बंधइ दुन्नेव अपमत्तो ॥ ५८ ॥ घोलणजोगी अट्ठविहबंधगो त्ति सपंओगलहुविरिओ। अपमत्तो बंधंतो नामस्सिगतीसपयडीओ ॥ ५९ ॥ जहन्नपएसं बंधइ आहारदुगं ति तीसबंधे वि। एयं बज्झइ नवरं अप्पा भागा तहिं हवंति ॥ ६० ॥ इय एक्कतीसबंध-गहणं अपमत्तसंजयावन्नो। बंधइ आहारदुगं तह पंचासंजयसम्मो त्ति ॥ ६१ ॥ अविरयसम्मो पयडी देवदुगविउव्विजुयलवित्थयरं। पंच इमाओ भवपढम-गम्मि समयम्मि वट्टंतो ॥ ६२ ॥ जहन्नपएसा पकरइ तत्थ नरो कोइ तित्थयरनामं। बंधिय देवभवम्मी उववन्नो पढमसमयम्मि ॥ ६३ ॥ मणुयगईपाओगा पुव्वुत्ता नामपयडिओ तीसं। बंधंतो मूलिल्लिगपयडीओ सत्त बंधंतो ॥ ६४ ॥ अविरयसम्मो नियजोगजहन्नविरिओ उ तित्थयरनामं। जहन्नपएसं बंधइ परमिह अइअप्पविरियत्ता ॥ ६५ ॥ अणुत्तरवासी गेज्जो तह नेरइओ वि तित्थयरनामं। बंधइ नवरं तत्थ य जहन्नजोगो उ परिसओ ॥ ६६ ॥ नो लब्भइ तेण तओ नरयुप्पत्तेण नेह अहिगारो। तिरिया नो तित्थयरस्स बंधगा तेण नो गहिया ॥ ६७ ॥ मणुया उभवाइमए समए तित्थयरनामसहियाओ। नामिगुणतीसपयडी बंधंती किंतु तहिं अप्पा ॥ ६८ ॥ भागा भवंति तेणि-गुणतीसबंधो न एत्थ संगहिओ। तित्थयरसहियनामिगतीसा बंधे जइणेर ॥ ६९ ॥ तत्थप्पं पुण विरियं नो लब्भइ सेसपयडि नामस्स। बंधेसु तित्थयरं न अत्थि तेणुक्कसियनाया

॥ ७० ॥ सीसइंधी देवस्स नेव भवआइमंमि समयम्मि । घेप्पइ तित्थयरस्स उ तह सुरयेउविवदुगाणं ॥ ७१ ॥ चद्धति-त्थयरनामा नेरइयसुरेहि चविय उप्पन्नो । सत्तविहबंधगो भूय-कारपभिइणववखाणे ॥ ७२ ॥ वानियत्वं तित्थयर-संजुयं गुणेहि पाआगं । नामिगुणवीसपयडीनिवत्तंतो सपाओगं ॥ ७३ ॥ अइलहुजहन्नविरिए ववटियओ जम्मआइसमयम्मि । पवट्टमाणो मणुओ जहन्नबंधं निवत्तेइ ॥ ७४ ॥ पयडिचउक्कं एयं भवपच्चयओ सुरा व नेरइया । बंधंति नेव नेगिए नारिगया तह य तिरियाओ ॥ ७५ ॥ अकम्मभूमिसमुत्था जम्माइमसमयए निबंधंति । एयं नवरं ते सुरगइजोग-दसोसपयडीओ ॥ ७६ ॥ पुव्वुत्तसरूवाओ विरयंतो न गुणतीसपभिईया । बंधट्ठाणा जं ते तित्थयराहारदुगसहिया ॥ ७७ ॥ चउक्के तिरियाण उ तित्थयराहारसंभवो नत्थि । बंधं तो किर तेसुं लब्भंते अप्पभागाओ ॥ ७८ ॥ इय ते वि हु नारिगया मणुयस्स उ अट्ठवीसबंधम्मि । बहुभागा लब्भंती सो वि न घेप्पइ तहा तीसा ॥ ७९ ॥ इगतीसा वि य बंधा सुरगइजोगा उ संजयस्सेव । तुंवी जहुत्तवीरियअभावओ ते वि नो गेज्झा ॥ ८० ॥ सुरगइजोगा नामे अन्ने बंधा वि संतिनो केइ । इयपरिमाविय इग-तीस (इगुणतीस) बंधगस्सेव मणुयस्स ॥ ८१ ॥ गहणं कयंति विरिओ पज्जअसन्नो उ सुरगईजोगा । एयं पयडिचउक्कं बंधइ नवरं तहि विरियं ॥ ८२ ॥ बहुगं तेण न गेज्झो जेणं अप्पज्जसन्निजोगा उ । जोगो पज्जत्तासन्निस्स उ एहोति असंखगुणो ॥ ८३ ॥ सुहुमो भवे सेसा इमस्स वयणस्स उ एस भावत्थो । पत्थुयगाहुत्ताणं पयडीण इगारसाणं जा ॥ ८४ ॥ सेसा नवुत्तरसयरूवा पयडीउ आसज्ज । सुहुमो निगोयजीवो अप्पज्जो अप्पविरिओ य । ॥ ८५ ॥ भवपढमगसमयम्मी पवट्टमाणो उ बंधगो होइ । जहन्नाण पएसाणं अज्झाहारो इमो कज्जो ॥ ८६ ॥ पयडीण बंधभावा सव्वासिं सव्वअप्प-

विरियस्स । एत्थेव य सब्भावा एसो बंधाइमो होइ ॥ ८७ ॥ सत्तरस मुहुमप्पभिई गाहाचउगं इमं समक्खायं । तब्भणणाओ एस पएसाण गहणविहीदारं ॥ ८८ ॥ अह पयडीण ठिईणं अणुभागाणं तहा पएसाणं । बंधं कुणंति जीवा हेऊहिं जेहिं ते भणिमो ॥ ८९ ॥

जोगा पयडिपएसं ठिइअणुभागं कसायओ कुणइ । कालभवखित्तवेक्खो उदओ सविवाग अविवागो ॥९०॥

टी० योगः पूर्वोक्तशब्दार्थः शक्तिरुत्साहः पराक्रमः वीर्यमिति यावत्, तस्मात् योगात् प्रकरणं प्रकृतिः, कर्मणां ज्ञानावरणादिस्वभावः । प्रकृष्टाः पुद्गलास्तिकायदेशाः प्रदेशाः, कर्मवर्गणान्तःपातिनः कर्मस्कन्धाः । प्रकृतयश्च प्रदेशाश्च प्रकृतिप्रदेशमिति समाहारः । तज्जीवः करोतीति सम्बन्धः। प्रकृतिप्रदेशयोर्योगो हेतुरित्यर्थः। एतदुक्तं भवति–यद्यपि पूर्वं मिथ्यात्वाविरतिकषाययोगाः सामान्येन कर्मणो बन्धहेतव उक्ताः, तथाप्याद्यकारणत्रयाभावेऽप्युपशान्तमोहादिषु केवलयोगसद्भावे वेदनीयलक्षणप्रकृतिस्तत्प्रदेशाश्च बध्यन्ते । अयोग्यवस्थायां तु योगाभावे न बध्यन्त इत्यन्वयव्यतिरेकाभ्यां ज्ञायते प्रकृतिप्रदेशबन्धयोर्योग एव प्रधानं कारणम् । नन्वयं योगः किं स्वरूपः? कियान् भवति? सर्वजीवानां च सदृशो विसदृशो वा भवति? इत्यत्राभिधीयते। योगस्तावत् जीवस्य वीर्यमुच्यते इत्यसकृदुक्तम् । तत्र सूक्ष्मनिगोदस्यापि सर्वजघन्यवीर्यलब्धियुक्तस्य प्रदेशाः केचिदल्पवीर्याः केचित्तु बहुबहुतरबहुतमादिवीर्यार्पिताः । तत्र सर्वजघन्यवीर्ययुक्तस्यापि प्रदेशस्य सम्बन्धिवीर्यं प्रज्ञाछेदेन छिद्यमानमसङ्ख्येयलोकाकाशप्रदेशप्रमाणान् भागान् प्रयच्छति । तस्यैवोत्कृष्टवीर्ययुक्ते प्रदेशे यद्वीर्यं तदेतेभ्योऽसङ्ख्येयगुणान् भागान् प्रय-



रुर्जति । उक्तं च "पन्नाए छिन्नन्ना असंखलोगाण जत्तिय पएसा । तत्तिय वीरियभागा जीवपएसम्मि एक्केक्के ॥१॥ सव्वजहन्ने विरिए जीवपएसंमि एत्तिया सव्वा । तत्तो असंखगुणिया बहुविरिए जियपएसम्मि ॥ २ ॥ " त्ति तत्र जघन्यवीर्यभागेन युक्तानां तत्प्रदेशानां समुदायः समानजातीयत्वादेका वर्गणा, एकेन वीर्यविभागेनाधिकानां तत्प्रदेशानां समुदायो द्वितीया वर्गणा, वीर्यभागद्वयाधिकानां तत्प्रदेशानां समुदायस्तृतीया वर्गणा, एवमेकस्या आकाशश्रेणेरसङ्ख्येयभागे यावन्तः प्रदेशाः तावत्यः एकोत्तरवृद्धिक्रमेण वर्गणा वाच्याः । ताश्चासत्कल्पनया षट् स्थाप्यन्ते । जघन्यवर्गणाप्रदेशाश्चासङ्ख्येयवीर्यभागान्विता अप्यसत्कल्पनया दशभागान्विताः स्थाप्यन्ते । ते च प्रदेशा एकैकस्यां वर्गणायामसङ्ख्येयप्रतरप्रदेशमाना अप्यसत्कल्पनया त्रयस्त्रयः स्थाप्यन्ते । इदमेकं वीर्यस्पर्द्धकम् । इत ऊर्द्ध्वमेकेन द्व्यादिभिर्वा वीर्यभागैरधिकास्तत्प्रदेशा न लभ्यन्ते । किं तर्हि ? असङ्ख्येयलोकाकाशप्रदेशतुल्यैरेव वीर्यभागैरधिकास्तत्प्रदेशाः प्राप्यन्ते, अतस्तेषामपि समानवीर्यभागानां समुदायः द्वितीयस्पर्द्धकस्याद्या वर्गणा, तत एकेन वीर्यभागेनाधिकानां समुदायो द्वितीया वर्गणा, एवमेकोत्तरवृद्धिक्रमेणैता अपि श्रेण्यसङ्ख्येयभागवर्त्तिप्रदेशराशिमाना वाच्याः । एतासामपि समुदायो द्वितीयं वीर्यस्पर्द्धकम् । इत ऊर्द्ध्वं पुनरप्येकोत्तरवृद्धिर्न लभ्यते, किं तर्हि ? असङ्ख्येयलोकाकाशप्रदेशतुल्यैरेव वीर्यभागैरधिकास्तत्प्रदेशाः प्राप्यन्ते, अतस्तेनैव क्रमेण तृतीयं स्पर्द्धकमारभ्यते । पुनस्तेनैव क्रमेण चतुर्थं पुनः पञ्चममित्येवमेतान्यपि वीर्यस्पर्द्धकानि श्रेण्यसङ्ख्येयभागवर्त्तिप्र-

| | | |
|---|---|---|
| १५ | १५ | १५ |
| १४ | १४ | १४ |
| १३ | १३ | १३ |
| १२ | १२ | १२ |
| ११ | ११ | ११ |
| १० | १० | १० |

देशमानानि वाच्यानि। एतेषां च [एतावतां] स्पर्द्धकानां समुदाय एकं योगस्थानकमुच्यते। इदं तावदेकस्य सूक्ष्मनिगोदस्य भवाद्यसमये सर्वजघन्यवीर्यस्य योगस्थानकमभिहितम्। तदन्यस्य तु किञ्चिदधिकवीर्यस्य जन्तोरनेनैव क्रमेण द्वितीयं योगस्थानकमुत्तिष्ठति। तदन्यस्य तु तेनैव क्रमेण तृतीयम्। तदन्यस्य चतुर्थमित्यमुना क्रमेणान्यपि योगस्थानानि नानाजीवानां कालभेदेनैकजीवस्य वा श्रेणेरसङ्ख्येयभागवर्त्तिप्रदेशराशिमानानि भवन्ति। ननु जीवानामनन्तत्वात्तद्भेदात् योगस्थानान्यनन्तानि कस्मात् न भवन्ति? नैतदेवम्, यत एकैकस्मिन् सदृशे योगस्थाने अनन्ताः स्थावरजीवा वर्त्तन्ते, त्रसास्त्वेकैकस्मिन् सदृशे योगस्थाने असङ्ख्याता वर्त्तन्ते, तेषां चैकैकमेव विवक्षितमतो विसदृशानि यथोक्तमानान्येव योगस्थानानि भवन्ति। तत्र पर्याप्ताः सर्वेऽपि स्वभावोग्ये सर्वजघन्ययोगस्थाने तु जघन्यतः समयमुत्कृष्टतश्चतुरः समयान् यावद् वर्त्तन्ते। ततः परमन्ययोगस्थानमुपजायते। स्वभावोग्योत्कृष्टयोगस्थाने जघन्यतः समयमुत्कृष्टतस्तु द्वौ समयौ, मध्यमेषु तु जघन्यतः समयमुत्कृष्टतस्तु क्वचित्त्रीन्, क्वचिच्चतुरः, क्वचित्पञ्च, क्वचित् षट्, क्वचित्सप्त, क्वचित् त्वष्टौ समयान्यावद्वर्त्तन्ते। अपर्याप्तास्तु सर्वेऽप्येकस्मिन् योगस्थाने एकमेव समयमवतिष्ठन्ते। ततः परमसङ्ख्येयगुणवृद्धेषु प्रतिसमयमन्यान्ययोगस्थानेषु सङ्क्रामन्ति। अयं चैतावानपि योगो मनःप्रभृतिसहकारिकारणवशात् संक्षिप्य सत्यमनोयोगादिभेदभिन्नः पूर्वं पञ्चदशधा प्रोक्तस्तदेवमुक्तस्वरूपयोगे जघन्ये जघन्यं मध्यमे मध्यममुत्कृष्टे तूत्कृष्टं प्रदेशबन्धं जीवः करोतीति स्थितम्। 'ठिइ अणुभागं कसायओ कुणइ'त्ति स्थानं स्थितिः कर्मणोऽन्तर्मुहूर्त्तादिसप्ततिसागरोपमकोटीकोटिपर्यन्तमवस्थानमित्यर्थः। अनु पश्चाद्बन्धोत्तरकालं भजनमनुभवनं यस्यासावनुभागः, इक्षुयष्टेरिव कर्मणो रस इत्यर्थः। स्थितिश्चानुभागश्च स्थित्यनुभागमि-

गीतापि समाहारस्तज्जीवः कषायवशात् करोति निर्वर्त्तयतीत्यर्थः । कषायाः पूर्वोक्तशब्दार्थस्वरूपसङ्ख्यास्तज्जनितो जीवस्याध्यवसायविशेषः कषायशब्देनेहोच्यते । कषाया उदीर्णा नानाजीवानां कालभेदेन एकजीवस्य वा सर्वजघन्याया अपि ज्ञानावरणादिकर्मस्थितेर्निर्वर्त्तकान्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणान्यन्तर्मुहूर्त्तिकान्यध्यवसायस्थानानि जनयन्ति । समयाधिकजघन्यस्थितिकानि तु त एव तेऽभ्यस्तानि विशेषाधिकानि जनयन्ति । द्विसमयाधिकतज्जघन्यस्थितिजनकानि पुनस्त एवानन्तरेऽभ्यस्तानि विशेषाधिकानि जनयन्ति । त्रिसमयाधिकतज्जघन्यस्थितिजनकानि तु त एवानन्तरेऽभ्यस्तानि विशेषाधिकानि एवं समयोत्तरवृद्धतज्जघन्यस्थितिजनकानि विशेषाधिकानि तावद् वाच्यानि यावत्ते एव कषायाः समयोनोत्कृष्टज्ञानावरणादिस्थितिजनकाध्यवसायस्थानेभ्यः सर्वोत्कृष्टस्थितिजनकाध्यवसायस्थानानि विशेषाधिकानि निर्वर्त्तयन्ति, एतानि च सर्वाण्यपि मीलितान्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणान्येव भवन्ति । अमीषां च स्थापनादिकिञ्चिद्विशेषस्वरूपं यथा 'उक्कोसस्स ठिईए अज्झवसाया' इति गाथादलविवरणे पूर्वमुक्तं तथा द्रष्टव्यम् । तदेवमेतैः कषायजनिताध्यवसायस्थानैर्जन्यत्वात्कर्मणः स्थितिः कषायप्रत्ययात् सिद्धाः । तेषामेव कषायाणां सम्बन्धि यद्दलिकमुदयप्राप्तं तत्र यदनुभागस्थानकमुदेति, तेन जीवस्य योऽध्यवसायो जन्यते, तद्वशेन बध्यमानकर्मणामनुभागो निष्पद्यते । तथा ह्यनुभागस्यैकपरमाणुगतभागादिका स्पर्द्धकावसाना प्ररूपणा यथाऽनिवृत्तिबादरगुणस्थाने कृता, तथा द्रष्टव्याः । तेषां चानुभागस्पर्द्धकानां सिद्धानन्तभागवर्त्तिनामभव्येभ्योऽनन्तगुणानां समुदायः प्रथममनुभागस्थानकं भवत्यन्येषु त्वधिकरसेषु स्कन्धेषु तेनैव क्रमेण द्वितीयं तावत्प्रमाण-

१ गाथा ६१ उत्तरार्द्धम् ।

मेरानुभागस्थानकमुत्तिष्ठति । अन्येषु त्वंधिकृतेषु स्कन्धेषु तेनैव क्रमेण तृतीयमनुभागस्थानकमुत्तिष्ठतीत्येवं सर्वेष्वपि कषायकर्मस्कन्धेष्वसङ्ख्येयलोकाकाशप्रदेशप्रमाणान्यनुभागस्थानानि भवन्ति । ज्ञानावरणादिसमस्तकर्मस्कन्धेष्वप्येतावन्त्येवामूनि भवन्ति। परं तावदिह कषाया एव कारणत्वेन विचारयितुं प्रक्रान्ता। तत्र जघन्यानुभागस्थानानि उत्कृष्टतश्चतुरः समयान्यावदुदये समागच्छन्ति। मध्यमानि तु कानिचित्त्रीन्अपराणि चतुरोऽन्यानि पञ्चान्यानि षडपराणि सप्तान्यानि त्वष्टौ समयान् यावदुत्कृष्टेन उदये समागच्छन्ति। उत्कृष्टानुभागस्थानानि तूत्कृष्टतो द्वौ समयौ यावदुदये समागच्छन्ति। ततः परं सर्वेनान्यतरारवर्तते। जघन्यतस्तु सर्वाण्यपि समयस्थितान्येव भवन्त्यतस्तज्जन्यो जघन्यमध्यमोत्कृष्टभेदभिन्नोऽध्यवसायोऽप्येतावत्कालस्थितिक एव भवति । तेन च जघन्यादिभेदेनाध्यवसायवैचित्र्येण बध्यमानकर्मानुभागो जघन्यादिभेदविचित्रो जन्यते। अतः कषायानुभागजनिताध्यवसायवैचित्र्यनिर्वर्त्यत्वात् कर्मणामनुभागः कषायप्रत्ययः सिद्धः। मिथ्यात्वाविरतिकारणद्वयाभावेऽपि हि कषायसञ्चारे प्रमत्तादिषु स्थित्यनुभागबन्धौ भवतः, कषायाभावे तूपशान्तमोहादिषु न भवत इतीहाप्यन्वयव्यतिरेकाभ्यां ज्ञायते स्थित्यनुभागबन्धयोः कषायाः प्रधानं कारणम्। अत्रोक्तमप्यर्थमनवगच्छन्नाह–ननु पूर्वं मिथ्यात्वाविरतिकषाययोगा बन्धहेतवः उक्ताः, अत्र तु प्रकृत्यादिचतुष्टयस्यापि कर्मणो योगकषायरूपं कारणद्वयमेवोक्तमिति कथं न पूर्वापरविरोधः ? ननूक्तमत्र यद्वतान्वयव्यतिरेकानुविधायित्वेन योगाः कषायाश्च प्रधानं कारणम्, तेषां तु योगकषायाणां सहकारिकारणत्वेन व्याप्रियमाणत्वात् मिथ्यात्वाविरत्योरन्येषां च ज्ञानावरणादिकर्मदेशक्षेत्रकालादीनां कारणत्वमनिवारितमेवातः पूर्वोक्तमपि निरवद्यमित्यलं विस्तरेण। तदेवं व्याख्यातं पूर्वार्द्धम्, तद्व्याख्याने च पूर्वमनेकस्थानेष्वस्यां च

गाथायामुत्तरत्र चाल्पबहुत्वचिन्तायामतिशयोपयोगित्वात् प्ररूपितानि योगस्थानस्थितिबन्धाध्यवसायस्थानानुभागबन्धाध्य-
वसायस्थानानि लेशतः विस्तारार्थिना तु कर्मप्रकृतिरन्वेषणीयेति । साम्प्रतमित्थं बद्धस्य कर्मण उदयो यथा भवति, तथा
संक्षेपतो दर्शयितुमाह-' कालभव ' इत्यादि इह तावत् मूलप्रकृतयो ध्रुवोदया उत्तरप्रकृतयोऽपि ज्ञानावरणपञ्चकचक्षुरचक्षुर-
वधिकेवलदर्शनावरणमिथ्यात्वतैजसकार्मणवर्णादिचतुष्कागुरुलघुस्थिरास्थिरशुभाशुभनिर्म्माणान्तरायपञ्चकलक्षणाः सप्तविंश-
तिः ध्रुवोदया एव, सर्वेषां जन्तूनामुदयव्यवच्छेदादर्वागेतत् प्रकृत्युदयः कालभवादिनिरपेक्षो निरन्तरं भवत्येवेत्यर्थः । शेषाणां
तु निद्रापञ्चकाद्युत्तरप्रकृतीनां कालभववशेनापेक्ष उदयः प्रवर्त्तते । तथाहि-निद्रावेदादीनां प्रायो रजन्यादिकाले उदयो भवतीति
कालापेक्षत्वम्। नारकतिर्यङ्मनुष्यदेवभवैकान्तयोग्यानि च नरकगत्यादीनि तु तं तं भवं प्राप्योदयमागच्छन्तीति भवापेक्षित्वम्।
आनुपूर्व्युदयश्च क्षेत्रापेक्षः पूर्ववदेवेत्यर्थः।कोऽपि निद्रोदयः कालं ग्रीष्मं, भवं पृथिव्यादिकं (क्षेत्रं सजलादिकं) प्राप्यातिशयेन
प्रवर्त्तेत इति कालादिनयापेक्ष्यः। एवमन्यत्रापि स्वधिया भावनीयम् । उपलक्षणं चैतदन्यथा द्रव्यभावाद्यपेक्षोऽपि प्रकृती-
नामुदयो भवत्येव। तथाहि-स एव निद्रोदयो भक्षितमाहिषदधिदृग्धताकादिद्रव्यस्य तत्तद्रव्यमपेक्ष्य भवन् द्रव्यापेक्षश्चित्त-
स्वास्थ्यादि भावमपेक्ष्य भवन् भावापेक्षः। एवं स्रक्चन्दनाहारागारोग्यत्वादिद्रव्यभावापेक्ष्यः सातायुदयोऽपि भावनीयः, तदेवं
संक्षेपेणोदयः प्रोक्तः। अथवा संक्षिप्ततरप्रकारेण द्विविध उदयः, सविपाकोऽविपाकश्च । यत्र स्वस्वभावव्यवस्थितं स्वरूपेणैव
वर्णादि इत्यसौ सविपाकोदयो, यथा मनुष्यस्य मनुष्यगतिपञ्चेन्द्रियजात्यादितद्भवप्रायोग्यकर्मोदयः। यत्र तु प्रायो निरसीकृतं
स्तिबुकसङ्क्रमसङ्क्रान्तं परप्रकृतिभावेन कर्म वेद्यते, सोऽविपाकोदयो, यथा तस्यैव मनुष्यस्य मनुष्यगतिभावेन वेद्यमानानां

नरकतिर्यग्देवगतीनामुदयः। तस्मात् स्वरूपेण पररूपेण वा वेदितमेव कर्म क्षीयते नान्यथेति गाथार्थः ॥ ९९ ॥ तदेवमत्र योगस्थानानि कारणम्, प्रकृतिप्रदेशाश्च तत्कार्यमित्युक्तम्। तथा स्थितिबन्धाध्यवसायस्थानानि कारणम्, स्थितिविशेषाश्च तत्कार्यम्। अनुभागबन्धस्थानानि कारणम्, अनुभागश्च तत्कार्यमित्यप्युक्तमत एतेषां सप्तानामपि पदार्थानां परस्परमल्पबहुत्वचिन्तयन्नाह—

भा० जोगागाहा जोगो हेऊ पयडीण तह पएसाणं। जं भणियं तहि मिच्छाविरइकसाया वि हेउ त्ति ॥९०॥ जइ वि हु सामन्नेणं भणिया उ तहा वि तेसि विरहे वि। उवसंताइगुणेसुं केवलजोगस्स भावे वि ॥ ९१ ॥ वेयणियकम्मपगई तस्स पसाया य तेण वज्झंते। चउदसमगुणे जोगाभावे पुण नेव वज्झंति ॥ ९२ ॥ इय अन्नयवइरेगाओ पयडीणं पएसाणं। बंधस्स जोग एव हि पमुहं किर कारणं होई ॥ ९३ ॥ जोगमल्पं च इमं भणंति सुहुमस्स किर निगोयस्स। अह थोवविरियलद्धीजुयस्स जे किर जियपएसा ॥ ९४ ॥ केइ त्थिय अप्पविरिया केइ वि बहुबहुतमाइविरियजुया। तहि सव्वअप्पवीरियजुत्तस्स विकिर पएसस्स ॥ ९५ ॥ जं होई किरविरियं तं पन्नाछेयणेण छिज्जंतं। अस्संखलोगआगासदेससंखा उ भागाओ ॥ ९६ ॥ देई तस्सेवोक्किट्ठ—विरियजुत्तंमि किर पएसम्मि। जं विरियं तं वेसिं अस्संखगुणं जओ उत्तं ॥ ९७ ॥ पन्नाए छिन्नंता असंखलोगाण जत्तियपएसा। तत्तियविरियविभागा जीवपएसम्मि एक्केक्के ॥ ९८ ॥ सव्वजहन्नगविरिए जीवपएसम्मि एत्तिया संखा। तत्तो असंखगुणिया बहुविरिए जियपएसम्मि ॥ ९९ ॥ वीरियवग्गणफड्डगअसंखगुणणेण जोगठाणेणं। ते अस्संखा वेसिं भावत्थो वित्तिओ नेओ ॥ १००० ॥ पज्जत्ता सव्वे वि हु जहन्नजोगम्मि नियजोगम्मि। जहन्नेणेगं

समयं सुतुक्कोसं तु चउसमया ॥ १ ॥ जहन्नेणं इगसमयं उक्कोसेणं तु दुन्नि उक्कोसे । मज्झिमजोगंमि जहन्नओ उ समयं
समयं हुतुक्कोसं तु चउसमया ॥ १ ॥ जहन्नेणं इगसमयं उक्कोसेणं तु दुन्नि उक्कोसे । मज्झिमजोगंमि जहन्नओ उ समयं
मुक्कोसं ॥ २ ॥ कइया बितिचउपंचछसगट्ठसमयाउ जाव वट्टंति । अपज्जतया उ सव्वे एगम्मि जोगठाणम्मि ॥ ३ ॥
इगसमयमेव अच्छंति वा असंखेज्जगुणपवुड्ढीए । पइसमयं उक्कोसग–जोगट्ठाणेसु हुंति ॥४॥ ठिइअणुभागं वयणे ठिइअणु-
भागाण किर कसाया उ । बंधस्स हेउणो किर हवंति तहिं ठिइठाणेण ॥ ५ ॥ किंचि सरूवं एयं नाणा जीवाण किर जया
हुंति । उदयम्मि सम्पराया नाणावरणाइकम्माणं ॥ ६ ॥ ठीइंए निवत्तणगाणि तया संखयाण लोगाण । जे आगासपएसा
ओसया तप्पमाणाइं ॥ ७ ॥ अंतोमुहुत्तमेत्त–ज्झवसायट्ठाणगाणि जणयंति । तो समयाहिय जहन्नठिइए जणगाणि उ क-
साया ॥ ८ ॥ तेहिं तो ताणि विसेसहियाणि तओ उ दुसमयहियाए । ठीइंए जणगाणि उ विसेसअहियाणि जावंति ॥९॥
एवं तिसमयपभिइं अहियठिइंए विसेसअहियाणि । भणियव्वाणिय एवं सव्वुक्कोसा ठिई जाव ॥१०॥ ते वि य असंखलोगा-
गासपएसप्पमाणया कमसो । ठिइबंधज्झवसायट्ठाणाणि विसेसवुड्ढाणि ॥ ११ ॥ हुंति य वि य ठावि–ज्जंता किर वि
समचउरंसं खेत्तं । दरिसिंती तहि पढमय-पंतीइ असंखयाणं तु ॥ १२ ॥ चत्तारि तओ बीयाइ पंच तइयाइ छच्च एगाई ।
जा उक्कोसा उ ठिई अट्ठहि बिंदूहि निप्फन्ना ॥१३॥ एवं कसायजणिय–ज्झवसायट्ठाणगेहि जणियत्ता । कम्मठिईकसायकार-
णिया सिद्धा वयंति त्ति ॥१४॥ तेसिंपि कसायाणं जं दलियं उदयपत्तयं अत्थि । तं अणुभागट्ठाणं उदेइ तेणं जियस्सेव ॥१५॥
जोऽज्झवसाओ जणयइ तस्स वसेणं तु बज्झमाणेण । कम्माणं अणुभागो निप्फज्जइ तहि परूवणया ॥ १६ ॥ अणुभागाणं
जा इग–परमाणू पगइभागपभिईया । फड्डगपज्जवसाणा सा सव्वावित्तिओ नेया ॥ १७ ॥ अनुभागफड्डगाणं सिद्धाणमणंतभा-

गवचीणं। अमंवियणंवगुणाणं अणुभागठ्ठाणयं पढमं ॥ १८ ॥ होई अहिगरसेसुं तेणेव कम्मेण कम्मखंधेसु । बीयमणुभाग-ठाणं एवं तइयंपि विन्नेयं ॥ १९ ॥ एवं किर सवेसुं वि कसायरसेसु कम्मखंधेसु । असंखयमाणाइं भवंति अणुभागठाणाइं ॥ २० ॥ नाणावरणाइसुंपि कम्मक्खंधेसु इय पमाणाइं । हुंति परमिह कसाया कारणभावेण ववखाया ॥ २१ ॥ नहि जहन्नअणुभाग–ठाणा जहन्नेण एगसमयं तु । चउसमगा उक्कोसेण हुंति तह ठाणगा जेट्ठा ॥ २२ ॥ जहन्नेणं इगसमयं उक्कोसेणं तु दुन्नि समयाउ । मज्झिमठाणे उ जहन्नओ उ समयं तदुक्कोसं ॥ २३ ॥ कइया वितिन्नि चउरो समया जावट्ठ हुंति उक्कोसं । एय परं सवत्थवि अन्नं परिवत्तए ठाणं ॥ २४ ॥ एवं किर तज्जणिओ जहन्नाईभेयभिन्नओ सवो । पवइयकालठिइओ अज्झवसाओ य किर होइ ॥ २५ ॥ तेण जहन्नाइभेयज्झवसायविचित्तयाए अणुभागो । बज्झंतकम्मंतणओ जणयइ जहन्नाइभेएहिं ॥ २६ ॥ नाणाभेओ तो किर कसायअणुभागज्झवसायाण । वइचित्तेणं-निव्वित्तियाण कम्माण अणुभागो ॥ २७ ॥ होईं कसायपच्चय सवोइं वन्निंयं वहिं वंधे। कारणजुयलं भणियं मिच्छत्तं अविरई चेव ॥ २८ ॥ पुविं सामन्नेणं भणियं जइवि हु तहा वि किर तेसिं । विरहे वि पमचाइसुहुमंतेसुं किर कसाएसु ॥ २९ ॥ ठिइअणुभागा हुंती उवसंताईं कसायविरहम्मि । ठिइअणुभागा न हुंति इय अन्नयवइय-रेएहिं ॥ ३० ॥ ठिइए अणुभागाणं हुंति कसाया पहाणकारणयं । एवं जोगकसाया वंधस्स चउव्विहस्सावि ॥ ३१ ॥ हुंतु-त्तमकारणयं तेसिं सहकारिकारणत्तेणं । वावरमाणाण इहं मिच्छाविरईण अन्नेसिं ॥ ३२ ॥ नाणावरणाईणं तह दवखेत्तका-लमाईणं । सहकारकारणत्तं अनिवारियमेव इह होइ ॥ ३३ ॥ पुवदलं ववखायं जोगा पमाइयाइ गाहाए । तव्वक्खाणे पुवं

तह उत्तरत्थ *अप्पयबहुत्तचिंताइसोवओगित्ता । जोगट्ठाणा वह ठिइबंधज्झवसायठा-
अणेगठाणेसु तह एत्थ ॥ ३४ ॥ तह उत्तरत्थ ... कम्मपयडिचुन्नीओ वित्थरत्थीहिं तु नेया ॥ ३६ ॥
णाओ ॥ ३५ ॥ अणुभागबंधज्झवसायठाणया लेसओ उवक्खाया । कम्मपयडिचुन्नीओ वित्थरत्थीहिं तु नेया ॥ ३६ ॥ पभणइ कालभवाई-
एवं च विसेसेणं बंधचउक्कस्स हेयवो भणिया । अह बद्धकम्मउदयो जह होई तह उ संखेवा ॥ ३७ ॥ पभणइ कालभवाई-
गाहाअद्धेण तत्थ मूलिल्ला । पयडीओ धुवउदया उत्तरपयडी उ पुण एया ॥ ३८ ॥ आवरणाणं दसगं दंसणचउमिच्छतेय-
कम्मइगं । वन्नाइ चउगगुरुलहु-थिरदुगसुभजुयलनिम्माणं ॥ ३९ ॥ इय सत्तवीसपयडी धुवउदया एव सव्वजंतूणं । उदयवव-
छेयआरा कालभवाईण निरवेक्खो ॥ ४० ॥ इय पयडीणं उदओ निरंतरं होइ सेसयाणं तु । निद्दापणगाईणं तु कालभवखेत्त-
सावेक्खो ॥ ४१ ॥ जेणं निद्दावेयाईयाण पाएण रयणिकालम्मि । उदओ होई कालावेक्खत्तं तह य नरएसुं ॥ ४२ ॥ तिरि-
माणुसदेवेसुं एगंतेणेव तेसि जोगाणि । नरगगइयाणि गईवभिईणि कम्माणि तम्मि भवे ॥ ४३ ॥ आगच्छंती उदयं भव आ-
वेक्खत्तं इमं कहियं । अणुपुव्वीए उदओ खेत्तावेक्खो मुणेयव्वो ॥ ४४ ॥ अहवा निद्दाउदओ एगोविहु पप्प गिम्हकालं
तु । पुढवाइभवं खेत्तं सजलाईयं च संपप्प ॥ ४५ ॥ वट्टइ य विसेसेणं इइकालाइतिगवेक्खत्तं । अन्नत्थवि आजोज्जं बुहेहि
उवलक्खणं चेयं ॥४६॥ तेण स एव हि निद्दा उदओ कस्सविय माहिसे दहिए । नाइंगणे य असिए तद्दव्वमवेक्ख जा निद्दा
॥ ४७ ॥ नीरोगमणसमाहि–त्तणेण निद्दाएँ जो भवे उदओ । भावावेक्खो स भवइ एवं अन्नंपि विन्नेयं ॥ ४८ ॥ सवि-
वागो अविवागो दुविहो उदओ उ तत्थ *सविवागो । नियनियरूवठियं जं कम्मं तेणेव रूवेणं ॥ ४९ ॥ उदयम्मी
आगच्छइ सो सविवागो त्ति जह मणुस्सगई । पंचिंदियजाईविय तब्भवपाओगकम्मुदओ ॥ ५० ॥ जत्थ किर थिवुगसंकम-

संकंतं अवरपयडिभावेण। वेइज्जइ कम्मंसो होई अविवागउदओ त्ति ॥ ५१ ॥ जह तस्सेव नरस्स उ वेइज्जमाणेण माणुस-गईए। रूवेणं नारयतिरिदेवगईणं भवे उदओ ॥ ५२ ॥ जोगा पयडिपएसा कसायजणियठिइए य बंधस्स। ठाणाणिय ठिइ-विसेसाणुभागज्झवसायठाणाणि ॥ ५३ ॥ अणुभागपलिच्छेया एवं पयाण सत्तठाणाण। कारणकज्जविभागो जह होइ तहा निसामेह ॥ ५४ ॥ तत्थ किर जोगठाणाणि कारणं पयडिओ पएसा य। तक्कज्जं तह ठिइबंधज्झवसायस्स ठाणाणि ॥ ५५ ॥ हुंतेह कारणं तह ठिईविसेसा उ तस्स कज्जंति। अणुभागज्झवसायट्ठाणाणि य कारणं हुंति ॥ ५६ ॥ अणुभागो तक्कज्जं ई सत्तन्ह तु इह पयत्थाणं। अन्नोन्नं अप्पबहुत्तवित्तणत्थं इमं आह ॥ ५७ ॥

सेढिअसंखेज्जइमे जोगट्ठाणाणि हुंति सव्वाइं। तेसिमसंखेज्जगुणो पयडीणं संगहो सव्वो ॥ १०० ॥
तासिमसंखेज्जगुणा ठिईविसेसा हवंति नायव्वा। ठिइबंधज्झवसाणाणि असंखगुणाणि एत्ताओ ॥१०१॥
तेसिमसंखेज्जगुणा अणुभागे हुंति बधठाणाणि। एत्तो अणंतगुणिआ कम्मपएसा मुणेयव्वा ॥ १०२ ॥
अविभागपलिच्छेआ अणंतगुणिया हवंति इत्तो य। सुयपवरदिट्ठिवाए विसिट्ठमइओ परिकहंति ॥ १०३ ॥

टी० एकस्याः समयप्रसिद्धाकाशश्रेणेरसंख्येयभागे यावन्तः प्रदेशास्तत्सङ्ख्यानि योगस्थानानि सर्वाण्यपि भवन्ति। तानि चोत्तरपक्षापेक्षया स्तोकानीति शेषः, यथा चैतान्येतावन्ति भवन्ति, तथाऽनन्तरगाथायां सविस्तरमुक्तमिति नेहोच्यते। तेभ्यश्च योगस्थानेभ्योऽसङ्ख्येयगुणो ज्ञानावरणादिप्रकृतीनां सर्वोऽपि संग्रहः समुदायो मीलक इत्यर्थः।

१ सङ्ख्यातीता' स्थलमधिष्ठानस्य सर्वा प्रकृतय।

अयमत्र भावार्थः-इह तावदावश्यकादिष्ववधिज्ञानदर्शनयोः क्षयोपशमभेदादसङ्ख्येयभेदा उक्ताः "संखाइआओ खलु ओहीनाणस्स सव्वपयडीओ" इत्यादिवचनात्। ततश्चैतदावरणबन्धस्याऽपि एतावन्तो भेदा भवन्त्येव, बद्धस्यैव क्षयोपशमोपपत्तेरिति। तथाहि-अवधारणं कश्चित् जीवो देशक्षेत्रकालभावभेदादन्यादृशं बध्नाति कश्चिच्चान्यादृशम्, उदेत्यपि कस्यचिदन्यथा कस्यचिच्चान्यथेति। एवं नानाजीवेषु मतिज्ञानावरणादीनां शेषाणामप्यावरणानाम्। तथाहि-अन्यासामपि सर्वासां मूलोत्तरप्रकृतीनां देशक्षेत्रकालभावभेदेन बन्धवैचित्र्यादुदयवैचित्र्यात् चासङ्ख्येयभेदा भवन्ति। चतसृणामानुपूर्वीणां बन्धोदयवैचित्र्येणासङ्ख्येयभेदा भवन्ति। ते च लोकस्याऽसङ्ख्येयभागवर्त्तिप्रदेशराशितुल्या इति चूर्णिकारोक्तो विशेषः। ननु जीवानामनन्तत्वात् तेषां बन्धोदयवैचित्र्येणानन्ता अपि प्रकृतिभेदाः कस्मान्न भवन्ति? नैतदेवम्, सदृशानां बन्धोदयानामेकत्वेन विवक्षितत्वात्, विसदृशास्त्वेतावन्त एव तद्भेदा भवन्ति। ते च भेदाः प्रकृतिभेदत्वात् प्रकृतय उच्यन्ते। तासामसङ्ख्येयभागानां प्रकृतीनां संग्रहः समुदायो योगस्थानेभ्योऽसङ्ख्येयगुणो, यत एकैकस्मिन् योगस्थाने वर्त्तमानैर्नानाजीवैः कालभेदादेकजीवेन वा सर्वेऽप्येताः प्रकृतयो बध्यन्त इति ॥ १०० ॥ ताभ्यश्च प्रकृतिभ्यः स्थितिविशेषाः-अन्तर्मुहूर्त्त-समयाधिकान्तर्मुहूर्त्त-द्विसमयाधिकान्तर्मुहूर्त्तलक्षणाः, असङ्ख्यातगुणा भवन्ति ज्ञातव्याः, एकैकस्याः प्रकृतेरसङ्ख्येयैः स्थितिविशेषैर्बध्यमानत्वात्। एकमेव हि प्रकृतिभेदं कश्चिज्जीवोऽन्येन स्थितिविशेषेण बध्नाति, अन्यस्त्वन्येन, अपरस्त्वन्येन इत्येवमेकस्याऽपि प्रकृतिभेदस्यासङ्ख्याताः स्थितिविशेषा भवन्ति। अतः प्रकृतिभेदेभ्यः स्थितिविशेषा असङ्ख्यातगुणा इति। 'ठिइबन्धे-' त्यादि स्थितिः कर्मणोऽवस्थानशक्तिः, तस्या बन्धः स्थितिबन्धः, अध्यवसानानि-अध्यवसायास्त्विह जीवपरिणामविशेषाः।

तिष्ठन्ति जीवा येष्विति स्थानानि, अध्यवसाया एव स्थानानि अध्यवसायस्थानानि, स्थितिबन्धस्य कारणभूतान्यध्यवसायस्थानानि स्थितिबन्धाध्यवसायस्थानान्यनन्तरगाथोक्तस्वरूपाणि, स्थितिविशेषेभ्यस्तान्यसङ्ख्येयगुणानि, यतः सर्वजघन्योऽपि स्थितिविशेषोऽसङ्ख्येयलोकाकाशप्रदेशप्रमाणैरध्यवसायस्थानैर्जन्यते, उत्तरे तु स्थितिविशेषास्तैरेव यथोत्तरविशेषवृद्धैर्जन्यन्तेऽतस्तेभ्यस्तान्यसङ्ख्यातगुणानि सिद्धानि ॥ १०१ ॥ 'तेसिमसंखेज्ज'इत्यादि इह 'अनुभागे' इत्यत्र एकारोऽलाक्षणिको 'बन्धठाणाणी'त्यत्रापि अध्यवसायशब्दो लुप्तो द्रष्टव्यो, 'हुंती'त्यस्यापि व्यवहितसम्बन्धः। ततश्चानु पश्चात् बन्धोत्तरकालम्, भज्यते सेव्यतेऽनुभूयत इत्यनुभागो रसस्तस्य बन्धोऽनुभागबन्धः, अध्यवसायस्थानानीतिपूर्ववत्। अनुभागबन्धस्य कारणभूतान्यध्यवसायस्थानान्यनुभागबन्धाध्यवसायस्थानानि। स्थितिबन्धाध्यवसायस्थानेभ्यस्तान्यसङ्ख्येयगुणानि भवन्ति। स्थितिबन्धाध्यवसायस्थानं ह्येकैकमन्तर्मुहूर्तमुक्तम्। अनुभागबन्धाध्यवसायस्थानं त्वेकैकं जघन्यतस्सामयिकमुत्कृष्टतस्त्वष्टसामयिकान्तमेवोक्तम् अत एकस्मिन्नपि नगरकल्पे स्थितिबन्धाध्यवसायस्थाने तदन्तर्गतानि नगरान्तर्गतोच्चैर्नीचगृहकल्पानि नानाजीवान् कालभेदेनैकजीवं वा समाश्रित्यासङ्ख्येयलोकाकाशप्रदेशप्रमाणान्यनुभागबन्धाध्यवसायस्थानानि भवन्ति। तथाहि—जघन्यस्थितिजनकानामपि स्थितिबन्धाध्यवसायस्थानानां मध्ये यदाद्यं सर्वलघुस्थितिबन्धाध्यवसायस्थानं तस्मिन्नपि देशक्षेत्रकालभावजीवभेदानामसङ्ख्येयलोकाकाशप्रदेशप्रमाणान्यनुभागबन्धाध्यवसायस्थानानि प्राप्यन्ते, द्वितीयादिषु तान्यप्यधिकान्यधिकतराणि प्राप्यन्ते इति सर्वेष्वपि स्थितिबन्धाध्यवसायस्थानेषु तेषु भावना कार्या। अतस्तेभ्यस्तान्यसङ्ख्येयगुणानीति स्थितम् 'एत्तो अणन्तगुणिआ' इत्यादि। एतेभ्योऽनुभागबन्धाध्यवसायस्थानेभ्यः कर्मस्कन्धा

अनुभागबन्धाध्यवसाय-
अनन्तगुणा गुणितव्याः, यत एते सिद्धानन्तभागेऽभव्येभ्योऽनन्तगुणाः प्रतिसमयं गृह्यन्त इत्युक्तम्, ॥१०२॥ 'अविभागे'त्यादि इह क्षीर-
स्थानानि तु सर्वाण्यप्यसङ्ख्येयान्येवोक्तानि, अत एतेभ्यः तेषामनन्तगुणता सिद्धैवेति परमाणोः सम्बन्धी
निम्बरसाद्यधिश्रयणैरिवानुभागबन्धाध्यवसायस्थानैः तन्दुलेष्विव कर्मपुद्गलेषु रसो जन्यते, स चैकस्यापि भागो नोत्वि-
केवलिप्रज्ञया च्छिद्यमानः सर्वजीवानामनन्तगुणानविभागपलिच्छेदान् प्रयच्छति । यस्माद्भागादतिसूक्ष्मतयाऽन्यो सर्वजीवानन्त-
द्यति, सोऽविभागपलिच्छेद उच्यते । एवंभूतस्यानुभागस्याविभागाः पलिच्छेदाः सर्वकर्मस्कन्धेषु प्रतिपरमाणु ॥१॥
गुणाः प्राप्यन्ते । तदुक्तम्—" गहणसमयम्मि जीवो उप्पाएइ उ गुणे सपच्चयओ । सव्वजियाणन्तगुणे कम्मपएसेसु सव्वेसु ॥१॥
गुणशब्देनेहाविभागपलिच्छेदा उच्यन्ते, शेषं सुगमम् । कर्म्मप्रदेशाः पुनः प्रतिस्कन्धं सर्वेऽपि सिद्धानामप्यनन्तभाग एव
वर्त्तन्ते अतस्तेभ्योऽप्यविभागपलिच्छेदा अनन्तगुणाः सिद्धाः । नन्वेतदल्पबहुत्वं किं त्वया स्वत एवोत्प्रेक्षितमथान्येन केनचि-
त्कथितमित्याह 'सुयपवरो' इत्यादि । दृष्टीनां समस्तदर्शनानां वादो विचारो यत्र स दृष्टिवादः, श्रुतं—द्वादशाङ्गम्, तन्मध्येऽने
कातिशयसमन्वितत्वेन प्रवरः—प्रधानः, स चासौ दृष्टिवादश्च श्रुतप्रवरदृष्टिवादः तस्मिन् श्रुतप्रवरदृष्टिवादे, विशिष्टमतयः—तीर्थक-
रगणधराः, परिकथयन्त्येतत्, न पुनः मया स्वयमुत्प्रेक्षितमिति ॥ १०३ ॥ व्याख्यातं प्रस्तुतगाथाचतुष्टयम् । तद्व्याख्याने
च समाप्तः प्रदेशबन्धः, तत्समाप्तौ च भणितं बन्धविधानद्वारम्, तद्भणनेनैव समाप्तं ग्रन्थप्रारम्भे यत्प्रतिज्ञातं 'उवयोगजोगविहि'

१ ग्रहणसमये जीव उत्पादयति तु गुणान् स्वप्रत्ययत । सर्वजीवानन्तगुणान् कर्मप्रदेशेषु सर्वेषु ॥ १ ॥ २ 'णियपरि-
णामेण जणइरसाणू (निजपरिणामेन जनयति रसाणून्) इति सि । ३ 'पय विषक्ति 'सि.

इत्यादि द्वारगाथाद्वयमिति ॥ साम्प्रतं निष्पन्नत्वबापनिस्तीर्णेदमविज्ञो ग्रन्थकार उपसंहरन्नाह–

भा० सेढिअसंखेज्जपभिइगाहचउक्कंति तासि भावणिया । समयपसिद्धिगआगास–सेढि असंखभागम्मि ॥ ५८ ॥ मत्तियमेत्तपएसा मत्तियमेत्ताणि जोगठाणाणि । ताणि य सव्वाणि उत्तरपयभयकरवाएँ थोवाणि ॥ ५९ ॥ तेहि असंखगुणाओ पयडीओ हुंति जेण एक्केक्के । जोगट्ठाणे नाणाजीवेहि वट्टमाणेहि ॥ ६० ॥ कालभेएणं एगेण यावि जीवेण कम्मपयडीओ । रागाओ बज्झंते इय पयडीणं असंखत्तं ॥ ६१ ॥ पयडीण असंखगुणा ठिई विसेसाउ तस्सरूवमिणं । ठिइबंधं तो कोई अंतमुहुत्तं पबंधेइ ॥ ६२ ॥ तंपि य समयब्भहियं कोई दुसमयहियं पबंधेइ । केवि पुणो बहु इच्चाइ लक्खणा ठिइविसेसाउ ॥६३॥ भवति यदि पयडी एक्केक्का त्ति हु असंखमाणेहि । ठिइविसेसेहि बज्झइ जेणं एगा त्ति किर पयडी ॥६४॥ कोइ जिओ अन्नेण ठिइविसेसेण बंधइ अओ । अन्नेण ठिइविसेसेण एवमाईहि भेएहि ॥६५॥ एगाइएवि पयडीए ठिइविसेसा उ हुंतसंखेज्जा । पयडि सया नो एवं च ठिइविसेसा असंखेज्जा ॥ ६६ ॥ तेहि गो ठिइबंध–ज्झवसाणाऊ असंखगुणियाओ । तेसि सरूवं तु इमं समायभणिया उ जीवस्स ॥६७॥ जे परिणामविसेसा तेसि ठाणाणि जाणि किर हुंति । ताणि य ठिइबंधज्झ-वसाणाणि भणंति समयम्मि ॥६८॥ ताणिय कारणभूया ठिईपबंधस्स कम्मरूवस्स । ताणि असंखगुणाई ठिइविसेसाण भणियाणि ॥६९॥ जेण अजहन्नो त्ति हु ठिईविसेसो असंखलोयाण । आगासपएसमाण समेहि–ज्झवसाणठाणेहि ॥ ७० ॥ निप्फाइज्जइ तस्सुत्तरतरा तेहि येव ठाणेहि । कमसो विसेसवुड्ढेहि ठिइविसेसा जणिज्जंति ॥ ७१ ॥ तो तेहिंतो ताणिय अस्संखगुणाणि हुंति सिद्धाणि । तेसि असंखाणुभागबंध–ज्झवसायठाणाओ ॥ ७२ ॥ अणुभवज्झबंधोत्तरकाले भज्जंति अणुभवियमिति ।

जेणं ते अणुभागा रसत्ति जो तेसि किर बंधो ॥ ७३ ॥ सो किर अणुभागबंधो तस्सज्झवसायठाणया ते उ । अणुभागबंध-
ज्झवसाय-ठाणया कारणभूयाणि ॥७४॥ कज्जस्स अणुभाग-बंधनामस्स हुतसंखगुणा । ठिइबंधज्झवसाणं जेणं एगेगमवि
भणियं ॥ ७५ ॥ अंतमुहुत्तपमाणं बंधज्झवसायठाणयं तु पुणा । अणुभागाणेक्केकं जहन्नयं होइ सामइयं ॥ ७६ ॥ उक्किट्ठओ
उ अट्ठ-समयमाणं जेण ठिइबंधस्स । अज्झवसायट्ठाणे एगम्मि वि नगरसरिसम्मि ॥ ७७ ॥ तमज्झगया अणुभाग-
बंधज्झवसायठाणया हुंति । नगरंतोगयबहु उ-चनीयआवाससरिसाणि ॥ ७८ ॥ नाणाजीवे आसज्ज-कालभेएण एगजीवं
वा ॥ आसज्जासंखेज्जगलोगागासप्पएसाणं ॥७९॥ परिमाणाणि अणुभाग-बंधज्झवसायाणिय हुंति। तेसिं ठवणसरूवं बुहेहि
चुद्धीउ विन्नेयं ॥८०॥ तह ठिइबंधज्झवसाय-ठाणमज्झे जहन्नगठिईए । जणगाण वि जं पढमं सवेसिं लहुयरं ठाणं ॥८१॥
ठिइबंधज्झवसायाण संतियं तम्मि देसखेत्ताणं । तह कालभावजीवाण भेयउ असंखलोयाणं ॥ ८२ ॥ आगासपएससमा ठाणा
अणुभागबंधया हुंति । ठिइबंधट्ठाणेसुं दुइयाइसु अहिगअहिगाणि ॥ ८३ ॥ अणुभागट्ठाणाणिय लब्भंति तओ उ तेहि रूर.
ताणि । असंखेज्जगुणाइं अणुभागट्ठाणाणि इं सिद्ध ॥ ८४ ॥ एएसिंणंतगुणिया कम्मपएसा भवंति लेगेह । सिद्धाणणंतभागे
अभवेहि अणंतगुणिया उ ॥८५॥ पइसमयं जीवेहिं य संगहिज्जंति आगमे भणियं। अणुभागज्झवसाय-ट्ठाणाणि य पुण समत्था
वि ॥ ८६ ॥ अससंखेया भणिया तेहिं तो जेण कम्मदेसाण । अणंतगुणत्तं सिद्धं एत्तोऽविभागपलिच्छेया ॥ ८७ ॥ अणंत-
गुणिया हवंति इह दिठंतो इमो उ विन्नेओ । जह सरसखीरपिचुमंदतणयरसधालियासु इव ॥ ८८ ॥ अणुभागबंधज्झवसाय-
ट्ठाणेहिं तु तंदुलेसु इव । कम्मपरमाणुसु रसो जणयइ एगेगयस्स वि य ॥८९॥ सो परमाणुस्सरसो केवलिपन्नाए छिज्जमाणो

उ। सवजियणंतगुणिया जत्थ अविभागपलिच्छेया ॥९०॥ अइसुहुमयाइ जाओ भागाओ नेव उट्ठई भंगो। अन्नो सो अविभागपलिच्छेओ होइ नायव्वो ॥९१॥ अणुभागस्स विभागो पलिछेया एयरूवया एए। परमाणुं परमाणुं पइ सवेसु कम्मखंधेसुं ॥ ९२ ॥ सवेसिं जीवाणं भवत्थअभवत्थयाणणंतगुणा। अविभागपलिच्छेया संपत्ता तो जओ भणियं ॥ ९३ ॥ गहणसमयम्मि जीवो उप्पाएइ उ गुणे सपच्चयओ। सवजियाणंतगुणे कम्मपएसेसु सवेसु ॥ ९४ ॥ कम्माण पएसा पुण सिद्धाणणंतयम्मि भागम्मि। सवे वि हु वट्टंते अओ उ कम्मपएसाणं ॥९५॥ अविभागपलिच्छेयाणंतगुणा हुंति इई सिद्धमिणं। एत्तो अप्पबहुत्तं गंथे जत्थत्थि तं आह ॥ ९६ ॥ सुयपवरदिट्ठिवाए गाहोत्तरद्धेण तत्थ सुयपवरं। उत्तमसुत्तं जं किर दिट्ठीवायाभिहं अंगं ॥ ९७ ॥ तम्मि विसिट्ठमईया जिणगणहरपभिइया परिकहंति। इय सेढिअसंखाईगाहाचउगंपि ववखायं ॥९८॥ ववखाणे य समत्थिओ उ एसो,पएसबंधो त्ति। तस्स समत्तीएँ गयं बंधविहाणाभिहं दारं ॥ ९९ ॥ तब्भणणा उवओगा जोगविहीपभिइदारगाहदुगं। गंथारंभावसरे जं भणियं तंपि .ववखायं ॥ ११०० ॥ एत्तो तिन्नपइन्नो पकरणकारो इमस्स गयस्स। आहुवसंहरणत्थं एसो बंध इइ गाहाहिं ॥ १ ॥

एसो बन्धसमासो पिंडुक्खेवेण वन्निओ कोवि। कम्मप्पवायसुयसागरस्स निस्संदमेत्तो य ॥ १०४ ॥

टी०एषः पूर्वोक्तो बन्धसमासोः- बन्धसंक्षेपः, कोऽपि-कियन्मात्रोऽपि, वर्णितः-भणितः, 'केनेत्याह पिंडुक्खेवेण' त्ति पिण्डस्य-पिण्डितस्य यथावस्थितस्य, कर्मप्रकृतिश्रुतविशेषादुत्क्षेपः तेन, एतदुक्तं भवति-यथाकर्मप्रकृतौ वर्णितः तथैव मयापि, न स्वमनीषिकया। कथंभूतो बन्धसमास इत्याह-जलधरादीनामिव निष्पन्दमात्रोऽत्यल्प इत्युक्तं भवति। कस्य निष्पन्द

इत्याह—कर्म्मण। प्रवादः—प्रकृष्टं भणनं यत्र तत् कर्म्मप्रवादः, कर्म्मप्रकृतिलक्षणश्रुतं तदेव महत्त्वात् सागरः कर्म्मप्रवादश्रुतसागरः तस्येति। अस्य च बन्धसमासस्याल्पस्य तस्मादुद्धृत्य भणने कारणमादावेवोक्तमिति गाथार्थः॥ १०४॥ इदानीमाचार्य 'एवात्मनो गर्वं परिजिहीर्षुर्मत्तोऽप्यन्ये निपुणमतयो जिनशासनेऽनेकशः सन्तीति दर्शयितुं छद्मस्थस्य बुद्धिः कदाचिदन्यथापि भवतीत्येतच्चप्रचिकटयिषुराह—

भा० एसो बंधसमासो बंधविहाणस्स कोइ संखेवो। पडुक्खेवेणं वन्निओ त्ति एयस्स एसत्थो॥ २॥ कम्मप्पयडिगुयाओ पिंडस्स य सिंहियस्स बंधस्स। जहठियसरूवगस्स य इय पज्जायंतरगयस्स॥३॥ उक्खेवो उद्धारो पिंडुक्खेवो त्ति तेण संमिलिओ। पज्जाओ एसो किर जहठियउद्धाररूवेण॥४॥ कम्मप्पयडिसुयाओ इमं कइमेत्तो य वन्निओ भणिओ। नो समईए किंचि भणिओ एसोत्थ परमत्थो॥५॥ कम्मस्स पगरिसेणं वाओ भणणंति जत्थ तं भणियं। कम्मपवायं कम्मप्पयडिसुयं तंपि गरुयत्ता॥६॥ सागरमिव तस्सेमो बंधसमासो निसंदमेत्तो उ। भणिओ इई संबंधो अह गव्वं परिहरिउकामो(य)॥७॥

बन्धविहाणसमासो रइओ अप्पसुयमन्दमइणा उ। संबन्धमोक्खनिउणा पूरेऊणं परिकहिं तु॥ १०५॥

टी० बन्धस्य प्रकृत्यादेः, विधानानि-भेदाः, तेषां समासः—संक्षेपः, उक्तविधिना रचितो ग्रथितो मयेति गम्यते, कथं (भूतेन मयेत्याह-'अप्पसुय' त्ति प्रसिद्ध) शब्दार्थोऽल्पश्रुतेन, तथाभूतोऽपि कश्चित् प्रज्ञया तीक्ष्णो भवतीत्याह—मन्दमतिना च ततो ·विज्ञापयाम्यहं तं मदुक्तं बन्धसमासं सिद्धान्तभणितात् वद्वैपरीत्यसंभवे ऊनातिरिक्तसंभवे च 'बन्ध (मोक्खनिउण' त्ति बन्धः—उक्तस्वरूपः, मोक्षः—बन्धाभावस्वरूपस्तत्र) निपुणाः जिनवचनान्तस्तत्त्वकुशलाः पूरयित्वा समञ्जसं कु-

ता, शिष्येभ्यः परिकथयन्तु—प्ररूपयन्त्विति गाथार्थः ॥ १०५ ॥ प्रस्तुतग्रन्थाध्ययने श्रोतृजनस्य यत्फलं तद्दर्शयितुमाह—

भा० पगरणकत्ता पभणइ बंधविहाणप्पयाइया गाहा। सा सुगमा नवरं पुण बंधविहाणा उ बंधस्स ॥ ८ ॥ भेया तेसिं समासो संखेवो अह इमस्स गंथस्स। सोयाराणं सुयणंमि जं फलं तं निसामेह ॥ ९ ॥

इयकम्मपयडिपगयं संखेवुद्दिट्ठनिच्छियमहत्थं। जो उवजुंजइ बहुसो सो नाही बंधमोक्खत्थं ॥१०६॥

टी० इति पूर्वोक्तं कर्मप्रकृतिश्रुतप्रगतं—कर्म्मप्रकृतिश्रुतान्तर्गतं शतकमिति शेषः। कथम्भूतमित्याह—'संक्षेपोद्दिष्टं' संक्षेपकथितम्। पुनः कथम्भूतमित्याह निश्चितः प्रमाणाव्यभिचारी महानपरिमितोऽर्थो यत्र तं निश्चितमहार्थम्। अनेन हि परिज्ञानेन दृष्टिवादाद्यन्तर्गतः सर्वोऽपि कर्म्मविचारो एतदनुसारतो ज्ञायत इत्यस्य संक्षेपोद्दिष्टस्यापि महार्थता। एवम्भूतं चामुं यो बहुशः 'उपयोक्ष्यते' अध्ययनगुणनश्रवणचिन्तनधारणव्याख्यानादिद्वारेण पुनः पुनरुपयोगं नेष्यति, स बन्धस्य पूर्वोक्तस्वरूपस्य मोक्षस्य च कर्म्माष्टकप्रध्वंसलक्षणस्यार्थं ज्ञास्यति। ज्ञात्वा च विशुद्धमानान्तःकरणो बन्धस्य सर्वदुःखरूपत्वात् कारणानां परित्यागे, मोक्षस्य च सर्वोत्तमसुखरूपत्वात् तत्कारणानामुपादाने यत्नं करिष्यति। तं च कृत्वा प्रज्वलितप्रकृष्टबोधप्रदीपनिराकृतमोहान्धकारनिकरः समुच्छलितालब्धपूर्वदुर्वारवीर्यप्रसरः शुक्लध्यानकुठारधारासम्पातसञ्चूर्णितकर्म्मसंहतिनिगडो विपाटिताविनिबिडरागद्वेषकपाटसम्पुटो विनिर्दलितातिदुष्टसन्निहितकषायसुभटाभिमानो विनिर्गत्य चिरकृतावस्थितिसंसारचारकपृथ्वान्मुक्तजन्तुनिवासयोग्यं निःशेषभयविप्रमुक्तं निःसीमसुखसन्दोहास्पदं यावदीप्सितं सुविशुद्धं सिद्धिसौधमध्यास्त इति गाथार्थः ॥ १०६ ॥ इति विनेयहिता नाम शतकवृत्तिः समाप्ता ॥

भा० इय गाहाए एवं भावत्थं परिकहंति सुत्तधरा । जइ दिट्ठिवायअंगे अग्गेणीए- हुइयपुव्वे ॥ १० ॥ पणिविकम्म- भिहम्मि पंचमवत्थुम्मि कम्मपयडि त्ति । इय नामेण पसिद्धंति पाहुडं सुयविसेसो त्ति ॥११॥ आसि तओ ठाणाओ उद्धरिओ एस सयगगंथो त्ति । सिवसम्मसूरिणाणेगवायजयलद्धसद्देण ॥१२॥ इय कम्मपयडिपगयंति कम्मपयडीउ सुयविसेसाओ । अंतरगयंति सयगं गंथं इइ वक्कसेसो त्ति ॥१३॥ संखेवेणुद्दिट्ठं कहियं तह निच्छियं अवभिचारि । पहुयत्थंति महत्थं जो उव- जुज्जेइ बहुसो त्ति ॥ १४ ॥ जो उवओगं पुण पुण नेइस्सइ चिंतणाइदारेणं । सो नाही जाणिस्सइ अत्थं बंधस्स मोक्खस्स ॥१५॥ अत्थं परमत्थं पुण बंधो कम्माण दुक्खहेउत्ति । जीवाणं मोक्खो पुण सासयसिवमोक्खसंजणगो ॥१६॥ अत्थं च इमं नाउं बंधस्स उ कारणेण परिचाओ । मोक्खस्स कारणेणं गहणे जत्तं करिस्संति ॥ १७ ॥ तं काऊणं निद्दड्ढअट्ठकम्मिंधणा महासत्ता । निस्सेसभयविमुक्का अइरा सिद्धिं लहिस्संति ॥ १८ ॥

टी० मायोऽन्यशास्त्रदृष्टः सर्वोऽप्यर्थो मयाऽत्र संरचितः । न पुनः स्वमनीषिकया तथापि यत्किञ्चिदिह वितथम् ॥ १ ॥ सूक्ष्मतिलदृष्य लिखितं, तच्छोध्यं मय्यनुग्रहं कृत्वा । परकीयदोषगुणयो-स्त्यागोपादानविधिकुशलैः ॥ २ ॥ छद्मस्थस्य हि बुद्धिः स्खलति न कस्येह कर्मवशगस्य ? । सद्बुद्धिविरहितानां विशेषतो मद्विधासुमताम् ॥ ३ ॥ कृत्वा यद्वृत्तिमिमां पुण्यं समुपार्जितं मया तेन । मुक्तिमचिरेण लभतां क्षपितरजाः सर्वभव्यजनः ॥ ४ ॥

श्रीमश्नवाहनकुलाम्बुनिधिप्रसूतः, क्षोणीतलप्रथितकीर्त्तिरुदीर्णशाखः । विभ्रमसाधितविकलिपतवस्तुरुच्चै- श्छायाश्रितमचुरनिर्वृतभव्यजन्तुः ॥१॥ ज्ञानादिकुसुमनिचितः फलितः श्रीमन्मुनीन्द्रफलवृन्दैः । कल्पद्रुम इव गच्छः श्रीहर्षपुरीयनामास्ति ॥ २ ॥

एतस्मिन् गुणरत्नरोहणगिरिर्गाम्भीर्यपाथोनिधि-स्तुङ्गत्वप्रकृतिक्षमाधरपतिः सौम्यत्वतारापतिः । सम्यग्ज्ञानविशुद्धसंयमतपः-स्वाचारचर्यानिधिः, शान्तः श्रीजयसिंहसूरिरभवन्निःसङ्गचूडामणिः ॥ ३ ॥ रत्नाकरादिवैतस्मा-च्छिष्यरत्नं बभूव तत् । स वागीशोऽपि नो मन्ये, यद्गुणग्रहणे प्रभुः ॥ ४ ॥ श्रीवीरदेवविबुधैः, सन्मन्त्राद्यतिशयप्रचूरतोयैः । द्रुम इव यः संसिक्तः कस्तद्गुणकीर्त्तने विबुधः ॥ ५ ॥ तथाहि—आज्ञा यस्य नरेश्वरैरपि शिरस्यारोप्यते सादरं, यं दृष्ट्वापि मुदं व्रजन्ति परमां प्रायोऽतिदुष्टा अपि । यद्वक्त्राम्बुधिनिर्यदुज्ज्वलवचःपीयूषपानोद्यतैर्गीर्वाणैरिव दुग्धसिन्धुमथने तृप्तिर्न, लेभे जनैः ॥ ६ ॥ कृत्वा येन तपः सुदुष्करतरं विश्वं प्रबोध्य प्रभोस्तीर्थं सर्वविदः प्रभावितमिदं तैस्तैः स्वकीयैर्गुणैः । शुक्लीकुर्वदशेषविश्वकुहरं भव्यैर्निबद्धस्पृहं, यस्याशास्वनिवारितं विचरति श्वेतांशुगौरं यशः ॥ ७ ॥ यमुनाप्रवाहविमल- श्रीमन्मुनिचन्द्रसूरिसम्पर्कात् । अमरसरितेव सकलं, पवित्रितं येन भुवनतलम् ॥ ८ ॥ विस्फूर्जत्कलिकालदुस्तरतमःसन्तानलुप्तस्थितिः, सूर्येणेव विवेकभूधर-शिरस्यासाद्य येनोदयम् । सम्यग्ज्ञानकरैश्चिरन्तनमुनिक्षुण्णः समुद्द्योतितो, मार्गः सोऽभयदेवसूरिरभवत्तेभ्यः प्रसिद्धो भुवि ॥ ९ ॥ तच्छिष्यलवप्रायै-रगीतार्थैरपि शिष्टजनतुष्ट्यै । श्रीहेमचन्द्रसूरिभि-रियमनुरचिता शतकवृत्तिः ॥ १० ॥

भा० सिरिवद्धमाणगणहर-सीसेहि विहारुगेहि सुहबोहं ॥ एयं सिरिचक्केसर-सूरीहिं सयगगुरुभासं ॥ १९ ॥ गुणहरगुणधरनामगनिययविणेयस्स वयणओ रइयं । सुयणे सुणंतु जाणंतु बुहजणा तह विसोहंतु ॥ २० ॥ सत्तनवरुद्द-मियवच्छरम्मि विक्कमनिवाउ वट्टंते । कत्तियचवमासदिणे गोल्लविसयविसेसणे नयरे ॥ २१ ॥ दहिवद्दमी सिरिसिद्धरायभूवइ-पसायगेहस्स । अचलदेवनिवइणो सुहरज्जे वट्टमाणम्मि ॥ २२ ॥ निप्फत्तिमुवगयमिणं ता नंदउ जाव सिद्धिसुहमूले । तिय-

लोकपायडजसो जिणवरधम्मो जए जयइ ॥ २३ ॥ एवं आदितगाथा श्लोकमानेन १४१३ श्रीसंविग्नविहारिश्रीवर्द्धमानसूरि-
पादपद्मोपजीविश्रीचक्रेश्वरसूरिविरचितं शतकबृहद्भाष्यं समाप्तमिति ।

## ॥ अथ श्री लघुशतकभाष्यम् ॥

णमिऊण जिणं वुच्छामि बन्धसयगे चउण्ह बन्धाणं । दाराणि जहा संखामित्तनिविट्ठा उ पयडीओ ॥ १ ॥ पढम-
पए पगइए ( पगइबन्धे ) साइआई १ भुयगारमाइ २ सामित्तं । साईआई १ सुहअसुहपच्चयं २ मापिणो ३ वीए ॥ २ ॥
तह साइआइ १ पच्चय २ सुहासुहं ३ सामि ४ घाइय अघाई ५ । भन्नंति ठाण ६ पच्चय ७ विवागभेया ८ य रसबन्धे ॥ ३ ॥
कम्मपएसग्गहणविहि १ भाग तह साइआइ ३ सामित्तं ४ । भन्नइ पएमबन्धे ठिइबन्धऽट्ठारस इमाओ ॥ ४ ॥ संजलण ४
नाण ५ दंसणचउक्क ४ विग्घाणि ५ पंन्नरस पया । नरतिरिनरयाउ३विगल३सुहुमतिग३विउविछक्काणि ६ ॥ ५ । छेवट्ठं
उज्जोयं तिरि२ओरालिय२दुगाणि छंप्पयडी । तिंन्नि पयडी उ आयवथावरएगिंदिजाईओ ॥ ६ ॥ छंप्पयडी उ विउवियछक्कं
इत्तोऽणुभागबंधंमि । अगुरुलहु कम्मतेयगसुवन्न चउ निमिण अट्ठ इमा ॥ ७ ॥ मिच्छ कसाय१६ दुगुंछा भय दंसण ९ नाण
५ विग्घ ५ उवघाया । असुभा चउ वन्नाई तेयालीसा इमा होइ ॥८॥ सायतिरिमणुसुराउग३नरदुग २ सुरदुग२पणिंदि तणु-

१ स्थितिबन्धे, २ 'अट्ठारसपयडीणं'त्ति पञ्चपञ्चाशत्तमगाथायामुक्ता अष्टादश प्रकृतयः, ३ ४-५ 'पन्नरसण्ह'त्ति एक-
षष्ठितमगाथोक्ताः प्रकृतयः, ६ 'छण्हमसन्नी'त्ति चतुःषष्टितमगाथोक्ताः, ७-८ 'अट्ठण्ह'त्ति सप्तषष्टितमगाथोक्ताः,

पणग । ५ । ( समचउरंसअगुरुलहुसुखगइपरघायउज्जोयं ॥ ९॥ तित्थगरोस्सायवनिम्मिणुवंगाणि-तह, आइसंघयणं। सुप-सत्थसचउतसदसोच्चगोयंति वायाला ॥ १० ॥ [ समचउगुरुलहुसुखगइतसाइदसगं इय, वायालीस सुहपयडी ॥९॥ ]
नरयाउ नरयतिरिदुग ( इग ) विगलजाइअसुहखगइऽसाया। उवघायथावरदसगमपढमसंठाणसंघयणा ॥ १० ॥ नीय तह, सम्मामोसरहियथाईणि वहऽणिट्ठवन्नाई । इय असुभा वांसीई पणिंदिउस्सास देवदुगा ॥ ११ ॥ तणुअंगुवंगओरालियरेहिं तसदससायसमचउरं । निमिणुच्च तित्थपरघायअगुरुवरखगइवन्नचऊ ॥ १२ ॥ इय वंत्तीसेगोरस नरतिरिनरयाउविगल-सुहुमतिगा । नरयदुग पंचे आइमसंघयणमणुयदु दुउरालं ॥ १३ ॥ आयवइगिंदियावरतीन्न उ छेवट्ठ तिरिदुगा तिन्नि । चउदस चउ दंसण नाणविग्घपण पुरिससंजलणा॥१४॥ इक्कारस निद्दुगं कुवन्नचउहासरइभयदुगंछा। तह उवघायं सोलस मिच्छाइमनारसकसाया ॥ १५ ॥ तह थीणतिगं सोलस विउविछक्कं (अट्ठग) उ सुहुमविगलतिगा । सुरनारयाण ( नरतिरियाऊ ) उज्जोय उरलदुगविन्नि मेचिरिसा ( सुरनिरया ) ॥ १६॥ तिरियदुगनीयतिन्नि उ मन्दरसाओ कुणंति तमतमगा । तसबहु ( चउ ) सुवन्नचउ तेयकम्मपंचिंदि परघाया ॥ १७ ॥ अगुरुलहु निमिणसासा पनरस नपुमिच्छहुन्नि जससाया ।

